वर्ष २
संख्या २

ओ३म्

Vol. 2
Number 2

काश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

त्रैमासिकं पत्रम्

# 'श्रीः'



Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

## SRINAGAR, KASHMIR.

श्रीनगर आश्विन १६६०

*Srinagar October 1933*

सम्पादकौ

पं० नित्यानन्दः शास्त्री    पं० कुलभूषणः

वार्षिक मूल्य १।) एक रुपया चार आने ।

# विषय सूची

लेखानामुत्तरदायिनौ न सम्पादकौ। सर्वेषां लेखाः तेषामे भाषया तन्मतानुसारेणैव प्रकाश्यन्ते।



भीमसेन विद्यालंकार मुद्रक के अधिकार से नवयुग प्रिंटिंग प्रेस, १७ मोहनलाल रोड में मुद्रित।

ओ३म्

# श्रीः

वर्ष २ | आश्विन सम्वत् १९९० वि० तदनुसार सितम्बर १९३३ | पूर्ण संख्या ६ संख्या २

## संस्कृतवाङ्मयपरिचयः

( ४ )

( स्वामी वेदानन्द तीर्थः )

### ईश्वरः

एवं किल पूर्वपक्षिणा बहुदेववादपक्षे सुदृढं स्थापिते वयं ब्रूमः, सत्यम्, अंग, सत्यम्, वेदः सुतरां बहुदेववादी, अग्निवाय्वादयो बहवो देवाः वेदे प्रतिपादिताः, तेषां महिमा गरिमा च सुगीतौ तत्र भगवति वेदे । किन्तु देवतत्त्वानभिज्ञो भवान् भणितवान् यत्पूर्वमभाषीः। कथं तच्चेत् ? अग्रे वक्ष्यामः । इदानीं तु त्वया पूर्वमुदाहृतेषु मन्त्रेषु अद्वितीयस्यैकस्य परमतत्त्ववाच्यस्य देवाधिदेवस्य नानाभिधाना-भिधेयस्य परेशस्योपासनादिकं विहितमस्ति खलु इत्येव प्रदर्श्यते । तद्यथा—

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ॥ यजु० ३२।१ ॥

पूर्वाध्यायसमाम्नातं पुरुषमभिलक्ष्यायं मन्त्रो वदति—स पुरुषशब्द वाच्य एव अग्न्यादित्यवायु चन्द्रमश्शुक्रब्रह्माप्प्रजापति—नामाभिधेयः । दाशतय्येपि अस्ति काचिदृगेतस्यार्थस्याभिवादिनी । तद्यथा—

इन्द्रं मित्रं वरुणमग्निमाहु-
रथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्य-
ग्निं यमं मातरिश्वानमाहुः ॥ ऋ० १।१६४।४६॥

अत्र तु स्पष्टमभिहितमस्ति—'एक सद् विप्रा बहुधा वदन्ति' इति । अस्ति लोकेपि तस्याचिन्त्यस्याप्रमेयस्य सर्वेश्वरस्य नानाभिधानैर्व्यवहारः । कश्चित्तं परमात्मेति अपरः 'प्रभुरिति, अन्यः जगदीश इति, इतरः स्वामीति नामभिःस्तौति प्रार्थयत उपास्ते च । यद्यपि साधारणतया प्राकृता जना नैव जानन्ति तस्य नाम्नो अभिप्रायादिकम् । वेदे तु समस्ति कश्चिद्विशेषः—सर्वाण्यभिधानानि कंचित्प्रभोर्गुणविशेषमभिलक्ष्य प्रवृत्तानीति । सोयं विशेषः वेदाध्यायिनां परमात्माराधकानां च महोपकारकः । यद्यद्गुणसंपादनायाराधकः प्रभुं प्रार्थयितुमीहते, तत्तद्गुणमभिलक्ष्य प्रवृत्तमीशाभिधानं पुरस्कृत्य आत्माभिप्रायमाविष्करोति । एवमेवाभिप्रायं मनसिकृत्याह तत्र भवान् श्रीयास्काचार्य्यः निरुक्ते दैवतकाण्डोपक्रमे—"यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्त्स्तुतिं प्रयुक्ते, तद्दैवतः स मन्त्रः" इति ।

न केवलमियमस्माकं मतिः, अपितु पाश्चात्यानां दोषज्ञानामपीदं सम्मतम् । यथाह होर्विट्ज़महाभागः—

The Vedas declare that God is one, though Hebe named Indra, Agni, Varuna. (Short History of Indian Literature by E. Horwitz. p. 10.)

वेदा अभिदधति—परमात्मा एक एव, यद्यपि नानानामानि तस्य इति।

इत्थमन्तरङ्गबहिरङ्गप्रमाणैः समासतो बाढं निरूपितम्—वेदे परमतत्त्वमेकमेव प्रतिपादितमिति।

किन्तु सर्वत्र वेदे अग्न्यादीनि पदानि परतत्त्ववाचकानीति न ब्रूमः। अपितु यत्र अनन्तशक्तिमत्ता, जगदुत्पादकता, सर्वेशिता, सर्वज्ञता, चेत्यादयो गुणा निरूपिता स्तत्र अवश्यमग्न्यादयो ब्रह्मणो वाचकाः शब्दाः। यत्र तु एतेषामुत्पत्त्यादिकं चर्चितम्, तत्र ते परेश भिन्नस्य कस्यचिद्भौतिकस्य तत्त्वस्य जीवस्य वा वाचकाः इति ध्येयम्। आह चैनमर्थं तत्र भवान् श्रीमान् दयानन्द सरस्वती स्वामी स्वीये निरूपमे सत्यार्थप्रकाशे प्रथमे समुल्लासे। (क्रमशः)

---

# भगवन्तो वेदाः स्त्रीणां स्थितिश्च

## ( २ )

( श्री पं० प्रियव्रतो वेदवाचस्पतिः )

अर्थात् "युष्माकं स्त्रियो युष्माकं कृते क्षेत्राणि सन्ति, युष्माकं क्षेत्रेषु यर्ह्यपि रोचेत गच्छत।" "पुमांसः स्त्रीणामधिवर्तन्ते।" मनुस्तूद्घोषयतिः—

अस्वतन्त्राः स्त्रियः कार्या पुरुषैःस्वैर्दिवानिशम्
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥
सूक्ष्मेभ्योपि प्रसंगेभ्यः स्त्रियो रक्ष्या विशेषतः
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम्
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥ मनु० ९।२,५,६,

अन्येपि भारतीय धर्मशास्त्रप्रणेतारः प्रायो मनुमेवानुवर्त्तन्ते।

अहन्तु विश्वसिमि धर्मशास्त्रकाराणामीदृश्य आज्ञा एव जनतासु प्रविश्य तासां मनःसु नारीणां विषयेऽश्रद्धाबुद्धिमुत्पाद्य पुंसस्तासामुपरि

तांस्तान् कुत्सिताचारानाचरितुं ताभिः पशुभिरिव च व्यवहर्तुं प्रैरयन्। भारते त्वेवंविधानादरस्योपेक्षायाश्च नारीणां मन्ये वेदानामप्रचार एव कारणम्। वेदानुत्थाप्य यदि वयमवलोकामहे आश्चर्य्यचकितं चेतो जायते नारीणां परमोच्चामादर्शस्थितिं तत्र वर्णितामालक्ष्य। विस्तर-भिया वेदोपवर्णितां नारीणां स्थितिं साकल्येन न शक्नोमि श्रीमतो दर्शयितुम्। समासेनैव किंचित् श्रीमतां समक्षमुपनतस्यामि। शिक्षा—पतिवरणम्—गृहस्थितिः—सामाजिकी स्थितिश्चेति चतुर्षु विभजामि विषयमात्मनो विभागेषु। प्रत्येकं विषये वेदानां सम्मतिं कांश्चिद् वेदमन्त्रानुद्धृत्य स्फुटयितुं यतिष्ये।

## १ शिक्षा

वेदानां पारायणं कुर्वता यत्र तत्र सूक्तेषु भूयांसो मन्त्रा एवं विधा उपलभ्यन्ते ये "स्त्री शूद्रौ नाधीयाताम्" इति मन्दानानां मतमा-मूलमुपघ्नन्ति। निदर्शन रूपेण, अथर्ववेदस्य ब्रह्मचर्य्यसूक्तं सुस्पष्ट-मादिशति—

ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्। अ० ११ । ५ । १८ ॥

अर्थात् ब्रह्मचर्य्यमुषित्वैव कन्या पतिं युवानं विन्देत। ब्रह्मचर्य्यकाले च गुर्वाश्रमे निवसन्ती कन्या गुरोः सकाशात् काः का विद्या अधिगच्छे-दिति पर्यालोचनायां तस्यैव सूक्तस्य—

इयं समित् पृथिवी द्यौर्द्वितीयोतान्तरिक्षं समिधा पृणाति।
ब्रह्मचारी समिधा मेखलया श्रमेण लोकां स्तपसा पिपर्ति ॥
अ० ११ । ५ । ४ ॥

आचार्यस्ततक्ष नभसी उभे इमे उर्वी गंभीरे पृथिवीं दिवं च।
ते रक्षति तपसा ब्रह्मचारी तस्मिन् देवाः संमनसो भवन्ति ॥
अ० ११ । ५ । ८ ॥

ब्रह्मचारीष्णंश्चरति रोदसी उभे तस्मिन् देवाः संमनसो भवन्ति।
स दाधार पृथिवीं दिवं च स आचार्य्यं तपसा पिपर्ति ॥
अ० ११ । ५ । १ ॥

इतीमे मन्त्रा द्रष्टव्याः । एषु स्पष्टं निगद्यते यद् ब्रह्मचर्य्यं चरन्त्या व्यक्त्यां पृथिव्यादित्रयाणां लोकानां सम्बन्धी विज्ञानराशिरधि-कर्त्तव्य इति । पुनश्चाथर्ववेदस्य चतुर्दशं काण्डं यद्यवलोक्येत तत्रापि सुस्पष्टमुपलभामहे ।

चित्तिरा उपबर्हणं चक्षुरा अभ्यंजनम् ।
द्यौर्भूमिः कोश आसीत् यदयात् सूर्यापतिम् ॥ अ० १४।१।६॥

अर्थात् पतिगृहं गच्छन्ती कुमारी द्युलोकात्मकं पृथिवीलोका-त्मकं च निधिं सह आदाय यायात् । अस्यायमेव स्पष्टोऽभिप्रायो यत् कन्यया एषां लोकानां विज्ञानराशि र्विवाहात् प्राक् शिक्षणीय इति । तत्रैव काण्डे पठामः—

गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि ।
अ० १४ । १ । २० ॥

एना पत्या तन्वं संस्पृशस्वाथ जिर्विर्विदथमा बदासि ॥
अ० १४ । १ । २१ ॥

इमौ मन्त्रौ नवोढां कन्यां प्रति ब्रूतो यत् सा पति गृहं गता तत्रत्यान् ज्ञानमुपदिशेदिति । अशिक्षिता कन्या कया युक्त्या 'विदथं वदिष्यति' इति भवन्त एव विचारयन्तु ।

पतिं देवि राधसे चोदयस्व । अ० ७ । ४६ । ३ ।

कुहूं देवीं सुकृतं विद्मनापसं अस्मिन् यज्ञे सुहवां जोहवीमि ।
सा नो रयिं विश्ववारं नियच्छात् ददातु वीरं शतदायमुक्थ्यम् ॥
अ० ७ । ४७ । १ ॥

रायस्पोषं चिकितुषी ददातु ॥ अ० ७ । ४७ । २ ।

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभि र्नो अस्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥
अ० ७ । ४८ । २ ॥

सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥
अ० ७ । ४८ । १ ॥

एषु मन्त्रेषु यन्निगद्यते तस्यायमभिप्रायो यत् पत्नी ज्ञानस्य कर्मणश्च वेत्री सती पतिं धनवर्द्धकेषु कर्मसु नियोजयतु श्रेष्ठ सन्ततिं च जनयतु ।

ब्रह्मापरं युज्यतां ब्रह्म पूर्वं ब्रह्मान्ततो मध्यतो ब्रह्म सर्वतः ।
अनाव्याधां देवपुरां प्रपद्य शिवा स्योना पतिलोके विराज ॥
अ० १४ । १ । ६४ ॥

अस्मिन् मन्त्रे नवोढां प्रति कथ्यते यत्त्वया पतिगृहं गतया गृहस्य सर्वासु दिक्षु ब्रह्म नाम्नो वेदस्य प्रयोगः कर्तव्यः । अस्मिन् मन्त्रेतु वेदाध्ययनस्यापि स्त्रीणामधिकारः प्रतिपाद्यते । वेदमनधीयाना नारी गृहस्य सर्वासु दिक्षु तस्य प्रयोगं कथं शक्नुयात् कर्तुम् । न केवलं कुमार्या सर्वलोकानां विज्ञानराशिरेवोपार्जनीयः अपि तु तया व्यायामादिना स्वशरीरमपि सुपुष्टं कर्त्तव्यमित्यपि वेदैरुपदिश्यते—

या सुबाहुः स्वंगुरिः सुषूमा बहुसुवरी ।
तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन । अ० ७ । ४६ । २ ॥

एतन्मन्त्रस्थाभ्यां 'सुबाहुः' 'स्वंगुरि' रिति शब्दाभ्यामस्माकं हार्दं सुस्पष्टं व्यज्यते । स्त्रीणां शिक्षाविषये संप्रति इयदेवोक्त्वा विरम्यते ।

## २. पति वरणम्

परस्परं विजानतोरेव कन्याकुमारयोरुद्वाहसम्बन्धो भवेत् परस्परस्य सम्मति मन्तरा न किमपि युगलं विवाह बन्धनेन बद्धव्यमिति भृशं वेदेषूपदिश्यते । स्थाली पुलाकन्यायेन केचिन् मन्त्रा उद्ध्रियन्ते—

भगस्य नावमारुहे पूर्णामनुपदस्वतीम्
तयोप प्रतारय यो वरः प्रतिकाम्यः ॥ अ० ३ । ३६ । ६ ॥
आ ते नयतु सविता नयतु पतिर्यः प्रतिकाम्यः ॥ अ० ३ । ३६ । ८
धातास्या अग्रुवै पतिं दधातु प्रतिकाम्यम् ॥ अ० ६ । ६० । ३ ॥

एषु मन्त्रेषु 'प्रतिकाम्य' इति विशेषणं संदेहराशीनपास्य

कथयति यत् कन्याया रुच्यनुरूपेण पत्या भवितव्यमिति ।

सूर्यां यत् पत्ये शंसन्तीं मनसा सविताददात् । अ० १४ । १ । ९ ॥

अयमपि मन्त्रः अमुमेवार्थं परिपुष्णाति । पत्ये शंसन्तीं, इतीमौ शब्दौ पतिं कामयमानैव कन्या तस्मै प्रदेया नाऽकामयमानेति सूचयतः । पत्युः कामनया 'युवतीनां कन्यानां विवाहो विधेय' इत्यपि ध्वन्यते, न कर्हिचित् बालिकानां मनःसु पतिकामना समुदेति इति जानन्त्येव विद्वत्तल्लजाः ।

अपश्यं त्वा मनसा चेकितानम् तपसो जातम् तपसो विभूतम् ।
इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम ।
ऋ० १० । १८३ । १ ॥

अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।
उपमामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे ॥
ऋ० १० । १८३ । २ ॥

---

## अस्मद्देशे पाश्चात्यशिक्षायाः प्रभावः

( श्री पं० जगद्धर जाडू शास्त्री एम. ए. )

श्रीमन्तः सभासदः

यदहमद्य विद्वद्भूषणेन श्रीडाक्टर कुलभूषणेन समुत्पादितप्रोत्साहनो भवतां संनिधौ समुत्थाय गीर्वाणभाषायां व्याख्यानं कर्तुं सप्रयत्नोऽस्मि तदहं परमं सौभाग्यं मन्ये । यद् भवन्तो निखिलशास्त्रपारंगताः गीर्वाणवाण्यै स्निह्यन्तःकाव्यरीतिरसालङ्कारनिष्णाताः मम सभासदः तद्द्वितीयमहोभाग्यम् । यदपि श्रीराजाधिराज श्रीहरिसिंहबहादुरस्य राजकुमारजन्मोत्सवेन अमन्दानन्दाः परिमोदितस्वान्ता वयं तस्य आचन्द्रतारकं दीर्घजीवित्वं प्रार्थयमानाः तदपि उत्कृष्टतरं भागधेयमस्माकम् । एतादृशीषु सौभाग्यपरंपरासु विद्यमानासु को नाम न हृष्येत् विशेषतया अस्मिन् नवलताकुसुमामोदपरिपूरितान्तरा[illegible] ।

## अस्मद्देशे पाश्चात्यशिक्षायाः प्रभावः

महोदयाः, गीर्वाणभाषायां व्याख्यानवितरणे प्रथमोऽयमवसरो मम। संस्कृतभाषायामनियन्त्रणं भाषणं यदहं संस्कृताध्ययनदिनेषु अकरवं तदिदानीं विस्मृतवानस्मि। अत्र तु कारणं निरन्तरतया आङ्गलभाषाया उत्तरोत्तरमभ्यासः, येन विद्यालये संस्कृतभाषामध्यापयन्नपि, परन्तु अध्यापनविषये विश्वविद्यालयानुमोदितां पाश्चात्यप्रणालीमवलम्बमानः आङ्गलभाषया विद्यार्थिनः संस्कृतंपाठयन्, देववाणीभाषायां विचारविनिमयं कर्तुमनभ्यस्तः, सांप्रतमाशासे यदस्यां संस्कृतसाहित्यपरिषदि आगत्य श्रीमतां सकलकलाकलापकोविदानां पण्डिताग्रगण्यानां सत्सङ्गेन संजातपुनःसंस्कारोऽग्रेऽपि पूर्ववत् सुरगिरो भाषणप्रसादं समाप्नुयामिति।

महाशयाः, अद्यतनो विषयोऽस्ति 'अस्मद्देशे पाश्चात्यशिक्षायाः प्रभावः' यदधिकृत्य श्रीमतां विद्वद्वर्याणां समीपे किञ्चिद् व्याख्यातुकामोऽहम्। अस्मिन्विषये कश्चित् गूढदृष्टिपातो न कृतो मया, तथा च सूक्ष्मदृष्ट्या कामपि समालोचनां न कृतवानस्मि। केवलं स्थूलदृष्ट्या सामान्यपरिवर्तित परिस्थितिनिरीक्षणेन यत्किञ्चिदस्मिन्समयेऽस्माभिर्दरीदृश्यते, तस्यैव साधारण्येनानुसन्धानं विहितमस्ति एतेषु पत्रेषु। तत् यत्किञ्चिज्जिह्वाचापल्यं मदीयं श्रीमतां कर्णगोचरीभविष्यति विचारावैदग्ध्यं वा तदुदारहृदयाः सहृदयाः क्षामयन्तु भवन्तः। अभिलषामि च यन्निष्णातमतयोऽत्रभवन्तोऽस्मिन्नाधुनिके विषये स्वविचारान् पुरस्कृत्य युष्मदीयभारतीपीयूषनिःष्यन्दैर्मदीयं तथा उपस्थितसभ्यगणस्य च कर्णपुटं पूरयेयुरिति। यत् सुधास्रोतोऽस्मत्कर्णकुहरान्तर्गतम्लौकिकीं तृप्तिमावहेच्च बहुकालमस्मदीयविचाराभ्यवहार्यं भविष्यति।

पाश्चात्यशिक्षाविषये प्रथमत एतद्वक्तव्यं यत् यदा पूर्वं विश्वविख्यातेषु आर्येषु भारतं वर्षमधितिष्ठत्सु सत्सु ग्रीकदेशोद्भवो नृपशूरः अलक्षेन्द्राभिख्यो निजभुजदण्डप्रचुरपराक्रमकण्डूयनामपनेतुकामः स्वराजधानीतो निःसृत्य दिग्विजयक्रमेण देशाद्देशं भ्राम्यन् सिन्धुनदीमार्गेण शान्तिलक्ष्मीसमृद्धमस्मद्देशं प्रविवेश [illegible]। जालन्धर-

प्रदेशं यावत् स्वविजयदुन्दुभिमाजघान च । तस्याधिपत्यमाश्रित्य तस्य केचित्सेनानायका भारतीयेषु पश्चिमोत्तरप्रदेशेषु राज्यं चक्रुः । एतेषामागमनपूर्वमितिहासेन ज्ञायते।भारतीयानां संपर्कः पाश्चात्यदेशवासिभिः 'सैमिटिक' इतिनामधेयैर्जनैरासीत्, येषां सङ्गेन तत्कालीनलिपिविषये अस्मत्पूर्वजाः प्रचुरं ज्ञानं प्रापुः । तदनन्तरं ( अलक्षेन्द्रागमनं यावत् ) क्रैसृजन्मसंवत्सरपूर्वं पञ्चशतकादारभ्य एकत्रिंशदधिकत्रिशतपर्यन्तं पश्चिमोत्तरप्रदेशाः 'अकीमिनीड' इत्यभिधेय पारसीराजकुलसमुत्पन्नमहाराजानामध्याश्रये समभूवन् । 'Cyrus' पारसीकनृपस्य आश्रिता गान्धारा अश्वकाश्च करदाः सामन्ता आसन् । डरियस हैस्तस्पीस नामधेयो भूपालो गान्धारांस्तथा सिन्धुतटस्थितान् जनपदानपि शशास । अस्यादेशेनैव ग्रीकदेशलब्धजन्म, एकः स्काइलैक्ष इति नामा वीरवर (इतिहासः कथयति), सिन्धुनद्यां नौकया विहारमकरोत्, भारतीयेषु देशेषु अनिरोधं पथिकीभूय विचचार च । जर्कसीस इति नामा पारसीकाधिपो ग्रीकदेशाक्रमणकाले अष्टयुत्तरचतुर्थशतके (क्रैसृब्दात् पूर्वं ) स्वसैन्येन सह बहून् गान्धारदेशवासिनो भारतीयांश्च योधवीरान् यवनान् अभिभवितुमनैषीत् इत्यादि। हैरोडोटस इतिहास लेखकस्य कथनानुसारेण पश्चिमोत्तरीया बहवः प्रान्तास्तथा भारतीयाः केचन देशप्रदेशाः पाश्चात्यानामाधिपत्य अवर्तन्त ।

सप्तविंशत्युत्तरत्रिशतके ( 327 B. C. ) क्रैस्टाब्दपूर्वीये वर्षे पारसीक साम्राज्यध्वंसनानन्तरं महता पदातितुरगबलेन समन्वितः हिन्दूकुषं पर्वतं समुल्लङ्घ्य अलक्षेन्द्रो भारतसीमान्तरेषु आत्मानं दर्शयामास । देशाद्देशान्तरमाक्राम्यन् स तक्षशिलां प्राप । इतिहासपुस्तकेषु सविस्तृतं वर्णितमलक्षेन्द्रपौरवयोर्महद्युद्धं जेलमप्रदेशसमीपे वितस्तातटे सम्पन्नं भवतां नैवापरोक्षम्, यस्मिन् संप्राप्तविजयोऽलक्षेन्द्रो ऽग्रवर्तिषु देशेषु अपि स्वबलेन आक्रमणं चकार । स्वराजधानीं प्रत्यावृत्ते तस्मिन् तस्य बहवः सेनानायकाः पञ्चनदविषये निवसन्तोऽन्यान्देशानपि स्वायत्तीकृत्य राज्यमकुर्वन् । यदि च मौर्यकुलललामभूतेन

चन्द्रगुप्तेन तस्य जगद्विख्यातेन पौत्रेण अशोकभूपतिनापि आसन् पराजिता एते; परन्तु तेषां निधनानन्तरं यवनानामाक्रान्तिर्नवीभूता, द्विशतवर्षपर्यन्तं च पश्चिमोत्तरीया देशाएषां शासने एव तस्थुः। ग्रीकदेशीयानामनन्तरं शकानामाधिपत्यं केषुचित्प्रदेशेषु क्रिस्ताब्दीय-अष्टसप्तत्युत्तरैकशतं यावच्चकास्तिस्म। एतेषु विख्यातो नरपतिः कनिष्कनामधेय आसीत्। गुप्तराजकुलागतैर्महीपालैः शकानां साम्राज्यं भारतेऽपध्वस्तम्। परंतु हूणैस्ते न्यक्कृताः कतिपयवर्षान् तेषामेवाधीश्वरत्वं स्वीचक्रुः। ख्रिस्ताब्दीयसप्तमशतकारम्भपर्यन्तं पाश्चात्यानां गमनागमने न व्यरमताम्। अस्तु, दशमशतकावसानेऽपि महामदाक्रमणस्य भारते उपक्रमः समभवत्। तदन्तरमाङ्गलानाम्, येषां राज्यं परिपूरितदिगन्तरालमधुना वरीवर्ति।

इत्थं चिरकालसंजातः पौनःपुन्येन पाश्चात्यैः सह भारतीयानां संपर्कः केवलं तेषां विचारविनिमयमेव न समुत्पादयामास, प्रत्युत बहुषु विषयेषु उभयोः प्रभावोत्पादकत्वे कारणतां चागमत्। ग्रीकदेशीयानां राज्यकाले भारतीया निजां देशीयां परिष्कृतां राष्ट्रभाषामभाषन्त, विस्तृत संस्कृत साहित्यधनोपपन्नाश्च ते बभूवुस्तस्मिन्काले, सामाजिकी व्यवस्थितिश्च सुदृढा आसीत् तेषां; राज्यशासनप्रणाली च सुविहिता संबभूव, धार्मिकग्रन्थानां दार्शनिकग्रन्थानां च प्रचारोऽपि बोभवीतिस्म; कलाविज्ञानशास्त्राणां प्राचुर्यमपि विद्यतेस्म तस्मिन्काले भारते। अतो ग्रीकदेशीयेभ्योऽस्मत्पूर्वजाः सभ्यताशिक्षाविषये किंचिदपि न स्वीचक्रुः। केचित्कथयन्ति यत् भारतीयानां यद्यपि आध्यात्मिकेषु विचारेषु विपर्ययो न जातः, तथापि वास्तुकलायां, चित्रकलाकर्मणि, नाट्यविषये, ज्यामितिविवेचने, ज्योतिषशास्त्रे, आयुर्वेदे च स्वल्पांशेन ते पाश्चात्यानामृणिन एव। यतो बहुभिः चिह्नांशैरेतदनुमीयते विवेकिभिर्विद्वद्वरैः। अनन्तरं पारसीकसंपर्कात् भारते पारसीकभाषायाः प्रचारो जातः। राजभाषापि बहुकालमवर्तत सा। कश्मीरेषु अधुनापि अस्याः प्राचुर्येण प्रचारो दृश्यते एव।

म्लेच्छानां राज्यकालेऽत्र आचारविचारसंस्काररीत्यादिषु महान्विपर्ययः समजायत यस्य चिह्नानि अद्यापि अस्मदीये समाजे विद्यन्ते एव।

---

# प्राचीन राज्यस्थितिः

( श्री पं० गोविंद राजानक शास्त्री एम० ए० )

मान्या मनीषिणो विपश्चित्प्रवराः सदस्याः !

भारतस्य प्राचीनतमं वैदिकेतिहासमनुशीलयतां तत्रभवतां विदितचरमेवैतत्—यदुत्तरपश्चिमसीमान्ततो भारतमनुप्रविशतामार्याणां प्रथमं नामासीत् सिन्धुनदी तट एव निवासः । शनैः शनैः प्रसरद्भिः पूर्वदक्षिणतो वेदधर्मानुगैरार्यवरैः सन्निवेशितोऽभूत्—ब्राह्मण क्षत्रिय वैश्यशूद्रादि विभागेन—विभक्तो जनसमुदायः। दस्युदासादीनामन्त्यांकोटिमनुगच्छतां बभूव मन्दं मन्दं शिक्षा साहचर्यादिभिरार्यैः सह सङ्गमः । एवं महत् कर्मक्षेत्रं भारतीयं राष्ट्रं संविभज्य राजानोऽन्वशासन् । तत्र राष्ट्रीयोद्देश्यानि राज्ञा सम्यक प्रतिपाल्यानि सर्वत्र सर्वदा सर्वथा वेदेभ्य एव तावदुद्धृत्य उपन्यस्यन्ते—राज्यं हि तावच्छुक्रनीतौ यथासर्वोपजीवकं लोकस्थितिकृन्नीतिशास्त्रम् । धर्मार्थकाममूलं हि राज्यं मोक्षप्रदंयतः राष्ट्रे तु आवश्यकानामष्टेविधानामङ्गानां मध्ये प्राथम्यं सौभागस्य तद्यथा-आथर्वणे—"राष्ट्रं पिपृहि सौभागाय" ७।१९।२ सौभागस्तु-'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षस्मां भग इति रितः॥" राष्ट्रं तु सर्वथा पूर्वोद्दिष्टैरेभिर्गुणै युक्तं सद्भूपते रानन्त्याय भवति।

२ पापस्य विनाशो, सकृदेव राष्ट्रे प्रावर्तितः कामधुग्भवति यतो हि तत्रैव अथर्ववेदे-"आ ते राष्ट्रमिह रोहितोहार्षीद् व्यास्थन् मृधो अभयंते, ऽभूत् । तस्मै ते द्यावापृथिवी रेवतीभिः कामं दुहायामिह शक्करीभिः ॥१३।१।९.

३ राष्ट्रे हि धर्मस्थानानामष्टादशप्रकाराणां सम्यगुपयोगेण चारचक्षुषा हि राजानं शत्रुविनाशमेव प्रधानंकर्म आथर्वणे वर्णयन्ति तद्यथा 'अभिप्रेहि मापं वेन उग्रश्चेत्ता सपत्नहा। आतिष्ट मित्रवर्धन तुभ्यं देवा अधि ब्रुवन्॥ ४।८।३

४ अभयस्य स्थापना प्रशस्यते तत्रैव—

जहि शत्रून् रयवृधो नुदस्व अथाभयं कृणुहि विश्वतो वा। ७। ३७

५ चतुर्विधं हि पञ्चममङ्गं राष्ट्रीयं भवति यथा—तत्रैव—

कृष्यै त्वा, क्षेमायत्वा, रय्यै त्वा, पोषायत्वा। कृषिसम्पादनं क्षेमप्राप्तिः धनसंग्रहः, समृद्धिश्च भारतीयं राष्ट्राङ्गमुच्यते।

६ वीर्यरक्षादिकमपि राष्ट्रीयं षष्टमङ्गमुक्तं, यतो हि—यजुषि 'बाधतां द्वेषोऽभयं कृणोतु, सुवीर्यस्य पतयः स्यामे'ति—

७ पदार्थ विभागश्च सप्तमो राष्ट्रीयो भागः—यथा—

ततो न उग्रो विभजा वसूनि। विभक्तारं हवामहे'-इत्यादि-अत्र स्वे २. कर्मण्यभिरतो जनः सदाचारः सच्चरित्रो भूमौ विख्यातः शिक्षागुरुर्दीक्षागुरुश्चाभूत्-अत एव

८ अष्टमं हि- राष्ट्रीयमङ्गं लोके परलोके च विचिकित्सादिकम्-यथा 'उभयेभ्यः प्रचिकित्सा न विष्ठी" इति-एवमष्टाङ्गं राष्ट्रं कर्मक्षेत्रं प्राचीनमार्यपद्धत्यनुसृतं 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलात्मकं' भारतीयं सर्वत्र सर्वैः प्रशंसनीयमभूत् येन वारं २ डिण्डिमघोषेणतत्र भवान् भगवान् मनुस्तारस्वरमुद्धोषयामास—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥" इति

अस्या उद्घोषणाया अनुसारेण राज्यस्य अधिकार क्षेत्रेक्रिया क्षेत्रे च भगवान् स्वायम्भुवो मनुः—तुलाशासनमानानां मुद्राणाञ्च निरीक्षणं, विक्रेय्यपदार्थानां पावित्र्यं, लिखितानां पत्राणां प्रामाण्य विचारः, उत्कोचग्रहणनिषेधः, स्त्रीपुंसयोः स्वामिभृत्ययोश्च सम्यक् सम्बन्धस्य स्थापनम्, भ्रातॄणां गुरुशिष्याणां च समुचितसम्बन्धस्य

स्थापनं, वापीकूपाराम सीमा धर्मशाला सुरालय मार्गाणां परिरक्षणं हीनाङ्गविकलाङ्गानां नराणां पालनम्, द्यूतक्रीडामद्यपानमृगया-शस्त्रधारण गोगजाश्वोष्ट्र महिषादि जङ्गमस्थावर रजतस्वर्ण मादका-दि विपाक्त वस्तुविक्रय निषेधश्च तत्रैव दर्शयति—

तस्मात्—'राज्यवृक्षस्य नृपतिर्मूलं स्कन्धाश्च दन्तिनः ।

शाखाः सेनाधिपाः सेनाः पल्लवाः कुसमानि च ।

वेदे-च—पृष्ठीर्मे राष्ट्रमुदरमंसौ ग्रीवाश्च श्रोणी ।

ऊरू अरित्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥ इति

अतो मूलभूतस्य नृपतेः परिरक्षणं तदर्थं च शरीराद्यर्पणं प्रजानां धर्म एव । वैदिकं साहित्यमनुसृत्य प्रजाभिः सर्वथा नृपति हितायोन्निद्रैर्भाव्यं यतो हि—

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।

स पिता पितरस्तासां केवलं जन्महेतवः ॥ इति

अलमन्यदन्यदा । गो० रा०

---

## सम्पादक दृष्टिः

### काश्मीरराज्य पुण्यभूमिः

आसीत् कदाचित् देशोऽयं भारतीयानांविदेशीयानाञ्च तीर्थ-स्थानं विद्यापीठस्य। सकलविद्यानां शिक्षाकेंद्रं सर्वधर्माणां प्राप्तिस्थानं वनस्पतिहिमजलपुष्पादिदृश्यविशेषाणां गोचरं भारतललामभूतं रत्नमयमेव काश्मीरमण्डलं जगति तले विरराज । त एव पर्व्वता तत्रैव जलराशयोऽपि प्रायशः तावतैव प्रकृतेः सौन्दर्यं अपितु सर्वत्र जलेषु स्थलेषु तादृशमेव; परन्तु परिवर्तिता प्रकृतिरेव मनुष्याणां, धर्मबुद्धिश्च स्त्रीपुरुषाणाम् आ परिवर्तिते काले,परिवर्तितं राज्यं, परि-वर्तितं सर्वमेव तेन साकम् ।

## संस्कृतवाणी

गीर्वाणवाण्याः स्थाने पारसीका भाषा आङ्गलभाषाच इदानीं विराजमानास्ति सर्वत्र पाठशालासु व्यवहरस्थानेषुच। काश्मीरस्थाः पण्डिताः चिरकालात् संस्कृतवाङ्मात्मिकां स्वधर्मभाषां परित्यज्य आङ्गल पारसीक उर्दूभाषासु पाण्डित्यं दर्शयन्तः स्वात्मानं धन्यं मन्यन्ते। वराकाः संस्कृतज्ञाः धर्मबुद्धयश्च अतिस्वल्पसंख्याकाः पण्डिताः गुरवश्च जीविकालाभाभावेन कथंचिद् निर्जीवनमेव जीवनमुद्वहन्तः दीनावस्थां प्रपन्नाः क्लेशेनैव उदरंभराः। शास्त्रिपरीक्षोत्तीर्णानां पाठशालासु कार्यालयेषु १०, १५ रूपकेभ्यः प्रतिमासं अधिकं मूल्यं न विद्यते अस्यां पुण्यभूमौ। अहो! धर्मक्षेत्रं पुण्यस्थानं धर्मतीर्थं विद्यापीठश्चार्य्याणाम्।

## विचाराणां परिवर्तनम्

धर्मपरायणानां समाजोद्धाराय कटिबद्धानां नास्ति दुष्करं किञ्चित्। कुर्वन्तु नाम राज्यभाषा (आङ्गलभाषा)ऽध्ययनं उर्दूभाषायाश्च व्यवहारः पारसीकाक्षरेषु विशेषतः छात्राः सर्वपाठशालासु यदृच्छया, परन्तु हिन्दूनां कृते हिन्दी भाषावश्यका सर्वथा पाठशालासु। आसीदेतादृशो नियमः कदाचित् स्वर्गीय महाराजस्य समये पाठशालासु। सर्वेषां प्रार्थनया पुनरपि भवितुमर्हतीदानीमपि हिन्दूनां कृते। संस्कृत प्रचारार्थं तु जीविका लाभेनापि धर्मबुद्ध्यैव धर्मशास्त्रवेदस्मृति पुराणेतिहास दर्शनाध्ययनेच्छया च महान् प्रयत्नः कार्यः विद्वद्भिः पण्डितैः। संस्कृतज्ञानप्राप्त्यर्थं हिन्दीभाषाध्ययनाय च स्यात् चेदाग्रहो लोकानां न केनचिदपि निवारयितुं शक्यन्त उपायाः तद्विषयकाः।

## यूनां सभायाः कर्तव्यम्

दृश्यते खलु सामाजिकोद्धाराय प्रशंसनीयः परिश्रमः सनातनधर्मयूनां समाजे नागरिकाध्यर्याणां मनस्सु च। संस्कृतहिन्दी

भाषा प्रचाराय मंडलमपि स्थापितं श्रीनगर्यामस्मिन् दिवसे। कार्यकर्तारो मण्डलस्यास्य चेद्देववाणी प्रचारार्थं कटिबद्धाः दृढ़-निश्चयाश्च भवेयुः तर्हि द्वित्रिवर्षेषु श्रीनगर्यां त्ववश्यमेव फलमस्य प्रयत्नस्य दरीदृश्येत।

## धर्मार्थकार्यालयाध्यक्षस्य धन्यवादः

सं० सा० परिषद् मन्त्रिणा मया रायबहादुर पण्डित अनन्तराम धर्मार्थकार्यालयाध्यक्ष महोदयाः गीर्वाणवाण्याःसहायार्थं प्रार्थिताः यत् परिषदः पत्रिकायाः श्रियः कान्तिवर्धनाय परिषद् साहायार्थञ्च राजकीय धर्मार्थकार्यालयात् साहायदानं कुर्युः। परिषद् पण्डितानामाशीर्वाद धन्यवादयोः रूप्यकशत प्रदानेन भाजनं जाताः तत्रभवन्तः श्री धर्मार्थकार्यालयाध्यक्षाः।

कुलभूषणः

---

## भक्तियोगः

( श्री० पं० शिवनाथ शर्मा साहित्यभूषणः साहित्यमणिः )

खलु भ्रममाणे निरन्तरं कुलालचक्रे कर्तृजन्या घटशराव-कर्कटीकुम्भीकुण्डिकादयो भाण्डविशेषा विकासं प्राप्य पाचयितृ-वह्न्यागारे तत्स्थवह्निसाद्भूय पक्वाः सन्तोऽनन्तरं स्वकार्यसाधनाभि-मुखाः स्वकर्तृनामादि, गवेषयन्तस्तत्स्थाः परस्परसंघट्टविशीर्णाः सर्वस्य यथा भान्ति, एवं सरणशीलसंसारचक्रे निरर्गलसृष्टिविकासः क्रमागतबुद्ध्यनुभावन "क्षित्यङ्कुरादि कर्तृजन्यं कार्यत्वाद् घटवत्" इति तार्किकानुभवेन कर्तृज्ञानचिकीर्षया स्वविचारशालिवितर्कै-रन्यजिजीविषया भाण्डादय इव न्याय-वेदान्त-सांख्य-बौद्ध-जैन-पाशुपतार्हदादिदार्शनिका मदीयं सत्यमित्यहंपूर्विकया लोके स्वस्व-सिद्धान्तस्थिरीकरणकाङ्क्षया वास्तविकसत्यवस्त्वज्ञानिनः सम-यिनः सर्वे क्षीणाः, इत्यस्मिन्विचारे न मनागपि संशयलेशो माया-ग्रन्थिपातित्वात्, इममेवार्थं पोषयितुं श्रीधर्माचार्यपादैः "अज्ञानन्तो

यान्ति क्षयमवशमन्योन्यकलहैरमी मायाग्रन्थौ तव परिलुठन्तः समयिनः। जगन्मातर्जन्मज्वरभयतमः कौमुदि वयं नमस्ते कुर्वाणाः शरणमुपयामो भगवतीम्" इति पञ्चस्तव्यां निरूपितम्। तद्धिस्तुतेः सर्वतन्त्रस्वतन्त्राणां विद्वद्वराणां मतं यथाः—हे जगन्मातर्जगतो भवातिभवलक्षणस्य त्रैलोकस्य भूरादेर्वा मातरुत्पादयित्रि! अमी समयिनो भिन्नभिन्नसिद्धान्तवादिनो माहेश्वराः सांख्यादयोऽधिकारक्रमतारतम्यभागित्वादन्यथान्यथा शाक्तिप्रकृत्या दिव्यपदेश्यैर्नामभिस्त्वां प्रतिपादयन्तस्तव ग्रन्थिरूप- तत्त्वरूप जगद्योनिमायाग्रन्थौ मर्म्याविले सृष्ट्यादिलाभरूपेषु योनिविवरेषु विविधविषयिकसुखेच्छया नियमत्वेन पौनःपुन्येन सृष्टिं प्राप्य परिलुठन्तः परिवृत्तिभाजो जन्मादिभाज इत्यर्थः। तदुक्तम्—शिवगुणयोगे तस्मिन्महति प्रदेये प्रतिष्ठिताः प्रथमम्। तेऽनन्तादेर्जगतः सर्गस्थितिविलयकर्तारः मायाबिलमिदमुक्तं परतस्तु गुहा जगद्योनिरिति॥ अत्र मायाबिलमिति ग्रन्थिरूपा मायेत्यर्थः। अन्योन्यकलहैः परस्परं स्वस्वसिद्धान्तसमर्थनाग्रहपरत्वादन्यतमपक्ष दोषोद्भावनेन विवादरूपैर्वाग्विग्रहैरवशमस्वतन्त्रं यथातथा क्षयमायुरवसानं यान्ति प्राप्नुवन्ति। मायाया ह्यशेषजन्तुविमोहकत्वं स्वभाव एव, येनान्योन्यविमतिभिर्विवादासक्ता भ्रान्तत्वात्पारमार्थिकं वस्तु न विदुः। श्रुतिः—अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः। दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥ इति, अत्र हेतुतया विशेषणमाह—यतोऽजानन्तोऽर्थात्त्वां स्वसंविन्मयीदेवतामविद्वांसो देशकालाद्यनाकलितया तवत्स्वरूपज्ञानाभावादल्पज्ञाश्च, अतः परमार्थविषयेऽपि तेषां नानामतिभेदपरिकल्पना। तद्यथा—विज्ञानमेव केवलं नामरूपाद्युपाधिहीनमनादिवासनाप्रबोधवैचित्र्यसामर्थ्यान्नीलादिरूपं बहिरिदन्तया नानाप्रकाशतेति वैज्ञानिकाः। 'पुरुष एवेदं सर्वं' नेह नानास्ति किञ्चनेत्युक्तेः सर्वान्तर्यामि परब्रह्मैवानाद्यविद्यावशाद्भेदेनावभासत इति ब्रह्मवादिनः॥ यथा प्राणनमेव विश्वमागूर्य

वर्तते प्राणनं विना ब्रह्मणो रूपस्याकिञ्चिद्रूपत्वादिति सविमर्शं ब्रह्मेति प्राणब्रह्मवादिनः ॥ वैराजमपि ब्रह्मणः सत्यभूतमित्यपरे। महासत्ता-सामान्यलक्षणं सर्वगुणाश्रयं वस्तु परमार्थसदिति वैशेषिकादयः। इत्यमी मायाग्रन्थौ परमार्थतया भ्रान्ता एव। तदुक्तम्—विज्ञानान्त-र्यामिप्राणविराड्देहजातिपिण्डान्ताः। व्यवहारमात्रमेतत्परमार्थेन तु न सन्त्येव ॥ इति सर्व एवैते मायया भ्रान्ता अधरदर्शनस्थाः सर्वोत्तीर्णाम्नायज्ञानाभावात्पाशवपदमधिशेरते। तदुक्तम्—यथान्धा नैव पश्यन्ति सूर्यं सर्वप्रकाशकम्। तथा कुलं न जानन्ति तव माया-विमोहिताः ॥ शैववैष्णवबौद्धादिदर्शनान्यतिभक्तितः। मज्जन्ति मानवा नित्यं वृथायासफलानि वै ॥ इत्यादि, तेषां त्वद्विषये नाना-शब्दव्यपदेशकल्पना ॥ कलहहेतवश्च विवदतां तेषां नानावादाः, यथा—संघातवादो जीवोत्पत्तिवादो विज्ञानातिरिक्तभाववादः परि-णामवादो विवर्तवादश्च। तत्र केचित्सत्कार्यवादा अपरेऽसत्कार्य वादा इति।

संघातवादिन स्तावच्चार्वाकास्त इत्थं ब्रुवन्ते, अस्मिन्ननादौ जगति क्षणिके कस्यचिदीश्वरादेरपेक्षाभावात्प्रत्यक्षैकप्रमाणतः संघातशक्तिभिरेव सर्वं सिध्यति, यथा पानकादावोषधिसंघात जन्यो मदशक्त्यादिरेवंभूतदेहाकारपरिणतेभ्यो जायमानं चैतन्यं तेषु विनष्टेषु सत्सु स्वयं विनश्यतीति।

तार्किका आरम्भवादमेवमाहुः। यथा—ईश्वरो निमित्त-कारणं जगतः कुलालवत्। पृथिव्यादीनां चतुर्णां भूतानामणवः प्राणिनां कर्मभिः संयोजिताः द्व्यणुकादिक्रमेणेदं ब्रह्माण्डमा-रभन्ते। मीमांसका अप्येवमेव मन्यन्ते।

सांख्यपातञ्जलपाशुपताः परिणामवादमित्थं प्राहुः। गुणानां सत्त्वादीनां साम्यावस्था विभागरूपा मूलकारणं प्रधानं, तदेव पुरुषसान्निध्यात्संक्षुभ्यमाणं महदादिचतुर्विंशतितत्त्वात्मना कार्य-रूपेण क्षीरमिव दध्याद्यात्मना परिणमते। इदं सर्वमुत्पत्तेः पूर्वं

कारणात्मना सदेव व्यक्त्यव्यक्ती एव, तस्य केवलं जन्मविनाश-शब्दव्यपदेश्य इति ॥

जीवोत्पत्तिवादं पाञ्चरात्रा इत्थमाहुः—वासुदेवाख्यं महाविभूतिमद्ब्रह्मतत्त्वात्संकर्षणाख्यजीव उत्पद्यते, सच वासुदेवाराधनेन मुच्यते ।

बौद्धा बाह्यार्थभाववादवादिन इत्थमाहुः—अन्तःस्थज्ञेयतत्त्वस्यैव स्वप्नवद्बाह्यतयावभासनाद्वस्तुतो क्षणिकविज्ञानातिरिक्त बाह्यार्थभावो जागरे स्वप्नाभाववत्सर्वजनीन इति । (क्रमशः)

---

## श्रीशारदा शरणम् ।

इह खलु सकलधरणीतल महाकवि ललामभूतो निखिल शास्त्रार्थ-विचार चातुरी संशोभित भुवन मंडलो महाकविः श्रीकल्हणो देशमिम मष्टचत्वारिंश दधिकैकादश शततमे खिष्टीये वर्षे स्वजन्मना समलंचकार । अद्य यावन्नववर्षशतानि व्यतीतानि । न चैवं विधः प्रौढोक्त्युपबृंहितः श्लोकरचनासंदर्भो दृष्टिपथमारूढः कालात्तस्मादारभ्य । तत्प्रणीतराजतरंगिणीग्रन्थपर्यालोचनया निरुपमं निरतिशयंच तदीयं पाण्डित्यं ज्ञायते । कीदृशोऽसौ सकल शास्त्र निष्णात-सर्वव्यवहाराभिज्ञश्च विद्वद्वर आसीत् । तेन ह्येकादशानां राजकथाश्रयाणां पूर्वसूरिग्रन्थानां काश्मीरदेशीयपुरावृत्त प्रतिपादकप्रसिद्धतम :नीलमतपुराणस्यचाधारेणायं महाग्रन्थो निरमायि । यस्मिन्नेतद्देशीयानां सर्वेषां तीर्थानां सर्व प्रकारकाणां राजव्यवहाराणां च वर्णनं सम्यक्तया प्रतिपादितमस्ति ॥ महाराज युधिष्ठिर समयादारभ्य तेन महाकविना यथाक्रममेतद्देशीयानां सर्वेषां कश्मीरक्ष्माभृतां राज्यकालः तदीयाराज्यव्यवस्था तत्तत्कालीनो व्यवहारनिर्णयः प्रकृतिविपर्ययश्च सौष्ठवेन प्रदर्शिताः, कियन्तं कालंकेन केन राज्ञा राज्यं समुपभुक्तम् । कथं कथंच राजभिः

स्वस्वसमये प्रजा पालनं व्यवहार कार्येषु च निर्णयः कृतेः । कथं कथंच समय-माहात्म्येन तेषां राज्यभंगो जात इत्यादि । एकस्मिन्नेव श्लोके सर्वेषा मत्रत्यानां तीर्थानां संक्षेपतो वर्णनं संपादितम्, तद्यथा, "चत्वारिंशद्थापि पंच गिरिशाः षष्टिश्चचक्रायुधा ब्रह्माणस्त्रय इत्यनादि निधना द्वाविंशतिः शक्तयः । नीलादीनि शतानि सप्त फणिनां तीर्थौकसां कोटयो विख्याताश्च चतुर्दशोत्तमतराः काश्मीर भूमंडले ॥" इति ।

श्रीमदवन्तिवर्म्मादिभिः प्रतापशालिभिः सुगृहीतनामधेयै र्नरपतिभिः केन केन प्रकारेण देशस्यास्योद्धारः कृतः । तद्राज्य कालेच गीर्वाणभाषायाः कीदृश्युन्नति रभूत् । पंडितानां महाकवीनां च प्रतिष्ठा गौरवं कीदृशं समुल्ललास, यथा तत्रैव लिखितम् । "मुक्तापीडः कणस्वामी कविरानन्दवर्धनः प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मण" इत्यादि ॥ श्रीयशस्करादिभिः क्ष्मापतिभिश्च स्व स्वबुद्धि बलेन भूमेरस्या उपभोगः कृतः । श्रीयशस्करभूभृता च कीदृशानां कीदृशानां महा संशयास्पदानां व्यवहाराणां न्यायोनिर्णयश्च संपादितः । यशस्कार राज्यकालेहि कयाचिद्ब्राह्मणविधवया दारिद्र्यदोषो पहततया कस्मै चित्पुरुषायोद्यानकूपरहितंस्वकीयं गृहं विक्रीतम्, संक्रेत्राच कूटनीति माश्रित्योद्यान कूप रहित मिति पदे रकारस्थाने सकार विनिमयेन कूपसहित मित्येवंरूपोऽक्षर विपर्ययः कारितः । ब्राह्मणीचाधिकरणस्थानं जगाम । केनाप्यधिकरणिकेन न्यायधीशेन वा न्यायं कर्तुं न पारितम् । अनन्तरं राज्ञा यशस्कारेण स्वयमेव निजबुद्धिवैभवेन तादृशो निर्णयो विषयेस्मिन्कृतो येन सर्वेलोकाः विस्मयमापन्ना राजानंच प्रशंसितवन्तः । एवमेव समरूपवर्णावस्थ तुरगीद्वयस्वामिनोर्द्वयोः कार्षिकयो रेक मश्वतर मुद्दिश्य महान्कलहः समुत्थितः । बहूनां न्यायाधीशानां समीपे तौ निर्णयार्थं गतौ । कुत्रापि तयो र्व्यवहारे सफलता न जाता । तस्मिन्समये च तेन महीभृता स्वकीय कुशाग्रबुद्ध्या तादृशोन्यायः संपादितो येन तयोः कलहोऽवसानं गतः । इत्येवंप्रायाणां नैकविधानां व्यवहारजातानां

स्वग्रन्थान्तर्विन्यासेनानुमीयते, कीदृशं कल्हणमहाकवे वैंदुष्यं सर्व व्यवहार वित्त्वं नीतिशास्त्र पारगत्वं च समभूत् । एवंविधा विद्वत्ता काव्यनिर्माण शक्तिश्चालौकिक-प्रतिभाशालिनः कस्यापि कविवरस्यैव भाग्योदयेन समुल्लसते । नतु सर्वेषां साधारण बुद्धिमतां कवीनाम् । एवं विधाः समस्तविद्यापारावारीणा निखिलजगतीतल प्रसिद्धा महानुभावा बहवः कश्मीर देशीया विद्वद्वरा भूमण्डलेस्मिन्समुल्लेसुः, मयातु केवल मद्य पत्रेस्मिन्नेकस्यैव काश्मीरिकमहाकवेः संक्षेपतो दिग्दर्शनमात्रेण माहात्म्यं समुपवर्णितम्, आशासे च समये समयेऽन्येषामपि प्रसिद्धतराणा मत्रत्यानां कविवराणां चिरस्थायिनीं सुकीर्तिं प्रकटय्य स्वलेखनीं पवित्रयिष्य इति शिवम् ।

नित्यानन्दः

———

## परिषद् वृत्तम्

### वैशाख १९९० विक्रमीयम्

तृतीय वादने २७ तमे दिवसे वैशाख सौरमासस्य १९९० बिक्रमाब्दे हिंदूसहायक सभा मन्दिरेऽस्मिन् सं० सा० परिषदः साधारणमाधिवेशनमभूत् । परिषद्यस्यां पण्डित शिवनाथ शर्मणा साहित्याचार्येन भक्तियोग विषये गम्भीरतत्वदृष्ट्या सुन्दरो निबंध एको ऽपाठि । नगरे कोलाहल वशात् हिंदूयवन संघर्षणभीत्याच सम्मेलने ऽस्मिन्नति न्यूना संख्या पण्डितानामासीत् । न च ८, १० पुरुषभ्योऽधिकाः सभासद आजग्मुः । निबंधस्तु श्रियः पृष्ठेषु यथावकाशं प्रकाशितः स्यात् ।

### ज्येष्ठ मासः

शनिवासरे १७ यां तिथौ ज्येष्ठ मासस्य महत्वपूर्णवमधिवेशनमेकमभूत् । श्री पूज्य "महापण्डित त्रिपिटकाचार्य" राहुल सांकृत्यायनः बौद्धभिक्षुः स्वाशिक्षाचारोपदेशैर्बुद्ध चरित्रैश्च च

स्नापयितुं काश्मीरानलमकरोत् । काश्मीरराज्यस्यबोधिमहासभा बौद्धभिक्षोरस्य शर्मनप्रदेशीय महाशय गोविंद ब्रह्मचारिणश्च बौद्ध धर्मप्रचारार्थं व्याख्यानद्वयं हजूरिबागार्य्यं समाज-मंदिरे कारयामास । व्याख्यान विषयस्तु त्रिविष्टपदेशेषु बौद्धधर्मप्रचार आसीत् । नवीन एवायं विषयो न केनचिद् विदुषा पूर्वं व्याख्यातः । श्री राहुलभिक्षुस्तु स्वयं तत्र गत्वा विषये ऽस्मिन् त्रिविष्टपदेशस्य महापुरुषैः सह संगमय्य सर्वं च तत्रत्यं वृत्तं विज्ञाय वैदुष्य पुरस्सरं कञ्चन निबंधमलिखत् आशासे श्रियः पत्रेषु शीघ्रमेव लेखोऽयं मुद्रापितो भवेत् ।

आषाढ़ ६०

२५ तमे दिवसे आषाढ़ मासस्य मासिकं सम्मेलनं समजनि । पं० श्री कण्ठराजदान शास्त्रिणा "ग्रीष्मर्तौ" सारगर्भितो निबंधोऽपाठि । पं० गोविंद राजानकेनापि स्वल्पं समालोचनमक्रियत । श्री केदारनाथः सारस्वतः वाराणसीयः संस्कृतरासिकः भूतपूर्व सुप्रभात नामक विख्यात संस्कृत पत्रस्य सम्पादकश्च दैवयोगात् काश्मीरानलमकरोत् एतेष्वेव दिवसेषु । तेन तु मदनुरोधेन व्याख्यानदानमपि सभायामस्माकं स्वीकृतमासीदवसरे ऽस्मिन्नकस्मादेव तड़ित्सूचनया एते महोदयाः काश्यामेव परिषदधिवेशनात् दिनमेकंपूर्वमाहूताः गताश्च त्वरितमेव । तेषां व्याख्यानामृतसारलाभेन परिषद् सभासदस्तु अपूर्णवाञ्छा एवातिष्ठन् ।

श्रावण मासः

सौर श्रावण मासस्य २२ तमे ऽह्नि मासिकं सम्मेलनमभूत् । पण्डित नित्यानन्द शास्त्रिणा सभापतिना कविकल्हन कृतेः प्रसिद्ध राज्यतरंगिणी विषये किञ्चिद् व्याख्यानमदायि । ततस्तु मुज़फ़राबाद प्रदेशात् साम्प्रतंसमागतेन नवयुवकेन पण्डित लक्ष्मीचन्द्र शास्त्रिमहोदयेन स्व विचारैः गीर्वाणवाण्या सभासदः संहर्षिताः । सभामन्त्रिणा, पं० प्रेमनाथेन च पुस्तिकोद्धृतकविताभिर्मनोरञ्जक विषयकाभिश्च तथा च पं० गोविंदराजदानेन स्वटिप्पणिमिश्च उपस्थितमहोदयाः सन्तोषिताः । परिषन्मन्त्री

ओ३म्

# काश्मीरान्तर्वर्ति श्रीनगरस्थ-संस्कृत साहित्य परिषदः

## आयव्यय विभागः

### आयः ( दानं शुल्कश्च )

धनम्

| सं. नाम निवासस्थानञ्च | १९८३. ८४. ८५. रु० | आ० | ८६ रु० | आ० | ८८. रु० | आ० | ८९ रु० | आ० | योगः रु० | आ० |
|---|---|---|---|---|---|---|---|---|---|---|
| १ पं. शिवदासः रिटयार्ड सिशनजज श्रीनगर | २५ | ० | ० | ० | ५ | ० | १५ | ० | ४५ | ० |
| २ ला. कृष्णचन्द चीफ, ईञ्जीनियर जम्मू क० | १२ | ० | ० | ० | ० | ० | १० | ० | २२ | ० |
| ३ पं. ठाकुरदास ए०डी० अम० जम्मू | १२ | ० | ० | ० | ० | ० | ० | ० | १२ | ० |
| ४ डा. कुलमूषण हैल्थ औफिसर श्रीनगर | १२ | ० | ६ | ० | ३ | ० | १५ | ० | ३६ | ० |
| ५ पं. ज्ञानीराम प्रोफिसर श्रीनगर | ६ | ० | ० | ० | २ | ० | ७ | ० | १५ | ० |
| ६ ला. सुन्दरदास प्रोफेसर श्रीनगर | २ | ० | ० | ० | १ | ० | १ | ० | ४ | ० |
| ७ ला. रामदत्तवर्म्मा हेडमास्टर जम्मू प्रान्त | ३ | ० | ० | ० | ० | ० | ० | ० | ३ | ० |
| ८ ला. देवीचन्द कश्मीर रीज़ी डैन्सी | २ | ० | २ | ० | ० | ० | ० | ० | ४ | ० |
| ९ ला. भगवानदास एजीज़ आफिस कश्मीर | २ | ० | ० | ० | ० | ० | ० | ० | २ | ० |
| १० दीवान गुरुदास कश्मीर रिज़ी डैन्सी | ३ | ० | ३ | ० | ३ | ० | ३ | ० | १२ | ० |
| ११ ला. दयालचन्द पेन्शनर एजीज़ आफिस श्रीनगर | ५ | ० | ० | ० | १ | ० | १ | ० | ७ | ० |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १२ ला. गोविन्द सहाय पेन्शनर श्रीनगर | ५ | ० | ० | ० | १ | ० | १ | ० | ७ | ० |
| १३ पं. मधुसूदन कौल रिसर्च कार्यालय श्रीनगर | ३ | ० | ० | ० | २ | ० | ० | ० | ५ | ० |
| १४ ला. तुलसीराम पेन्शनर पवलिकवर्क्स श्रीनगर | १ | ० | ० | ० | ० | ० | ० | ० | १ | ० |
| १५ पं. नित्यानन्द शास्त्री पेन्शनर श्रीनगर | ५ | ० | ० | ० | २ | ० | २ | ० | ९ | ० |
| १६ पं. अवतारकृष्ण प्रोफेसर श्रीनगर | ३ | ० | ० | ० | १ | ० | १ | ० | ५ | ० |
| १७ पं शिवराम शास्त्री बी० ए० | १ | ० | ० | ० | ० | ० | ० | ० | १ | ० |
| १८ ला. चिरञ्जीलाल ठेकेदार श्रीनगर | ६ | ० | ६ | ० | ३ | ० | २८ | ० | ४३ | ० |
| १९ पं. वासुदेवशास्त्री | १ | ० | ० | ० | ० | ० | ० | ० | १ | ० |
| २० पं. नाथराम शास्त्री | १ | ० | ० | ० | ० | ० | ० | ० | १ | ० |
| १ पं ऋषीश्वरनाथ बी०ए० | १ | ० | ० | ० | ० | ० | ० | ० | १ | ० |
| २२ पं. माधवभानु | १ | ० | ० | ० | ० | ४ | १ | ० | २ | ४ |
| २३ ,, ऋषिराम (लाहौर) | १०० | ० | ० | ० | ० | ० | ० | ० | १०० | ० |
| २४ ,, बलकाक रैनाकरी | १ | ० | ० | ० | ० | ० | ० | ० | १ | ० |
| १५ ,, मुकन्दराम श्रीनगर | १ | ० | ० | ० | ० | ८ | १ | ० | २ | ८ |
| २६ ,, गोविन्दभट्ट रैनावारी | १ | ८ | ० | ० | ० | ८ | १ | ० | ३ | ० |
| २७ ,, जियालाल कौल अम.ए | ३ | ० | ० | ० | ० | ० | ० | ० | ३ | ० |
| २८ ,, रघुनाथ जाडू शास्त्री | १ | ० | ० | ० | ० | ० | १ | ० | २ | ० |
| २९ ,, महेश्वरनाथ | १ | ० | ० | ० | ० | ० | ० | ० | १ | ० |
| ३० ला. रञ्जीतराय पेन्शनर | २ | ० | ० | ० | ० | ० | ० | ० | २ | ० |
| ३१ पं. चान्दनारायण प्रोफेसर | २ | ० | ० | ० | ० | ० | ० | ० | २ | ० |

| | | | | | |
|---|---|---|---|---|---|
| ३२ ,, अमरनाथदर मिन्युसिपलिटी श्रीनगर | ८ ० | ० ० | ० ० | ० ० | ८ ० |
| ३३ ला. रलाराम गुरुकुल गुजरानवाला | १ ० | ० ० | ० ० | ० ० | १ ० |
| ३४ ,, सुन्दरदास राजकीय वकील श्रीनगर | ३ ० | ० ० | १ ० | १ ० | ५ ० |
| ३५ पं. सुखानन्द शास्त्री श्रीनगर | १ ० | ० ० | ० ० | ० ० | १ ० |
| ३५ ला. हरभगवान पेन्शनर श्रीनगर | ५ ० | ० ० | ० ० | १ ४ | ६ ४ |
| ३७ पं. मधुसूदन रैनावारी | १ ० | ० ० | ० ० | ० ० | १ ० |
| ३८ ,, गोवर्धन राजकीय पाठशाला श्रीनगर | १ ० | ० ० | ० ० | ० ० | १ ० |
| ३९ ,, ऋषिराम द्राबीयार श्रीनगर | १ ० | ० ० | ० ० | ० ० | १ ० |
| ४० ,, विश्वनाथ वाजपुर श्रीनगर | २ ० | ० ० | ० ० | ० ० | २ ० |
| ४१ ,, योगीन्द्र वैद्य वाचस्पति अमीराक दल श्रीनगर | १ ० | ० ० | ० ८ | १ ० | २ ८ |
| ४२ ला. शिवनाथ नन्दा बन्कर श्रीनगर | ५ ० | ० ० | ० ० | १ ० | ६ ० |
| ४३ ,, रामरलाया मनेजर नेशनलबैंक श्रीनगर | ३ ० | ० ० | १ ० | १ ० | ५ ० |
| ४४ पं. आनन्दकौल पेन्शनर | १० ० | ० ० | ३ ० | ० ० | १३ ० |
| ४५ ,, वासुदेव जाड़ू वाटर वर्क्स श्रीनगर | १ ८ | ० ० | ० ० | ० ० | १ ८ |
| ४६ ,, दौलतराम पेन्शनर श्रीनगर | ३ ० | ३ ० | २ ० | ७ ० | १५ ० |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ४७ ,, नन्दलाल कौल वैद्य श्रीनगर | २ | ० | ० | ० | १ | ० | ० | ० | ३ | ० |
| ४८ ला. राधाकृष्ण व्यापारी अमृतसर | ० | ० | ० | ० | ० | ० | १० | ० | १० | ० |
| ४९ ला. हंसराज सोनी श्रीनगर | ० | ० | ० | ० | ० | ० | ५ | ० | ५ | ० |
| ५० पं. रामचन्द्र राजदान श्रीनगर | ० | ० | ० | ० | ० | ० | ५ | ० | ५ | ० |
| ५१ ,, विश्वेश्वर राजदान श्रीनगर | ० | ० | ० | ० | १ | ० | ० | ० | १ | ० |
| ५२ बा. बलवन्तसिंह एम.ए. पेन्शनर लाहौर | ० | ० | ० | ० | १ | ० | ५ | ० | ६ | ० |
| ५३ आर.के.दत्त फोटोग्राफर श्रीनगर | ० | ० | ० | ० | ० | ० | १० | ० | १० | ० |
| ५४ पं जगद्धर जाडू हैड मास्टर मुज़फ़राबाद | ० | ० | ० | ० | १ | ० | १ | ० | २ | ० |
| ५५ ,, रघुनाथ वांगनो शालकदल श्रीनगर | ० | ० | ० | ० | १ | ० | १ | ० | २ | ० |
| ५६ ,, गोविन्द भट्ट शास्त्री मिशनस्कूल श्रीनगर | ० | ० | ० | ० | ० | ० | २ | ० | २ | ० |
| ५७ ,, जियालाल वैद्य | ० | ० | ० | ० | ० | ४ | ० | ८ | ० | १२ |
| ५८ ,, शिवनाथ शर्मा नर-पीर स्थान श्रीनगर | ० | ० | ० | ० | ० | ४ | ० | ४ | ० | ८ |
| ५९ ,, श्रीधर भट्ट शास्त्री | ० | ० | ० | ० | १ | ० | १ | ० | २ | ० |
| ६० ,, नाथराम हुंडु शास्त्री रैनावारी | ० | ० | ० | ० | ० | ४ | ० | ० | ० | ४ |
| ६१ ,, सुन भट्ट शास्त्री | ० | ० | ० | ० | ० | ४ | ० | ४ | ० | ८ |
| ६२ ,, टीकाराम शास्त्री | ० | ० | ० | ० | ० | ४ | ० | ० | ० | ४ |
| ६३ ,, विश्वदेव शास्त्री | ० | ० | ० | ० | ० | ४ | १ | ० | १ | ४ |

| | | | | | |
|---|---|---|---|---|---|
| ६४ ,, देवराज शास्त्री राज-गुरू जम्बू' | ० ० | ० ० | ० ० | २ ० | २ ० |
| ६५ ,, हरिराम वकील आनु महल | ० ० | ० ० | ० ० | १ ० | १ ० |
| ६६ ,, खुशीराम हेडमास्टर नार्मल स्कूल श्रीनगर | ० ० | ० ० | ० ० | २ ० | २ ० |
| ६७ ,, गोविन्द राजानशास्त्री एम. ए. एम ओ. अल | ० ० | ० ० | ० ० | २ ० | २ ० |
| ६८ ला. बालमुकुन्द कपूर बैन्कर श्रीनगर | ० ० | ० ० | ० ० | १० ० | १० ० |
| ६९ बक्सी अमरनाथ वैद्य कस्टम श्रीनगर | ० ० | ० ० | ० ० | २ ० | २ ० |
| ७० रणवीर पाठशाला बनारस | ० ० | ० ० | ० ० | १ ४ | १ ४ |
| ७१ आचार्या कन्यागुरुकुल डेहरादून | | | | १ ४ | १ ४ |
| सूद बैंक से | | | | | ६५ १३ |
| योग | २७३ ० | २० ० | ४० ४ | १६४ \|\|\| | ५६३ \|\|\|- |
| ... | ... | ... | ... | ... | -)६ |
| योगाकलनम् | | | | | ५६३ \|\|\|=) ६ |

———

# काश्मीरान्तर्वर्ति श्रीनगरस्थ संस्कृत साहित्य पारिषदः

## व्ययः

| सं० विषय | १९८३ ८४ ८५ वर्षेषु | १९८६ ८७ | १९८८ | १९८९ | योग |
|---|---|---|---|---|---|
| | रु० आ० पा० | | | | |
| १ रजिस्टर तीन ( ३ ) | २ १३ | | | | २।.।-) |
| २ कीमत कार्ड व छपाई | ४ ॥)आ. | | | | ४॥) |

| | | |
|---|---|---|
| ३ टिकट ( डाकव्यय ) कार्ड | ३=)आ० | ३=) |
| ४ छपाई विज्ञापन पत्र तथा लिफाफा | ४।-)आने | ४।-) |
| ५ छात्रार्थ परितोषिक | ५ | ५) |
| ६ वेतन सेवक | १३ | १३रु० |
| ७ फुटकल व कार्ड लिफाफा इत्यादि | ।।।=)६पा० | ।।।=)६ |
| ८ विज्ञापन पत्र | ७।।।-) | ७।।।-) |
| ९ वेतन सेवक | ८रु० | ८रु |
| १० वेतन सेवक | ७रु० | ७रु० |
| ११ पत्र व्यवहार व्यय | १रु० ६पा० | १रु०९पा |
| १२ डाक व्यय 'श्रीं' पत्र प्रेषणार्थं प्रोफ रजिस्टरी पत्र व्यवहार | १०।।-)९ | १०।।-)९ |
| १३ डाक महसूल बाबत 'श्री' पत्र लवपुर यन्त्रालय | १।।।=)० | १।।।=)० |
| १४ रबर ( मुद्रा ) मोहर | ३।।)० | ३।।)० |
| १५ लिफाफे ( बड़े ) | १रु० ० | १रु० |
| १६ फैल (File)पञ्जिका | ≡)० | ≡)० |
| १७ रजिस्टर | ।।।=)० | ।।।=)० |
| १८ सर्वानन्द के पास | ।)६ | ।)६ |
| १९ छपाई 'श्री' प्रथमांक | ४४ )० | ४४)० |
| २० छपाई 'श्री' द्वितीयांक | ५०।)० | ५०।)० |
| २१ छपाई 'श्री' तृतीयांक | ४१।)० | ४१।)० |
| २२ सेविंग बैंक पञ्जाब नेशल बैंक श्रीनगर ३१ दिसम्बर १९३२ तक | ३३३।।।≡)६ | ३३३।।।≡)९ |
| २३ रजिष्ट्री लेख प्रैस लाहौर | | ।)६ |

२४ वेतन सेवानंद १९८९ ७)०

२५ रजष्ट्री लेख लाहौर ≡)०

३३॥≈)६ १५॥।-) ८रु० ०) ६ ५०६।≈)

सर्व व्यय योगः ५६३॥≈)६

हस्ताक्षराङ्कनम्

कुलभूषण परिषन्मन्त्री
शिवदास परिषदः प्रधानः
नित्यानन्द उपप्रधानः
चिरञ्जीव कोषाध्यक्षः

———

## भगवत्कीर्तनम् ।

१ अयि देव तावकीनं, शिव नाम कीर्तयामः ।
शुभ भक्ति सक्तचित्तास्त्वां सन्ततं स्मरामः ॥
२ त्वमु दीन हीन बन्धुर्गुणरत्न राशि सिन्धुः ।
हरणं शुचाममरणं, शरणं वयं व्रजामः ॥
३ जगदादिचित्स्वरूपं, भुवनस्थ भूप भूपम् ।
तमरूपमप्रतीकं, परमं प्रभुं भजामः ॥
४ मधुरं सुधीर गेयं, मुनिभिः सदैव गेयम् ।
निगमामृतं पिवन्तो हृदयानि तर्पयामः ॥
५ भुवनेऽनवद्य विद्या इह धार्मिकाश्च हृद्याः ।
सततं सतामनिन्द्या भगवन्तमर्चयामः ॥

धर्मदेवः सिद्धान्तालङ्कारो
विद्या-वाचस्पतिः ( बंगलौर )

 

# संस्कृत भाषा प्रचारः

( पं० लक्ष्मीचंद्र शर्म्मा शास्त्री )

श्रीमन्तः माननीयाः सुहृद्वर्याः ! स्वीकुर्वन्तु साष्टाङ्ग-प्रणतिततिं मे साहित्यालंकारभूताः । आदौ तावत् परिषद-मिमां धन्यवादेनाभिधाय सदसो भूषणान्यपि सुशब्देन पूजयामि पश्चात् । तत्पश्चादात्मानमपि कृतकृत्यं मन्यते अयं जनः । यतोऽद्यहि स्वनगरात् निष्क्रान्तः सुशकुनान् पश्यन् श्रीनगरं यदैव प्रविशामि तदैव मनसा विनिश्चितम् । अपरिचयः खलु नगरेऽस्मिन्, कीदृशी स्थितिः भविष्यति कथंभूताच । अत्रत्यै-रपि अविज्ञातोऽयं जनः किं सम्पत्स्यते । समयातिक्रमोऽपि न सहजः । तदा च विपदवलम्बनभूतया श्री सरस्वत्या कंठस्थया किमप्यभिहितं यत् वत्स ! नानाविधमधीत्य शास्त्रं राजनीतिं च किं मूढ इव शोचसे बहु-बहुवार मधीतं त्वया-को विदेशः सविद्यानां किं दूरं व्यवसायिनामिति। भविष्यति परिचयोऽपि शनैः शनैः । महद्भिः समं भविता ते संगम इत्यस्मिन्नेव विश्वस्तवचासि मातुः संपादितो विश्वासः । अनृतं नाभिधीयते सुरैरिति आचि-रादेवास्य वचसः समजनि दृष्टिगोचरो विपाकः । आदौ एव श्रुतो मया जगद्धरेतिविख्यातस्य विदुषः श्रीमुखात् यदत्र प्रान्ते जागर्ति खलु निकटस्था अद्वितीया संस्कृतसाहित्यपरिषत्-आकर्ण्य चेमं आनन्दसंदोहमुदन्तजातं मोदतेतरां नश्चेतः । हर्षाब्धौ च अभिषिक्तोयं तनुः । संकल्पितानि कार्याणि पारं गच्छन्ति मनोरथस्य । आसीन्मे मनसि कश्चित् सम्मिलेत् संस्कृतज्ञः यतो हि 'समानशील व्यसनेषु सख्यमिति', समभावाः हि प्रायशः शोभना भवन्ति । अतुल्यव्यसनशीलानां कृच्छ्रादेव अतिक्रमते कालः । अतः विश्वंभरस्य भगवतो माहात्म्यगरिमाणं वेत्ति अयंजनः संप्रति तु अतिक्रमिष्यतेऽयं कालः सम्यक्तया यतश्च स्मारं स्मारं च संस्कृत साहित्यपरिषदं मे हर्षावलिः पौर्ण-

मास्यां शारदं शर्वरीकरं समीक्ष्य कुमुदश्रेणीव प्रफुल्लतेतरां मदीये देहेऽस्मिन् । इदमप्याकर्णितं मया बहुशो यद् सृष्टि प्रादुर्भावे क्षीराब्धिशायिनं भगवन्तं विश्वजनीनमानन्दमाप्तुं उन्निद्री-कुर्वन्ती कमलेव गीर्वाणव.एयनभिज्ञान् मोदयन् निलिम्पवाएयभि-ज्ञान् भासयन् स्वरूपेण हर्षयन् संस्कृत साहित्यपरिषदो नाम ख्यापयन् जगति श्रीभास्करः काश्मीरिकोदयाद्रि स्वभासा भास-यन् प्रत्युषसि चमत्करोति प्रपञ्चमिदम् । यथा चोदयन्तं दिवा-कर मग्निहोत्रिणः अहरहः पर्युपासते प्रातः । तथैवाहमपि श्री भास्करं शुश्रूवन् भविष्यामि स्वस्थचित्तः दीर्घायुश्च । संप्रत्यसां प्रतमेव बहु प्रशंसनम् यतश्चाखिलविदितमेव कृत्स्नं रहस्यम् । इदानीन्तु सर्वं प्रशं .यन् स्वबुद्धया किञ्चिदभिहितुं अपि मेऽ भिलाषा, नान्तरं विषयम् गवेषयन्, केनोपायेन अभ्युदयो भविता निर्जरगिर, इत्यमुष्मिन्नेव विषये किमपि कथयामि । शृएवन्तु सर्वे सभासदः महात्मानः। जगति खलु परिवर्तिनि बहवो दरीदृश्यन्ते जनाः केचित् धनाढया केचित् विद्याधनाः आहो-स्वित् प्रभूताः शास्त्रमधीत्यापि लंपटाः मूर्खाः अन्ये च छलेन च विद्यां उपार्जयन्तः इतरे आंग्लभाषां यावनीभाषां च स्वीकुर्वन्तः प्रशंसन्तो लक्ष्यन्ते। परं स्वेच्छया बाल्यादेव सहर्ष मधीयानो देवगिरं कश्चित् विरल एव वर्वर्ति । प्राक् समये च अस्या एव विद्याया उत्कर्ष आसीत् । प्रतिगृहं संस्कृतोच्चारण मेव भवति स्म-बाल्यात् वार्धकान्त मधीयते स्म सर्वे गिरमिमाम् । व्यवहारवार्तापि इयमेवासीत् त्रिदिवगीः । संजल्पन्ति स्मान्योन्यं अस्यामेव गिरि सर्वे । काकथा मनुष्याणां शुकादयोपि उच्चरंति स्म शृएवन्ति स्म च भाषामिमाम् आद्रियते स्म सर्वैः चराचरैः । परममुष्मिन्काले सर्वथैव विधीयते परित्यागः । आधुनिकस्य व्यतीतस्य च कालस्य सादृश्यं चेत् संपाद्यते केनापि तदा मह-दन्तरं खलु । यदिदानीन्तने काले पूर्वंतु 'पिता पुत्रं पृच्छति' यत्

संस्कृतं अधीष्यासि, तदा संस्कृतनामोच्चारणमात्रेणैव बिभेति शिशुः। कठिनात्मका खलु विद्या दुर्गमा चास्माभिः न आसाद्यते, अतो न पठामि विद्यामिमाम्। चेद्भवान् अस्याः पाठने प्रयासं करिष्यति तदा च अध्ययनार्थं न गन्तास्मि विद्यालये। ततः भीषयन् जनकं यावनी भाषायामेव प्रवृत्तिर्भवति तस्यानुरक्तिः। एवमेव सर्वेषामेतादृश एव अवस्थाप्रवेशः। न कोऽपि अनुरागेण अधीते देवगिरम्। यस्याः नामोच्चारणमात्रेणैव सर्वे विद्यार्थिनः भययुक्ताः किं तद्ग्रहणं अध्ययनं औन्नत्यं चेति।

परं विचारणीयमेतत्। सर्वथैवात्यमेव युक्तं। कर्तव्यमिदं नः संस्कृतज्ञानां यत् नैजे गृहे संस्कृतप्रचारं क्रियेरन् सर्वे। स्वपुत्रेभ्यः संस्कृतपाठने साधु संस्कारः निधापनीयः। स्वनगरे च प्रतिबालकं संस्कृतज्ञानं स्यात्। छात्राश्चापि सानुरागं पठेयुः त्रिदिवगिरम्। विद्यालयेष्वपि संस्कृतश्रेणिः भवेत् निश्चिता। अध्यापका अपि पाठयेयुः छात्रान् सस्नेहम्। किं बहुना अतिप्रयासेनैव प्रचारो भवितुमर्हति नान्यथा। देशविद्या पूर्वविद्या मातृभाषा नो इयमेव नान्या। अतः सर्वेषामिदमेव युक्तं नः यत् अस्याः प्रचारे बहु प्रयासः संपादनीयः। भारतीभाषां सर्वे स्वीकुर्वन्तु भवन्तः। यतश्च कविकालिदासेनाप्युक्तं। संचिन्त्य संचिन्त्य जगत् समस्तं त्रयो पदार्थाः हृदयं प्रविष्टाः। इक्षोर्विकारः मतयः कवीनाम् मुग्धांगनीयांगतरंगितानि॥ इति मदुक्ते वक्तव्ये चेत् काचित् त्रुटिः व्याकरणाशुद्धिप्रमादो वा स्यात्, तर्हि क्षन्तव्योऽयं वराको जनः। यतः उक्तं केनापि "गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः हसन्ति, दुर्जनास्तत्र समादधति सज्जनाः" ॥१॥ इति॥

संस्कृत प्रेमिभ्यः हर्ष समाचारः—

## आवश्यक निवेदनम्—

अयि गीर्वाण वाणी प्रणयिनः

सडिण्डिमघोषमा घोष्यते शुभसमाचारोयम्, यत्कश्मीरेभ्यः कैश्चिदुत्साहिभिः संस्कृतप्रेमिभिः संस्कृतभाषा प्रचाराय श्री पत्रिका प्रकाशमानीता।

अस्यां पत्रिकायां संस्कृत साहित्य सागरस्य विलीनानि नवीनानि काव्यरत्नानि च लेखमालारूपेण प्रकाश्यन्ते। संस्कृत साहित्यसेवादीक्षिताः विद्वान्सः स्वीयगम्भीर मनोरञ्जकोपयोगिभि र्लेखै समलंकुर्वन्ति पत्रिकामिमाम्।

श्री संचालकासंस्कृताध्यापकान् संस्कृतविद्यार्थिनश्चास्याः पत्रिकायाः प्रचारार्थं साग्रहं सानुरोधं निमंत्रयन्ति।

वार्षिक मूल्यमेक रूप्यकमाणकचतुष्टयञ्च।

प्रबन्धकः 'श्री'

सुन्वार बाग

श्रीनगर।

वर्ष ५ Vol. 5
संख्या २ Number 2

❀ ओ३म् ❀

कश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

## त्रैमासिकं पत्रम्

# श्रीः

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

SRINAGAR, KASHMIR.

श्रीनगर आश्विन/कार्तिक १९९३

*Srinagar October/November 1936*

वार्षिकं मूल्यम् १।)

प्राप्ति स्थानम्—पं० कुलभूषण: श्री कार्यालय, सुन्दरबाग श्रीनगर कश्मीर

# विषय सूची

सर्वे लेखा लेखकमहानुभावानां भाषाभूतानुसारेणैव प्रकाश्यन्ते तेषामुत्तरदायिनो लेखका एव न च सम्पादकाः ।



---

# श्रीः

वर्ष ५ संख्या २ | आश्विन संवत् १९९३ वि० अक्तूबर १९३६ ईसवी | पूर्ण संख्या १८

## ऋषिप्रवीरादिसिद्धानां जीवनचरित्रम् ।

( ले० पं० शिवनाथ शर्मा शास्त्री साहित्यभूषणः साहित्यमणिः

उपमन्त्री संस्कृतसाहित्यपरिषदः काश्मीरस्य )

देवा यत्र कृतास्पदा रुचिधरा विश्वेनिलाः कोमलाः
साध्या हस्तगताः समं वसुगणैर्विद्याधरा मानवाः ।
माहाराजिकवंशजाश्च तुषिता ह्याभासुराः सज्जनाः
सेयं शक्रपुरीमतीत्य न कथं कश्मीरभू राजते ॥

---

### मियाँशाह ( मीशाह ) कृष्णकारौ ।

पुरावृत्तम् :—

किल पुरा ईसवीयसप्तादशशताब्द्यां प्रारम्भे शाहजहाँ-राजशासनकाले सर्वतो धिक्कृतेषु क्षुत्पिपासापरिपीडितेषु हिन्दुषु एकोऽकिञ्चनः क्षुदाप्रपीडितः काश्मीरदेशोपत्यकाप्रान्तीयो हिन्दु-पुत्रः स्वगृहान्निर्गत्य ग्रामंग्रामं ( लारपरगना ) लहरविषयस्थं कमपि यवनगृहं सेवायै उपागमत् । केवलं वस्त्रान्नादिकमेव सेवाशुल्क-ममंस्त । प्रत्यहं स्वस्वामिनः अजाविकं वने चारयन्कालं निनाय ।

एकदा तद्ग्रामस्थेन केनापि हिन्दुना तदीयं स्वामिप्रेम सेवौत्सुक्यं चावलोक्य तत्स्वामिनिकटे गत्वा स्वगृहार्थे याचितोऽसौ भृत्यः। तत्पतिना प्रातिवेश्मिकप्रेममुग्धेन दत्तोऽसौ भृत्यः। हिन्दुगृहेऽपि भृत्यकार्यलग्नस्य तस्य महान्कालो व्यतीतः। एकदा कथायां स्वामिना प्रष्टो जन्मवृत्तान्तं हिन्दुगृहजन्म च निवेद्य तद्दिनात् मियाँ इति नाम्ना प्रसिद्धो बभूव। हिन्दुगृहेऽपि तस्य मियाँनामधेय-भृत्यस्य पशुचारणं दिनकृत्यमासीत्। अथैकदा वने गाश्चरयतो मियाँभृत्यस्य बहुजन्मसुकृतकर्मणः जन्मान्तरीयसंस्कारसिद्ध्यै कश्चित्सिद्धो मिलितः। यश्च वस्तुतः शिवदूत एवासीत्। मियाँ-भृत्यं कृतार्थीकृत्वा अदृष्टो बभूव। गच्छति काले मियाँभृत्यः स्व-स्वामिनः कृषिकर्म च चरन् राजकर्मचारिणा (कारदार) कारजा-त्यङ्कितेन कृष्णनाम्ना दृष्टः। राजकर्मचारी कृषिकर्म चरतो मियाँ-भृत्यस्यालौकिकी सिद्धिं दृष्ट्वा चकित इव सञ्जातः, सायं च रात्रि-निवासहेतोः तत्स्वामि हिन्दुगृहमेवाजगाम। गृहस्वामिना राज-कर्मचार्यातिथ्येन सत्कृत्यार्चितः। मियाँभृत्येन गृहस्थितानां पादक्षालनं कृत्वा राजकर्मचारिणं प्रत्यपि पादक्षालनहेतोः समुपागतम्। पादक्षालनं निषेधं कृत्वा कारदारो गृहस्वामिनं भृत्यागमनवृत्तान्तमपृच्छत्। गृहस्वामी सर्वं वृत्तान्तमकथयत्। श्रुत्वा च तद् कारदारो भोजनादि निर्वर्त्य स्वगृहार्थं मित्याँभृत्यमयाचत। गृहस्वामीः—महाराज! मदीयं सस्त्रीपुत्रं गृहं भवदधीनं, का वार्ता भृत्यस्य, नीयतां स्वगृहम्। तथानुष्ठिते रात्रौ विश्रम्य कारदारः प्रातः पुनरपि गृहपतेराज्ञां लब्ध्वा मियाँभृत्यं स्वात्मसात्कृत्वा निर्जगाम। पथि मियाँभृत्यो नूतनस्वा-मिनं विजिज्ञापयत्। स्वामिन्! इदमश्वमारोहनक्रियाकर्तृकं कुरु, विश्रान्तोऽसि, अहमग्रतो भूत्वा भवामि। कारदारः—नहि २ भवाने-वाश्वारूढो भव, अहमग्रेसरो भवामि। भृत्यः—किं मया कृतं, अकृत-सेवस्य सेवकस्य मम भवन्तो रुष्टाः सञ्जाताः। कारदारस्तु मियाँ-भृत्यस्य पादावुपसंगृह्य प्रार्थनां कृतवान्। महात्मन्! ज्ञातोऽसि

सम्यङ्मया, अनुगृहाण मां दासोऽस्मि ते यावज्जीवम् । मियाँभृत्यः—भवतु तुष्टोऽस्मि, ते परिपक्वा दशा, त्वामधुना संस्करोमि । इत्युक्त्वा ग्रामात्तस्मान् निमिषार्धेन कृष्णकारः सह मियाँशाहेन रैणादित्य-वाटिकास्थं ( रैणावारी ) स्वंगृहं प्राप्य गृहलक्ष्मीमाज्ञापितवांश्च । भवति ! गृहलेपनं विधाय तत्र भवतामेतेषामर्थे स्वासनं विस्तारय । तया च भर्त्राज्ञासमकालमेव सर्वं यथोदितं कृतं, मियाँशाहश्च तत्रोवास । गच्छति काले प्रत्यहं मियाँशाहः अर्धरात्रवेलायां निर्गत्य शङ्कराचार्यपर्वतोपत्यकास्थं दुर्गानागप्रदेशं स्वधार्मिकक्रियायै गच्छतिस्म । मध्याह्नवेलायां पुनरागत्य मौनेनैव दिनमत्यवाहयत् । एकदा कृष्णकारो रात्रौ जागरमाणः समये निर्गतं मियाँशाहं छाया-वत्पृष्ठे गत्वा दुर्गानागकुण्डोपविष्टं तं पृष्ठ उवास । कियत्क्षणानन्तर-मकस्मात् कृष्णकारस्य क्षुन्मुखान्निर्गता । यया प्रतिबोधितोऽसौ मियाँशाहः स्वपृष्ठगं कृष्णकारं ददर्श । उवाच च । भो कृष्ण ! आगच्छ समयोऽस्ति ते । इत्युक्त्वा मियाँशाहो दुर्गाकुण्डादुद्धृतं जलपात्रमेकं कृष्णकाराय प्रायच्छत् । पानसमकालमेव निश्चेतनो बभूव कृष्णकारः । एवमेव द्वितीयं तृतीयं पात्रमपि ददौ । द्वितीयपात्र-पानेऽपि न संज्ञामवाप्तवान्, ततस्तृतीयपात्रपानकाले संज्ञामवाप्य सिद्धो बभूव भविष्यद्वृत्तमपि उदाजहार । दृष्ट्वैतत्कृष्णकारस्यासाम-यिकं मियाँशाहो रुष्टः सन् भर्त्सयन्नुवाच । अरे ! किमेतावतैव निरङ्कुशोऽसि जातः । इत्युक्त्वा तस्य मुखं पिधाय, गच्छ तावदिद-ममूल्यरत्नं त्वत्पार्श्वे निक्षेपरूपेण तिष्ठतु, यावत् ऋषिप्रवीरो ( ऋषिपीरः ) सिद्धो जनिं गृहीष्यति, तस्मै दास्यसि, स एवास्य योग्यभूमिरिति शशाप, तस्मात् स्थानाच्च उदतिष्ठत् । पूर्ववन्न कृष्ण-कारगृहमगमत् रैणादित्यवाटिकायामेवान्यं स्थानं यावज्जीवं निष-साद, यत्त्वधुनापि मीरशाहपुर इति नाम्ना प्रसिद्धमस्ति ।* मियाँशाहे-

---

*नोट:—तदानीं काश्मीरेषु यवनशासनत्वात्पारसीकभाषैव राजभाषा ( Court Language ) आसीत् । अतः शाह इति पीर इति च, उत्तमोत्तमो-पाधिः ( Title ) तदा आसीत् ॥

श्रीः

## श्रीरुय्यकः।

असौ मङ्खमहाकवेर्गुरु र्नानाशास्त्र विवृति लेखनकुशलः। सौहार्दप्रश्रयरसस्रोतइवायं किलाऽलङ्कारसर्वस्वादिकान्बहून् साहित्य-ग्रन्थान् प्रणिनाय। स्वशिष्यस्य कृतिकौशलं निर्वर्ण्य राजानकरुय्यकः पण्डितपरिषदि मङ्खकं विशेषतया समभिनन्दयामास।

## रम्यदेवः।

सदा काषायवसनसंवीतोऽसौ वेदान्तदर्शनस्यानुपमो विद्वान्। अनेन कठशाखाविवृत्तिः, इष्टसिद्धि विवरणं चेति पुस्तकद्वयं रचितमासीत्।

## लोष्टदेवः।

अयं संस्कृतप्राकृतशौरसेनी मागधीप्राच्यपैशाचेतिषट्भाषा-भिज्ञः काव्यकलाकुशलोऽनेकप्रबन्धनिर्माताच। असौ तस्मिन्काले ऽलङ्कारपण्डितमेकादशपद्यैर्वर्णयामास।

## श्रीगर्भः।

असौ वृद्धोऽदभ्रगुणसंदर्भो वक्रोक्तिरचनाचातुरीचणः प्रभा-करगुह्यग्रन्थ व्याख्याता च पण्डितः।

## मण्डनः।

सौन्दर्यस्मेरमुखः श्रीगर्भस्यसुतोऽल्पवयस्क एव सन् चतु-र्दशविद्यानां पारदर्शी कविवरः।

## श्रीकण्ठः।

श्रीगर्भस्य पुत्रोऽसावपि मण्डनस्याऽनुजश्च। सर्वतोभद्रम-स्य पाण्डित्यम्।

## गर्गः।

सत्कविकुलतिलको वर्षीयान् विद्वान्, अस्य काव्येषुच्छेका-नुप्रासाः स्वैरं नरीनर्तति।

## श्रीदेवधरः।

असौ भगवतो वैकुण्ठनाथस्याऽनन्य उपासकः। 'प्रदीप' नामकं बृहद्विवरणं 'मन्दिर' (वास्तु) शास्त्रस्याऽसौ रचितवान्। तस्मिन्-समयेऽसौ पद्यद्वयेन लङ्कमवर्णयत्।

## नागः।

व्याकरणपारावारपारीणः साहित्यविद्यासौविदल्लोऽनेकप्रबन्धप्रणेता युवा विद्वद्वरः।

## श्रीत्रैलोक्यः।

अयं भट्टश्रीकुमारिलस्य नव इवावतारस्तर्ककर्कशोऽपि सन् सरसकविकर्मणि प्रगल्भः सदाचारभूषितो बुधवरः।

## "दामोदरः, षष्ठश्च"।

"दामोदरः, षष्ठश्च"

एतावपि क्रमेण नैयायिकात्मदर्शननिष्णातृ-भूषणौ पण्डित-पुङ्गवौ।

## जिन्दुकः।

वाग्देवताकेलिकन्दुक इवायं भट्टप्रभाकरशास्त्रनदीष्णः काव्य-रचनाचतुरश्च।

## जल्हणः।

अयं वक्रोक्तिवचनविचक्षणः कविवर-राजशेखरस्य पुनर्जन्मान्तरग्राहीव राजपुरी-नरेशस्य सोमपालस्य सान्धिविग्रहिकः। अनेन सोमपालविलासाख्यं काव्यं स्वरचिताऽलङ्कारानुसारिणीटीकोपेतं रचितमासीत्।

## कल्याणः।

असौ महाकविरलकदत्तकृतकाव्यानामनुशीलनशाली बिल्हणवत् प्रौढोक्तिकल्पनाकुशलो विविधकथाकोविद इतिहासधुरन्धरः पण्डितः। (अयं कल्याणः कल्हण एवेति प्रतीयते)।

श्रीः


## श्रीगुन्नः ।

असौ केशकरप्रकमनीयः 'प्रभाकरकर्तबृहती' शास्त्रस्य तस्मिन् कालेऽनन्यो विद्वान् बभूव ।

## जनकराजः ।

अयं महाभाष्यस्याख्यानप्रणेता यज्वनां वरेण्यो बुधवरः ।

## आनन्दः ।

अयं महाकवेः शम्भुभट्टस्य युगेऽनेकशास्त्रनिष्णातस्तत्कालीन-भिषजां मूर्धन्यभूतः ।

## श्रीसुहलः ।

असावपि शम्भुमहाकवेः सुतः श्रीमदानन्दस्याऽनुजन्माऽऽयुर्वेदविद्याविशारदोऽगदंकारवरः ।

## 'सुहलो' द्वितीयः ।

अयं कान्यकुब्जभूपनेर्गोविचन्द्रस्य दूतस्तदानीं कश्मीरेषु समाजगाम, वैयाकरणेषु लब्धप्रतिष्ठोऽयमासीत् । अस्यानुयोगेन मंखकस्तदानीमेव समस्यामेकामपूपुरत् ।

## श्रीतेजकण्ठः ।

असौ कुंकुणनरेशस्य श्रीमदपरादित्यस्य दूतस्तस्मिन्काले काश्मीरसभाया आसनमलञ्चकार । अनेनानेके वादिनो निर्जिता आसन् । मङ्खकेन सहाऽस्य चिरं संलापोऽभूत् । एतदनुरोधेन मङ्खको नैजं राजस्वतिनैपुण्यमपि प्राचीकटत् ।

एतदतिरिक्ताश्च तत्र 'श्रीगोविन्द भुड्डुश्रीवत्साऽनन्दपद्मराज-लक्ष्मीदेव योगराज-वागीश्वरपट्टुनामानोऽनेकशास्त्रपारदर्शिनः पण्डित-वरिष्ठाः समासीना अभूवन् ।

मङ्खकेन तत्कालीनपण्डितानां वर्णनानिवेशनेन निजकाव्ये स्वर्णे सौगन्ध्यमिव संपादितम् । श्रीकण्ठचरितं काव्यं किल भारतीय-

साहित्ये रत्नभूतमस्ति, येन तत्कालीनसाहित्यस्येतिहासविवेचने महत्साहाय्यं भवति।

आः क्व गतः स कालः ? यदा कश्मीरकाश्यप्यां नानाकविकुलतिलकानां पण्डितपुङ्गवानां च साहित्यपटहडिण्डिमः स्वैरं बोभवीति स्म ? अपि सा साहित्यच्छटा पुनरपि कश्मीरधरावलये विभासेत ? भवतु—

"पर्यन्ततः परम एव शिवः प्रमाणम्"

---

## सन्ध्या

(ले०—पं० गोविन्दराजानकः शास्त्री M. A. M. O. L., L. T., Prabhakar)

**मनुः**

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्यं च सन्ध्योपासनमेव च॥

हं हो ! धर्मपथावलम्बिनो मान्या भारतीया आर्याः। कलियुगेऽस्मिन् भारतीयाणामार्यवर्याणामधोगतिं विगण्य्य भूयो भूयश्चेतः समुत्सुकायते तत्त्वजिज्ञासायै, नच शान्तिमेधत अन्तर्हृदयपटले। अपरिमितां नानाविधां भारतीयाणां वेदनां स्मारं स्मारं सर्वथाऽऽधिभौतिकीमाध्यात्मिकीं च दुर्बलतां निरीक्ष्य क्षते क्षारमिव प्रतिभाति। परमौषधं परमोपायभूतं परमेश्वरशरणात्मकं प्रातरेव सन्ध्यावन्दनमारोग्यसाधनं मनःसन्तोषवर्द्धकं दुःखदारिद्र्यवारकं परमैश्वर्यप्रदमन्तरा नान्योपायोऽस्ति भूतले विशेषतस्त्रैवर्णिकाणां हिन्दूनां भारतेऽस्मिन्। पाश्चात्यसंस्कृतिः परम्परया देशाचारानुगता तत्तद्देशीया तत्तज्जनपदवासिनां हितकरा यत्र उपानत्परिशोधनं केशानुरञ्जनं तैलाद्यभिमर्दनादिकमेव सर्वं शारीरं कर्म प्रधानमुपलक्ष्यम्। न हि सर्वत्र सर्वदा सर्वथा एकैवाभिन्नैव संस्था निखिलापा-

 


यनिवारणसाधनभूता भवितुं शक्यते। तस्मादत्र भारते भगवच्छरणमन्तरा नान्यः पन्था, यन्मूलभूता हि सन्ध्या। सा च—

त्रयाणां चैव देवाणां ब्रह्मादीनां समागमः।
सन्धिः सर्वसुराणां च तेन सन्ध्या प्रकीर्तिता॥

तस्मात्—'सम्यग् ध्यानं सन्ध्या'। अह्नो रात्रेश्च संगमे मनसः शान्तिप्रदेऽनेहसि यथाविधि शुचौ देशे—

"अहरहः सन्ध्यामुपासीत" "उद्यन्तमस्तं च यान्तमादित्यमभिध्यायन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते" अतः—

"विप्रो वृक्षः मूलकं तत्र सन्ध्या वेदः शाखा धर्मकर्माणि पत्रम्।
तस्मान्मूलं यत्नतो रक्षणीयं छिन्ने मूले नैव पत्रं न शाखा॥" इति

सन्ध्या नाम चिच्छक्तिरूपा देवता तामुपासीत। स्वकीयां चिच्छक्तिं हि ध्यायन् य उपासते स एव-सर्वाणि दुर्गाणि तरति, आधिव्याधिभ्यो-मुक्तो भवति सर्वमायुर्भद्रमेवाश्नुते। यतः—

या सन्ध्या सा जगत्सूतिर्मायातीता हि निष्कला।
ईश्वरी केवला शक्तिस्तत्त्वत्रयसमन्विता।
ध्यात्वार्कमण्डलगतां सावित्रीं वै जपेद्बुधः॥
'सन्ध्या तूपासिता येन तेन विष्णुरुपासितः।
दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते॥

इति योगियाज्ञवल्क्यः।

अतः—सन्ध्योपस्त्यादिकर्माणि वेदेना चोदितानि वै।
पूजां तैः कल्पयेत्सम्यक् संकल्पः कर्मपावनीम्॥ श्रीमद्भागवते।

तत्र व्यासः—प्रणवव्याहृतियुतां गायत्रीं शिरसा सह।
उच्चार्य दत्त्वार्घ्यमादौ सन्ध्याकर्म समाचरेत्॥

तत्रादौ प्राणायामः। तल्लक्षणं तु—श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः स च—

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
प्राणायामास्त्रयः कार्या लक्षणैश्च त्रिभिर्युताः।
आहो मन्दो विमोक्षश्च लक्षणत्रयमुच्यते।
आधानं रोधमुत्सर्गं ध्यायेदेताननुक्रमात्।

एवं गायत्रीं पठन् पूरककुम्भकरेचकेषु ब्रह्मविष्णुशिवान् ध्यायन् प्राणायामं कुर्यात्। तथाच—

ब्रह्माणं केशवं शम्भुं ध्यायेदेताननुक्रमात्।
एकावर्तः पूरकः स्यात् कुम्भको द्विगुणस्तथा।
रेचकस्त्रिगुणः प्रोक्तः प्राणायामः स उच्यते ॥

तत्र नियमस्तु—

बद्धासनं नियम्यासून् स्मृत्वा ऋष्यादिकं तथा।
संनिमीलितदृङ् मौनी प्राणायामं समाचरेत् ॥
रेचको विसृजेद्वायुं पूरकस्तन्निरोधकः।
समेन संस्थितो यस्तु कुम्भकः समुदीर्यते ॥
ऊर्ध्वं नासिकयाकृष्टः श्वासः पूरक उच्यते।
कुम्भको निश्चलश्वासो रेच्यमानस्तु रेचकः ॥

तत्फल तु वसिष्ठः—

निरोधाज्जायते वायुर्वायोरग्निः प्रजायते।
अग्नेरापो व्यजायन्त तैरन्तः शुध्यते त्रिभिः ॥

योगियाज्ञवल्क्यस्तु—

भूर्भुवः स्वर्महजनस्तपः सत्यं तथैव च।
सप्त चोंकारसंयुक्तास्तथा तत्सवितुः पदम् ॥
आपो ज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत्।
त्रिरावर्तनयोगात्त प्राणायामः स शब्दितः ॥

तत्रादौ प्राणायामासनविधिर्यथा—

"वामोरूपरि दक्षिणं हि चरणं संस्थाप्य वामं तथा ।
याम्यूरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढौ ।
अंगुष्टौ हृदये निधाय चिबुकं नासाग्रमालोकये-
देतद्व्याधिविकारनाशनकरं पद्मासनं प्रोच्यते ॥
दक्षिणं चरणं न्यस्य वामोरूपरि योगवित् ।
याम्योरूपरि वामं च पद्मासनमिदं विदुः ॥

[ सम्पादकः

—

# श्री अमरनाथ-यात्रा

(ले०—पं० लक्ष्मीचन्द शर्मा शास्त्री प्रभाकरः)

श्रावणशुक्लपूर्णमास्यां भवति श्रीअमरनाथयात्रा सर्वसामान्या प्रतिवर्षे । आगच्छन्ति च दूरदेशान्तरागताः परःसहस्राः जना दर्शनार्थम् । एतदाकर्ण्याहमपि सज्जीभूय मंत्रितुमारब्धः स्वीयसहचरेण समं, तत्प्रोत्साहितश्च तत्सार्धमेव गतवान् । श्रीनगरीतो पहलग्राममासाद्य विश्रम्य च निशि प्रभाते पदातिरेव चन्दनवाड़ीं प्राप्तः, ततो निष्क्रम्य शेषनागं, ततो गत्वा पंचतरङ्गिण्यां स्नात्वा संपादितो विश्रामः । तत्रैव प्रसुप्य उषस्येव ब्राह्म मुहूर्त उत्थाय हिमावृतेन मार्गेण गच्छन् निजसुहृदा समं परिहसन्नेव श्री अमरनाथ सामीप्यं संप्राप्तः । श्री अमरनाथचरणेषु स्रवन्त्याममरगंगायां स्नानादि नित्यकर्म समाप्य दर्शनार्थमगमम् ।

प्रात आसीत् मुनि (७) वादनसमयः । स्वमित्र चमनलालद्वितीयोऽहं भूधरान्तराले कठिनतरधवलहिमतले वहन्त्याः अमरगंगायाः शीततमातिस्वच्छाम्बुप्रवाहसमीपे स्थित आसम् । तन्नैसर्गिकसौन्दर्ये मग्नमासीत् मन्मनः, यन्निर्मातुं विधात्रा स्वीयोपचारादिकमखिलमेव संपूर्णतां नीतमिति प्रतीयते स्म । नासामान्य-

शान्तेर्निवासो समपद्यत् मच्चेतसि, यत्संभावना एतादृशरम्यप्रदेश एव भवितुमर्हति केवलम् । सहसैव 'दर्शनीयोऽयं पारावतः', इत्यह श्रुतवान् । गुहां प्रति दृष्टं मया, नाद्विंगोचराः संजाताः कपोतास्तु, परमाकृष्टं मे हृदयं गह्वरान्तररम्यदृश्येन । किमासीत् गह्वरम् ? वस्तुतः चराचरस्वामिनः सच्चिदानंदस्येश्वरस्य निवासयोग्यं सदनमेव अत्युन्नतपर्वतश्रेणिमध्येऽपरोक्षदिव्यगुणान्विता रम्या वाटिका क्षीर-वद्धवलतुषारयुताध्वना समं दृश्यमाना विचित्रा पुष्पावलिः—कुत्रचित मार्गेण सहाथवा क्वचिच्चाधस्तात् मार्गस्य स्रवन् मौक्तिकवलेरपि रम्यो-ऽमरगंगायाः हिमादपि शीततमोऽम्बुप्रवाहः-प्रभातोदितदिनमणिमरी-चिभिरुज्वलिता नभःकान्तिः-क्वचिच्च श्यामवाटिकातो गुहान्तं यावत पाषाणवद्दृढतमहिमखचिताः सोपानपंक्तयश्चेति प्राकृतिकसृष्टिवै-लक्षण्यं समीक्ष्य तद्विधातुः परमात्मनो माहात्म्यगरिमा स्वयमेवा-कर्षति चित्तं गुहाप्रवेशात्पूर्वम् । प्रशान्ते तत्काले चे प्रतीयते स्म यदावाभ्यामातिथ्यमेव उररीकृतं विश्वनाथस्य । तदास्मन्मनो प्रकृति-दृश्यविलुप्तं नासीत् परं तस्मिन्नपि देवदेवस्य प्रभोः निवास एवाव-लोक्यते स्म ।

एतद्दर्शनविस्मितस्य मे पदक्रमाः विश्रान्ता इवाग्रत एव व्रजन्ति स्म । भूयः 'पश्यतामयं कपोतः' ध्वनिरुदगच्छत्, दत्तकर्णो-ऽहमश्रौषम् । गुहानिकटस्थावेवावां आस्व । आसीद्गुहा ऋषीणां समुचितं स्थानं तपसे खलु-ईदृग्विधा रमणीया विशाला च दुर्लभा एवान्यत्रेत्यनुमीयते स्म । 'निवसत्यत्र भगवांछिवः, इति लोकोक्तिः सत्यतामगमत् स्वत एव । एतस्मिन्नन्तरे 'फड़ फड़ेति शब्दः श्रुतिपथमागतो गुहोपरिभागात् । दृष्टिरपि मे तत्कालमेवागच्छत् ततः । तत्रासीत् रमणीयतरं कपोतयुगलम् । तद्दर्शनादेव ज्ञायते स्म सर्वगोप्तुः परमेश्वरस्य प्रकृतिवैचित्र्यम् । अहो ! ईदृग्शीताधिके

निर्जीवे प्रदेशे कमाश्रित्य जीविताविमौ खलु, कोऽनयोः रक्षकः, कथं कुतश्च भोजनमवाप्यते आभ्याम्-कथमियद्दूरमागतौ किमर्थश्चेमे प्रश्नाः भ्रान्तं विदधति मानवचित्तम्। केनापि पूर्णोत्तरेण न संतुष्यते चेतश्चंचलं मनुजस्य, अतोऽवलम्बमनवाप्य सर्वज्ञस्य विभोः महात्म्यगरिमाणमेवोत्कृष्टं मन्यमानोऽवनतो भवति तच्चरणयोरेवान्ते। उद्गच्छंति विविधाः विचाराः, प्रभो ! वर्वर्ति खलु गुप्ततमेऽपि प्रदेशे भावत्को महिमालेशः। ईदृङ्निर्जनस्थाने किमासीत ते प्रयोजनं जीवरक्षणस्य, किम् प्रदेशस्यास्य अधिष्ठातारौ देवौ अथवा पूतात्मानाविमौ सांसारिक कुसंपर्कतः पृथगेव स्थातुमभिलष्यते त्वया किम्, सत्यमेव त्वया ईदृशे प्रदेशे जनितौ, यत्रत्यो जलवायुरपि अलौकिक एवाहारार्थमप्यनयोः लौकिकाः पदार्थाः न शक्यंते भवितुम्, सर्वज्ञ ! श्रुतमस्माभिर्यत मनुष्य एव सर्वशिरोमणिः परं भ्रान्तोऽस्मि भवदीयप्रकृतिजालेन, एषा तु जनयन्ती नानाभ्रमान् पातयति त्वच्चरणयोरेवान्ते मानवगणम्, चेन्मनुष्य एव सर्वश्रेष्ठो जंतुर्भवेत्, तदाद्य त्वन्निर्मित क्षुद्रजीव (कपोत) दर्शनार्थमसंख्यैर्जनैरागमनं कथं स्यात् प्रतिवर्षम्, इत्यादयो सकलाः विचारा तद्दिव्य जीवावलोकनेन समजायन्त मन्मनसि-अनन्तरञ्चामरनाथस्य रमणीयगुहासमक्षेऽनिर्वचनीय हर्षपारावारे मग्नमभवत् मच्चेतः, अहो ! पश्य कीदृशी कमनीया मूर्तिरियम्। सत्यमेव वपुः प्रादुर्भावमाप्य स्थितः खलु भगवाञ्छंकरः, कपोतमूर्तिमद् हृदयमन्दिरं उपस्थिता एवासीत्, मत्सुहृदा उपर्युक्तानि वचनान्याहृतानि, एवमेव मित्र ! नात्र संशयः, विचित्रमेवावलोक्यते दृश्यलावण्यम् कचिदपि नादिलक्षीकृतं शैत्यमागतं ईदृशं जलं निकटस्थे प्रदेशें, ईदृशं रमणीयतमं स्थानम् तत्राप्यलौकिका गुहा-तदाभ्यन्तरे चेताद्दशी जलीया मूर्तिरित्यादि नैसर्गिकशोभाजालं वस्तुतो विस्मितं करोति जनम्, किम-

प्ययोचि मया, परमनन्यदृष्टिना तन्मूर्तौ तेन नोत्तरं दत्तं किमपि, किंचित्कालं मया सध्यानमवलोकिता तदवस्था ततोऽकस्मादेव मे दृष्टिरपतत् हेमाम्बरे पशुपतौ, तन्मंगलात्मिका शिवस्यानुपमा मूर्तिस्तदुपरि प्रसृतशेषफणाश्च दर्शनादेव भक्तिगङ्गां स्नावयन्ति मनुष्यचित्ते, काप्यविज्ञातशक्तिर्बलान्निरुध्यान्तःकरणप्रवृत्तिं स्नापयति प्रेमसरितीदृक्। यत्स्वमपि विस्मरत्येव मानवः, तदा 'कुत्रोपस्थितोऽस्मि क्व गन्तव्यमधुना इति किंकर्तव्यमूढ़ एव भवति। तत्राहमपि चिरस्मरणीये काले कीदृशीमवस्थां प्राप्तोऽस्मीति विस्मृत्य नैजां स्थितिमपि कियच्चिरं तावत् मत्त इव तत्रस्थित इति न जाने। मित्र! क्व गन्तव्यमधुनेति सुहृद्वाक्यमाकर्ण्य' किं रम्यतमं प्रदेशमुत्सृज्यावश्यमेव गन्तव्यमस्माभिरित्यार्तेन मयानन्यदृष्टिनावलोकितं समन्ततो गुहायाः, मदक्षिभ्यां केऽप्यपतन् प्रेमाश्रुबिन्दवः। तदुक्तं स्वीकृत्याहं गोपयन्नश्रुबिन्दून् तत्सार्धमेव पश्चाद् गन्तुमारब्धः। गुहातो निष्क्रम्यावतीर्य गुहासोपानानि हिममयाध्वानं चलन्तौ अमरगंगाच्छाम्बुप्रवाहेन सममेव पंचतरङ्गिण्यां संप्राप्तौ। आसीत्तत्र स एवोन्नतावनतो मार्गः स एवातिक्रान्तपूर्वः हेममयः पन्थाः त एव दृश्यसमुदायाः आसन् समन्ते। परमस्मदीयं मनोऽन्यत्रासीत् दृष्टिरन्यत्रैव। एवमतीत्य बहुपन्थानं समाप्य च यात्रां संप्राप्तौ पुनरपि पहलग्रामम्। तात्पर्योऽयं यात्रायाः यत् सदैव विलसिष्यति नो हृन्मानसे शिवपदपंकजराजहंसश्चिरायेति ॥

---

श्रीः

# श्रीमद्भगवद्गीता*

उद्धर्ता पं० शिवनाथशास्त्री साहित्यभूषणः साहित्यमणिः उपमन्त्री
संस्कृतसाहित्यपरिषदः काश्मीर ( श्रीनगर )।

शृणु राजन् हतानन्तसामन्तः शन्तनोः सुतः।
विदधे पाण्डुपुत्राणां यथा विजयसंशयम् ॥१॥
वज्रसूचीमुखाख्याभ्यां व्यूहाभ्यां राजकुञ्जरैः।
मिथो व्यूढेष्वनीकेषु गाङ्गेयेनार्जुनेन च ॥२॥
तस्मिन् क्षत्रक्षयक्षेत्रे सर्वराजसमागमे।
दुर्योधनेऽतिसंरब्धे पृथुसैन्याभिमानिनि ॥३॥
गाङ्गेयशब्दनादेन समुद्भूते बलार्णवे।
शंखशब्देन पार्थानां पाञ्चजन्यानुयायिना ॥४॥
पूरिते भुवनाभोगे दिक्षु विस्फूर्जितास्विव।
सर्वसेनाश्रयः श्रीमान् विजयोऽच्युतसारथिः ॥५॥
ददर्श कुरुसेनासु गुरुसंबन्धिबान्धवान्।
निजप्रतापदहने स तेषां शलभायितम् ॥६॥
मत्वा जगाद गोविन्दं विषण्णः करुणानिधिः।
अहो बत विमूढानां राज्यलेशोऽसुखाय नः ॥७॥
कृष्ण बन्धुवधेऽप्यस्मिन् ससंरम्भोऽयमुद्यमः।
अवतीर्य सदाचारस्त्वतिक्रम्य कुलस्थितिम् ॥८॥
कथं गुरुवधप्राप्यां भजेदस्मद्विधः श्रियम्।
इत्युक्त्वा साश्रुनयनो बीभत्सुः कृपया रथे।
करादुत्सृज्य गाण्डीवं निषसाद विषादवान् ॥९॥

इति प्रथमोऽध्यायः ॥१॥

तं दृष्ट्वा शोकविवशं जगाद मधुसूदनः।
अकाण्डे धैर्यसारस्य केयं कातरता तव ॥ १ ॥
तरस्वी क्षत्रियो मानी प्राणैरपि यशःक्रयी।
निजां कुलस्थितिं पार्थ न धर्म्यां हातुमर्हसि ॥ २ ॥

* गीताजयन्त्यां मुद्रितम्।

संयुक्तं वा वियुक्तं वा नित्यं देहेन देहिनम् ।
विश्वमायाप्रपञ्चेऽस्मिन् कोऽनुशोचति तत्त्वधीः ॥ ३ ॥
सुखाद्यवस्था देहस्य काले काले यथाविधाः ।
देहिनोऽस्य तथा देहाः सतः सत्ताविवर्जिताः ॥ ४ ॥
विषयेन्द्रियसंयोगान् क्षयिनो हर्षशोकदान् ।
सहते योऽविलुप्तात्मा निर्वाणं तस्य शाश्वतम् ॥ ५ ॥
अजरस्य पुराणस्य देहिनोऽस्याविनाशिनः ।
जीर्णपर्णपरावृत्तितुल्येयं देहकल्पना ॥ ६ ॥
आदिमध्यावसानेषु व्यक्ताव्यक्तस्वरूपिणः ।
सत एवास्य सततं न विरामः शरीरिणः ॥ ७ ॥
अयशस्यमतस्त्यक्त्वा संकोच विपुलाशयः ।
जयाजयौ समं मत्वा विश स्वर्गोन्मुखो रणम् ॥ ८ ॥
आस्थाय यौगिकीं बुद्धिं कर्मबन्धविवर्जितः ।
शुष्कवेदक्रियाहीनं गुणातीतं पदं भज ॥ ९ ॥
सर्ववेदेषु विदुषामेतदेव प्रयोजनम् ।
जलाशयेषु पूर्णेषु यथा सलिलहारिणाम् ॥१०॥
निःसङ्गः फलसंन्यासी कुरु कर्म सदोद्यतः ।
परमेश्वरसेवा हि वाणिज्यं हि फलार्थिनाम् ॥११॥
यदा ते वीतमोहस्य बुद्धिर्यास्यति निर्वृतिम् ।
कृती भविष्यसि तदा श्रुतेष्वर्थेष्वनादरः ॥१२॥
इति ब्रुवाणः पार्थेन स्थितप्रज्ञस्य लक्षणम् ।
पृष्टः समाधिसक्तस्य भगवानित्यभाषत ॥१३॥
ईश्वरादपरो नाहमिति स्वानन्दनिर्भरः ।
निरस्ताखिलसङ्कल्पः स्थितप्रज्ञोऽभिधीयते ॥१४॥
आस्ते कूर्म इवाङ्गानि कामान्संवृत्य यः स्वयम् ।
विषयाध्यानविरहात् स्थितधीर्न स नश्यति ॥१५॥
कष्टैस्तपोभिर्विषयाः शुष्यन्त्येव रसं विना ।
अनादरविरक्तानां सदाप्यध्यात्मदर्शिनाम् ॥१६॥

श्रीः

निद्रालुर्भूतकालेषु प्रबुद्धस्तिमिरेषु यः।
स महाग्निरिवाक्षोभ्यः स्थितिं ब्राह्मीं प्रपद्यते ॥१७॥

इति द्वितीयोऽध्यायः ॥२॥

श्रुत्वैतदर्जुनः कृष्णमुवाचाकुलिताशयः।
कथमेवं वदन् घोरे समरेऽस्मिन् युनक्षि माम् ॥ १ ॥
कर्मणः श्रेयसी बुद्धिरित्युक्त्वापि स्वयं विभो।
कर्म दुर्मतियोग्यं मां प्रशंससि विमोहयन् ॥ २ ॥
श्रेयो वदेत्युक्तवति श्वेताश्वे केशवोऽब्रवीत्।
निष्ठा प्रज्ञानकर्मभ्यां मयोक्ता सांख्ययोगयोः ॥ ३ ॥
अनारम्भान्न च त्यागात्कर्मणो मुच्यते जनः।
श्रोत्रादयो बलादस्य धावन्त्येव स्वकर्मसु ॥ ४ ॥
स्मरन्ति मनसासन्तो रुद्धकर्मेन्द्रिया अपि।
मिथ्याचारान्नत्वसक्ताः कर्मिणो नियतान्तराः ॥ ५ ॥
श्रेयोह्यकर्मणः कर्म न यज्ञः कर्मणा विना।
यज्ञशेषाशिनः पुण्यद्रुमाः केवलभोगिनः ॥ ६ ॥
कर्मस्थितोऽपि निःसङ्गो यदा प्राप्नोति मानवः।
आत्मारामदशास्तुष्टस्तदा कार्यान्निवर्तते ॥ ७ ॥
कर्मणैव गताः सिद्धिं जनकप्रमुखाः पुरा।
तन्मा कार्यान्निवर्तस्व लोकस्त्वामनुवर्तताम् ॥ ८ ॥
ममापि कृतकृत्यस्य कर्मेदं स्थितिरक्षिणः।
विनश्यत्यन्यथा लोको मत्प्रमाणविशृङ्खलः ॥ ९ ॥
पात्रं सर्वज्ञयोग्येषु नादरेषु पृथग्जनः।
तस्मान्नोत्साहयेदेतान् पङ्गून् वेगगतानिव ॥१०॥
युध्यस्व सर्वकर्माणि मयि संन्यस्य निर्वृतः।
तरन्ति हि तमो घोरं नित्यं मन्मतवर्तिनः ॥११॥
प्रकृतेरुचितं सर्वं स्वधर्मनिरतः कुरु।
रागद्वेषौ परित्यज्य प्रियाप्रियसमुद्भवौ ॥१२॥

श्रुत्वैतदर्जुनोऽवादीत्प्रेरितः केन पातकम् ।
चरत्यनीश्वरः प्राणी बलादिव वशीकृतः ॥१३॥
इति पृष्टो हृषीकेशो जगाद जगतांपतिः ।
रजोगुणसमुत्थेन हर्षशोकादिदाग्निना ॥१४॥
लोकसंहारशीलेन कामेन क्रोधबन्धुना ।
अहंकारेण बलिना घोरेणानेन वैरिणा ॥१५॥
शैवालेनेव सलिलं रजसेवामलं नभः ।
आवृतो मलिनेनात्मा मेघेनेवोदितो रविः ॥१६॥
मनो बुद्धिसभायुक्तं स्थानमिन्द्रियपञ्जरम् ।
यस्य तं दुःसहं शत्रुं कामरूपं विनाशय ॥१७॥

इति तृतीयोऽध्यायः ॥३॥

सूर्येणाप्तः पुरा मत्तो योगोऽयं मनुना ततः ।
य एव कालेनोत्सन्नस्तुभ्यमद्य मयोदितः ॥ १ ॥
अनेकजन्मसाक्षी त्वं भक्तः सहचरोऽपि मे ।
न तत् स्मृतिपथं यातं किन्तु ते प्राक्तनं वपुः ॥ २ ॥
अहं तु नित्यधर्मस्य स्थितये गुप्तये सताम् ।
युगेयुगे भवाम्येष विनाशाय दुरात्मनाम् ॥ ३ ॥
अकृतं धर्मकर्तारं कर्मैतन्नावृणोति माम् ।
त्वमप्यसक्तो निष्कामः कुरु कर्म कुलोचितम् ॥ ४ ॥
दुर्ज्ञेयः प्रविभागस्तु कर्माकर्मविकर्मणाम् ।
स्वोचितं फलहीनं च विरुद्धं चेति भेदतः ॥ ५ ॥
कर्मणः फलसंन्यासाद्योऽनुपश्यत्यकर्मताम् ।
जानात्यकर्मणः पापात्कर्म यश्च स बुद्धिमान् ॥ ६ ॥
ज्ञानाग्निना दग्धकर्मा नित्यानन्दो निराश्रयः ।
निराशी निरहङ्कारो यज्वा ब्रह्मणि लीयते ॥ ७ ॥
ब्रह्मार्पणेन ब्रह्माग्नौ हुत्वा ब्रह्ममयं हविः ।
प्राणयज्ञरतो याति ब्रह्म ब्रह्मसमाधिना ॥ ८ ॥

श्रीः

संयमाग्नाविन्द्रयाणि विषयानिद्रियानले ।
तत्कर्माण्यात्मयोगाग्नौ हुत्वा यान्ति परां गतिम् ॥ ९ ॥
येऽपि द्रव्यतपोयोगस्वाध्यायज्ञानयाजिनः ।
प्राणापानादिहविषो धृत्वा नाडीषु धारणाम् ॥१०॥
समर्पयन्ति निखिलं ज्ञानं विगतकल्मषाः ।
ते प्रयान्ति परंधाम यज्ञशिष्टामृताशिनः ॥११॥
तद्विधाः प्रणिपातेन सेविता ज्ञानिनस्त्वया ।
अयत्नात्त्वां विधास्यन्ति स्वात्मन्यखिलदर्शनम् ॥१२॥
ज्ञानाग्निना दग्धपापः पवित्रेण भविष्यसि ।
ज्ञानेन श्रद्दधानानां स्वयं ज्ञानं प्रसीदति ॥१३॥
नश्यन्ति संशयजुषो मूढा न त्वस्तसंशयाः ।
ज्ञानिनः संशयं त्वस्मात् हित्वोत्तिष्ठ विभूतये ॥१४॥

इति चतुर्थोऽध्यायः ॥४॥

निशम्यैतत्पुनः पार्थः पप्रच्छ मधुसूदनम् ।
संन्यास-कर्मयोगाभ्यां श्रेयो ब्रूहि जनार्दन ॥ १ ॥
इति पृष्टोऽवदच्छौरिरुभावेतौ विमुक्तये ।
कर्मयोगस्तु संन्यासाद्विशिष्ट इति मे मतिः ॥ २ ॥
शृण्वन्तोऽपि वदन्तोऽपि स्पृशन्तोऽपि स्वकर्मणि ।
सक्ता अपि न मज्जन्ति पङ्के रविकरा इव ॥ ३ ॥
तदेव विहितं किञ्चित्पुंसां सुकृतदुष्कृतम् ।
अज्ञानपिहिते ज्ञाने किन्त्वेषा कर्मवासना ॥ ४ ॥
ज्ञानेनोत्सारिताज्ञानाः परां निष्ठामुपागताः ।
ब्राह्मणे वा श्वपाके वा विबुधाः समदृष्टयः ॥ ५ ॥
बाह्ये सुखे विरक्तानां दुःखजन्मनि नश्वरे ।
अन्तः सुखारामतया परंज्योतिः प्रसीदति ॥ ६ ॥
बहिः स्पर्शान्समुत्सृज्य भ्रूमध्यनिहितेक्षणः ।
नासान्तरे समौ धृत्वा प्राणापानौ विमुक्तये ॥ ७ ॥

कामरागमदद्वेष-भयक्रोधविवर्जितः ।
अहन्ताज्ञानतमसां शान्तिं विन्दत्यमत्सरः ॥ ८ ॥

इति पञ्चमोऽध्यायः ॥५॥

क्रियावानफलाकांक्षी निजं कर्म करोति यः
संन्यासयोगसिद्धोऽसौ समदर्शी जितेन्द्रियः ।
आरुरुक्षुदशातीतो योगारूढो विमत्सरः ॥१॥
कूटस्थो ज्ञानतृप्तश्च पश्यत्यात्मानमात्मना ।
समासनः समाकारो निस्तरङ्ग इवोदधिः ॥२॥
घ्राणाग्रदर्शी शान्तात्मा मामुपैति समाधिना ।
युक्ताहारादि-चेष्टस्य नित्यं निष्कम्पचेतसः ॥३॥
आत्मलाभो भवत्येव त्यक्तकामस्य योगिनः ।
मनः संयम्य पश्यन्ति स्रवत्येतद्यतो यतः ॥४॥
आत्मानं मां च सर्वत्र समात्मनि तथाखिलम् ।
मनसश्चञ्चलस्यास्य वैराग्येनैव संयमः ॥५॥
तथाभ्यासेन बलिनो वातस्येव प्रमाथिनः ।
एतदाकर्ण्य कौन्तेयः पुनः पप्रच्छ केशवम् ॥६॥
लोलत्वान्मनसो देव योगाद् भ्रष्टस्य का गतिः ।
अर्जुनेनेति भगवान् पुनः पृष्टोऽभ्यभाषत ॥७॥
योगभ्रष्टोऽपि पुरुषः शुभकृत्तु भविष्यति ।
चिरं भुक्त्वा सुखं दिव्यं स कल्याणपुरः सरः ॥८॥
भोगिनां योगिनां वापि संभूतो महतां कुले ।
पूर्वाभ्यस्तं पुनर्धीमाञ्जन्मभिः प्रतिपद्यते ॥
तपोज्ञानाधिकं योगं तस्माद्योगी भवार्जुन ॥९॥

इति षष्ठोऽध्यायः ॥६॥

मयि न्यस्तमना नित्यं भक्त्या मां वेत्ति मानवः ।
अष्टमूर्तिरहं सर्वं जीवभूतश्चराचरे ॥१॥

 


उत्पत्तिस्थिति - संहारकारणं मां विदुर्बुधाः ।
सर्वं मत्प्राणिता भावा मयि सर्वं प्रतिष्ठितम् ॥२॥
देवीं मायां दधानं मां न जानाति विमोहितः ।
ये तु जानन्ति मां मायां भवन्ति कृतिनः सदा ॥३॥
अर्थी जिज्ञासुरार्तो वा ज्ञानी वा मां प्रपद्यते ।
प्रियः प्रियस्य सततं ज्ञानिनस्त्वस्मि गोचरे ॥४॥
अनन्यदेवताभक्ताः श्रद्धावन्तो विसंशयाः ।
वासुदेवः सर्वमिति यजन्ते मां मुमुक्षवः ॥५॥
ते ब्रह्माध्यात्मकर्माख्यं साधिभूतं विदन्ति माम् ।
साधिदेवाधियज्ञं च देहव्युपरमेष्वपि ॥६॥
इति सप्तमोऽध्यायः ॥७॥

अच्युतेनेत्यभिहिते शक्रसूनुरभाषत ।
किमेतद्ब्रह्म भगवन्नधियज्ञः किमुच्यते ॥१॥
इति पृष्टो हृषीकेशो बभाषे श्वेतवाहनम् ।
अनश्वरं परब्रह्म भावोऽध्यात्मा तथात्मनः ॥२॥
निःसङ्गो भवकृत्कर्म नश्वरेष्वधिभूतता ।
अधिदैवोऽहमेवात्र ह्यधियज्ञोऽप्यहं विभुः ॥३॥
अन्तकाले स्मरन्तो मां प्रविशन्त्येव भाविताः ।
पर्यन्ते भावतुल्या हि नृणां जन्मान्तरस्थितिः ॥४॥
कविं पुराणं शास्तारमणीयांसमणोरपि ।
परस्तात्तमसो नित्यं ये स्मरन्ति रविप्रभम् ॥५॥
भ्रूमध्ये विहितप्राणा ब्रह्मरन्ध्रविभेदिनः ।
ओमित्येकाक्षरं ब्रह्म जपन्तो यान्ति ते परम् ॥६॥
ब्रह्मादिभिर्भूतसर्गश्चक्रवत्परिवर्तते ।
परं मां प्रतिपन्नास्ते न भवन्ति भवे पुनः ॥७॥
वैरिञ्चेऽस्मिन्नहोरात्रे भवन्ति न भवन्ति च ।
भूतान्येकस्तु भगवानव्यक्तो न विनश्यति ।
तेजोमयमहः शुक्लो मोक्षायैवोत्तरायणम् ॥८॥
इत्यष्टमोऽध्यायः ॥८॥

राजगुह्यमिदं चान्यत्पवित्रं शृणु फल्गुण ।
अश्रद्दधानो नाप्नोति मां संसारवशीकृतः ॥१॥
सर्वकर्तरि भूतानि मयि सन्ति न तेष्वहम् ।
लोकाः स्थिता न स्थिताश्च मयि व्योम्नीव वायवः॥२॥
अधिष्ठितैया प्रकृतिर्मया सूते चराचरम् ।
असक्तं मां न जानन्ति मलिना मोघदर्शिनः ॥ ३ ॥
सर्वं सर्वगतं यज्ञं वेद्यं बीजं भवाभवम् ।
विदन्ति मां सुकृतिनः सर्वकारणकारणम् ॥ ४ ॥
त्रयीधर्मजुषः स्वर्गभोगलाभक्षयाकुलाः ।
न प्राप्नुवन्ति मां शुष्क-क्रियापाशवशीकृताः ॥ ५ ॥
मदेकशरणा नित्यं कृतिनोऽनन्ययाजिनः ।
अप्यन्य-योनिसंभूताः स्वयमायान्ति यत्पदम् ॥ ६ ॥

इति नवमोऽध्यायः ॥ ९ ॥

भूयोऽपि मे शृणु सखे प्रीत्या यत्प्रतिबोध्यसे ।
न तत्त्वेनामरगणा मुनयो वा विदन्ति माम् ॥ १ ॥
चराचरेऽस्मिन्प्रवरं यद्यत्पश्यसि भूतिमत् ।
तदहं सर्वभूतात्मा नहि किञ्चिन्मया विना ॥ २ ॥
अहंविष्णुरहं सूर्यश्चन्द्रोऽहं मघवानहम् ।
शंकरोऽहं धनेशश्च वह्निः सुरगुरुस्तथा ॥ ३ ॥
अक्षरोऽहमहं कालो जयोऽहं भूतिरप्यहम् ।

इति दशमोऽध्यायः ॥ १० ॥

श्रुत्वैतदवदत् पार्थो जाने त्वां सर्वमच्युत ।
किन्तु विश्वमयं रूपं द्रष्टुमिच्छामि ते विभो ॥ १ ॥
इत्युक्तः पाण्डुपुत्रेण भगवान् कैटभान्तकः ।
विश्वाविष्कारकलया विश्वरूपमदर्शयत् ॥ २ ॥
तस्यानन्तशिरोनेत्रसहस्रभुजशालिनः ।
देहे जगन्निवासस्य लीनं विश्वमदृशत् ॥ ३ ॥

अतिसूर्याग्नि - महसा तेजसा पूरिताम्बरम् ।
दृष्ट्वा पुलकितः पार्थस्तमुवाच कृताञ्जलिः ॥ ४ ॥
पश्याम्युदग्रगीर्वाण - ग्रामव्याप्तोरु - विग्रहम् ।
त्वां येन पूरितं सर्वमनवच्छिन्नवर्ष्मणा ॥ ५ ॥
ब्रह्मरुद्रमरुद्वह्निमुनीन्द्रभुजगाकुलम् ।
द्रष्टुं तदेव पर्यन्तरहितं नोत्सहे वपुः ॥ ६ ॥
भीष्मद्रोणमुखान्-वीरान्प्रविष्टान्वदनानि ते ।
दंष्ट्रोत्कटानि पश्यामि कालस्येव युगक्षये ॥ ७ ॥
को भवान् सर्वसंहाररौद्रेण वपुषामुना ।
अकाण्डे दग्धुमखिलान् स्वयं लोकान्समुद्यतः ॥ ८ ॥
इत्युक्तवति कौन्तेये जगाद मधुसूदनः ।
अहं जगत्क्षयोत्क्षेपदीक्षितः क्षितिपान्तकः ॥ ९ ॥
कुरु सेनाग्रगान् वीरान् पूर्वं विनिहितान्मया ।
हत्वायशः श्रिया जुष्टमवाप्नुहि कुलोचितम् ॥१०॥
तच्छ्रुत्वा कालियारातेर्वचः पार्थः कृताञ्जलिः ।
उवाच कम्पितमनाः प्रणतो गद्गदस्वनः ॥११॥
कीर्त्या जगन्ति हृष्यन्ति स्तुतया सिद्धचारणैः ।
दीप्त्या द्रवन्ति रक्षांसि स्थाने तव जनार्दन ॥१२॥
नौमि त्वां जगदावासं विश्वरूपमधोक्षजम् ।
अनन्तं शाश्वतं धाम सर्वात्मानं पुनः पुनः ॥१३॥
क्षम्यतां तत्सुहृदिति स्वयं यत्प्रणतप्रियः ।
उक्तोऽसि कृष्ण गोविन्द यादवेति पुरा मया ॥१४॥
उग्रं तदेवं भगवन् दृष्ट्वा रूपमहं महत् ।
चक्रारूढमिवाशेषं पश्यामि निखिलं जगत् ॥१५॥
प्रसीद दर्शय विभो वपुः सौम्यं तदेव मे ।
शान्ति मे यातु सहसा नान्यथा व्यथितं मनः ॥१६॥

इति प्रसादितः कृष्णः प्रणतेन किरीटिना ।
अदर्शयन्निजं रूपं तदेवाथ चतुर्भुजम् ॥१७॥
देवा अपि न पश्यन्ति ममेदं सर्वगं वपुः ।
इत्युक्त्वाश्वासयामास कौन्तेयं कमलाधवः ॥१८॥

इत्येकादशोऽध्यायः ॥ ११ ॥

अथार्जुनोऽवदत् कृष्णं ये भक्तास्त्वामुपासते ।
अव्यक्तमक्षरं ये च तेषां केऽधिकयोगिनः ॥ १ ॥
पार्थेनेति हरिः पृष्टो विहितानुग्रहोऽवदत् ।
मद्भक्ताः श्रद्धयोपेताः सर्वथा योगिनोऽधिकाः ॥ २ ॥
क्लेशेनैव तु मत्प्राप्तिरव्यक्ताक्षर - सेवनात् ।
सूक्ष्मस्थूलगतिर्दुःखं तत्त्वज्ञैरप्यवाप्यते ॥ ३ ॥
मद्भक्तास्त्वचिरादेव प्राप्नुवन्ति परं पदम् ।
अतस्त्वं मनसा नित्यमनन्यनिरतो भव ॥ ४ ॥
वशे यदि न ते चित्तमभ्यासेन गृहाण तत् ।
तत्राप्यशक्तो मत्कर्मा सततं श्रेयसे भव ॥ ५ ॥
अथवा फलसंन्यासं कर्मणां कुरु मत्परः ।
ज्ञानं हि परमाभ्यासाज्ज्ञानाद्ध्यानमिहोत्तमम् ॥ ६ ॥
ध्यानाच्च फलसंन्यासस्ततः शान्तिर्विशिष्यते ।
अद्वेष्टा करुणासिन्धुः सुखदुःखसमः शमी ।
उदासीनः शुचिर्दक्षः क्षमी भक्तः प्रियो मम ॥ ७ ॥

इति द्वादशोऽध्यायः ॥१२॥

शरीरं क्षेत्रमित्याहुः क्षेत्रज्ञं मां विदुर्बुधाः ।
क्षेत्रं तत्सविकारं तु मायाभूतादि च स्थितम् ॥ १ ॥
शान्तानां दृष्टदोषाणां ज्ञानिनां च विमोहनम् ।
मानदम्भमदक्रोधत्यागो गुरुनिषेवनम् ॥ २ ॥
असक्तिर्नश्वरे नित्यं ज्ञानमज्ञानमन्यथा ।
ज्ञेयं तु मन्मयं ब्रह्म शुद्धं सदसतोः परम् ॥ ३ ॥

सर्वतः पाणिवदनं सर्वाकारमनामयम् ।
प्रकृतिः पुरुषश्चेति क्षेत्रक्षेत्रज्ञसङ्गमः ॥ ४ ॥
प्रकृतिः करणे भोक्तुर्भोक्ता तु पुरुषः स्मृतः ।
एकस्थानं पृथग्भावं भूतानां योऽनुपश्यति ॥ ५ ॥
तत्सङ्गमाच्च विस्तारं स याति ब्रह्म शाश्वतम् ।
परमात्मा गुणातीतो नित्यत्वादयमव्ययः ।
भौतिकेऽपि स्थितः कार्ये सर्वव्यापी न लिप्यते ॥ ६ ॥

इति त्रयोदशोऽध्यायः ॥ १३ ॥

सर्वज्ञानमिदं भूयः श्रूयतां सुरसेवितम् ।
यद्योगो ब्रह्मगर्भेऽस्मिन् संभवन्मूर्तिसंभवः ॥ १ ॥
सत्त्वादयस्तदुद्भूता विभान्त्येते गुणास्त्रयः ।
वैचित्र्यादनिशं येषां संसरन्ति शरीरिणः ॥ २ ॥
सत्त्वं प्रकाशकं ज्ञेयं यदुक्तैः स्तभकं रजः ।
तमो ह्यावरणं मोहप्रमादाद्यस्य संभवः ॥ ३ ॥
सततं सङ्करेणैषां न्यूनाधिक्यविभेदतः ।
गुणदोषाश्च दृश्यन्ते ते ते किल शरीरिणाम् ॥ ४ ॥
मद्भक्ताः शान्तमनसो जीवन्मुक्तिदशां श्रिताः ।
गुणैरेतैः परित्यक्ता भजन्ते सुखमव्ययम् ॥ ५ ॥

इति चतुर्दशोऽध्यायः ॥१४॥

ऊर्ध्वमूलं भवाश्वत्थमाब्रह्मसदनोदितम् ।
लोकान्तरानेकशाखं विचित्रविषयाङ्कुरम् ॥ १ ॥
गुणकर्मप्रबुद्धानां शुभाशुभफलोदयम् ।
स्वभावभूमावृतं जानीते यः स वेदवित् ॥ २ ॥
तमसङ्गकुठारेण च्छित्त्वा यान्ति पदं मम ॥
निरस्तमोहवैमल्यादतिसूर्येन्दुपावकम् ॥ ३ ॥
यदंशो जीवलोकेऽस्मिञ्जीवश्चरति सर्वगः ।
वायुर्गन्धमिवादाय यो यातीन्द्रिय-वासना ॥ ४ ॥

तद्विधं गुणयुक्तानां सर्वावस्थासु निर्गुणम् ।
पश्यन्ति ज्ञानिनः सर्वजगतां जीवनं परम् ॥ ५ ॥
भूतसर्गमिवागत्य अक्षरोऽहं सनातनः ।
मन्मया धृतिमन्तो मां भजन्ते पुरुषोत्तमम् ॥ ६ ॥

इति पञ्चदशोध्यायः ॥१५॥

अभीः सत्त्वं शुचिर्ज्ञानं दमो दानं तपः क्रतुः ।
अहिंसाया गुणाश्चान्ये जायन्ते दिव्यसंपदाम् ॥ १ ॥
दम्भमानमदक्रोधपारुष्याज्ञानचापलैः ।
आसुरी सूच्यते संपन्मोह-शोक - विवर्धिनी ॥ २ ॥
युक्तोऽसि सततं दिव्य-संपदा मा शुचः सखे ।
आसुरं भावमापन्ना भजन्ते योनिमासुरीम् ॥ ३ ॥
सत्त्वादिभिर्गुणैर्बद्धो जायते चेष्टितैर्जनः ।
मनो भोजनमाचारो गुणतुल्यो हि देहिनाम् ॥ ४ ॥

इति षोडशोऽध्यायः ॥१६॥

आकर्ण्यैतदथोवाच फल्गुनः पुनरच्युतम् ।
संन्यासत्यागयोस्तत्त्वं ज्ञातुमिच्छाम्यहं विभो ॥ १ ॥
उक्ते पाण्डुसुतेनेति भगवानभ्यभाषत ।
काम्यकर्मफलत्यागं संन्यासं संप्रचक्षते ॥ २ ॥
सर्वकर्मफलत्यागस्त्याग इत्यभिधीयते ।
सत्कर्म न परित्याज्यं त्याज्यं तु विधिगर्हितम् ॥ ३ ॥
नित्यकर्म परित्यागो मोहात्तामस उच्यते ।
क्लेश दुःखभयात्त्यागो राजसो निष्फलः स्मृतः ।
कुर्वतामप्यसक्तानां त्यागः सत्वोचितो मतः ॥ ४ ॥

इति सप्तदशोऽध्यायः ॥१७॥

कर्म कर्ता च बुद्धिश्च त्रिविधा गुण भेदतः ।
धृतिः सुखं च त्रैगुण्यात् त्रिविधं देहिनां मतम् ॥ १ ॥
यथोक्तसेवी निःसङ्गः कुरु कर्म निजं सखे ।
मद्भक्तो मत्स्तुतिपरः परं पदमवाप्स्यसि ॥ २ ॥

इदं भक्ताय ते ज्ञानमुपदिष्टं मया स्वयम् ।
यः श्रोष्यति स संसारदुःखान्यतितरिष्यति ॥ ३ ॥
कच्चिन्मोहो विनष्टस्ते कच्चिदेतच्छ्रुतं त्वया ।
केशवेनेति कथिते बभाषे शक्रनन्दनः ॥ ४ ॥
भगवन् वीतमोहोऽहं करिष्ये तव शासनम् ।
उक्तेति वीरो गाण्डीवमाचकर्ष रणोत्सुकः ॥ ५ ॥

इति श्री गीतायामष्टादशोऽध्यायः ॥१८॥

---

# ग्राम्ययात्रा

( श्रीयुत चमनलालः एस. पी. कालेज श्रीनगरतः )

'रमणीयतरं स्थलमिदं यन्मन्दं मन्दं पवनश्चित्तमतीव हर्षयतीति' ।

पौषमासे प्रदोषसमये मे वयस्य आनन्दः अहञ्च गोधूमक्षेत्रसमीपं स्थितौ तत्कालीनरमणीयतया तत्स्थानसौभाग्येन चावां मुग्धौ आस्ताम् । सहसानन्देन मौनभङ्गं विधाय उपर्युक्तं वाक्यं जल्पितम् । 'आम् एतादृशैः दृश्यैरेव ग्रामाः रोचन्ते जनेभ्य इति' मयोक्तम् । तदनन्तरमावां पुनस्तत्स्थानीयसौन्दर्यमये गङ्गाप्रवाहे प्रवाहितौ ।

आनन्दस्तु सज्जनोऽतीव सहृदयोस्ति । द्विवर्षात्पूर्वं मयासौ दयानन्दपार्कें प्रथमवारं दृष्टः । तत्र भ्रमणार्थमागतो मे परिचित अभूत् । आलापान्तरे तस्य अतिसरलस्वभावेनाहं मुग्ध आसम् सोऽपि मे वाक्यं बहु प्रीत्या शृणोति स्म । एवं होराद्वयं व्यतीतम् प्रतिदिनमस्माकं संगमः तत्रैव अभवतानन्दश्च मे अभिन्नहृदयःसुहृत् संजातः । अस्मिन् संवत्सरे स एम० ए० परीक्षायां प्रथम उत्तीर्णः । सोऽतीव योग्योऽस्ति परन्तु तस्य स्वास्थ्यं शोभनतरं नास्ति तस्मै भ्रमणार्थं वहिर्गमनमपि नातिरोचते । यत्किञ्चित् तद्व्यायामे रुचिःसंजाता तन्मे प्रभावेनैव । अद्याहं तं गृहत आहूय बहुप्रार्थनाभिरत्र आनीतः

वान्। तन्मुखेनोपर्युक्तं वाक्यमाकर्ण्य स्वीयपरिश्रमं सफलञ्चाहं ज्ञातवान् । तत्स्थलं सत्यमेव मे रमणीयतरं संजातम् ।

एवमावां सौन्दर्येऽस्मिन् निमग्नौ स्थितौ आस्व यदा मे दृष्टिरेकेऽद्भुते विचित्रे च दृश्ये पतिता। अर्धक्रोशे एकं सरसक्षेत्रमासीत्। तदस्ताचलगामिसूर्यकिरणैः प्रदीप्तं हिरण्मयं प्रतीयते स्म। मे मनः तस्मिनेव मग्नमासीत् । अहं तत्र गमनार्थमतीव प्रेरितः स्वचित्तेन ज्ञातञ्च चेदहं तत्राद्य न गमिष्ये मे मन आजीवनं निराशं भविष्यति एतादृशो हर्षश्चास्मिन् कदापि नागमिष्यतीति। किन्त्वहं आनन्दभीत आसम् अत्रापि स मया बहुप्रेरणाभिरानीतः। सोऽस्मिन् समये न गमिष्यति तत्रेति मे विश्वास आसीत् तदापि दुःखितोऽहमुवाच।

'आनन्द'
'हुँ' इति
'पश्यतु तत्रभवान्'
'किम्'
'तत्स्थानीयरमणीयतां'

सोऽपि तद् दृश्यं एकाग्रचित्तेनावलोकितुमारब्धवान्। अनेन विचित्रप्राकृतिकसौन्दर्येण मुग्धश्चासीत्। किञ्चित्कालानन्तरमुवाच च अद्भुतं सौन्दर्यं स्थलस्यास्य त्वयाहमद्य विचित्रस्थानमानीत इति।

किं भवान् तत्र गन्तुमिच्छतीति मया पृष्टम्।
'समयोऽस्ति किम्'
'गृहे शीघ्रं प्राप्तुकामोऽस्ति किमिति' उवाचाहम्।
'विशेषतरं तु कार्यं न'
'तदा प्रतीक्षया वृथा किम्' मया उच्चस्वरेण कथितम्।

[ २ ]

गतोऽस्तमर्कः। आगन्तुकामा कृष्णाम्बरा शर्वरी। पक्षिणः स्वनीडान् प्रति हर्षोत्फुल्लचित्तैर्मधुरस्वरैश्च गायन्तो व्रजन्ति। पादपाः काक शब्दरवैः शब्दायिताः। हरितवृक्षप्रतिबिम्बं निकटस्थस्वच्छजलेऽनिर्वचनीयशोभां ददाति। वन्यपुष्पगन्धसुगन्धितः पवनश्च-

राचरान् मन्त्रप्रभावेनेव मूर्च्छयति । प्रत्येक तृणेन प्रेम्नैव उद्गीय प्रेममयं स्थलं कृतम् । प्रतीयते यत् सर्वभूतानां शोकनिवृत्तय एव स्थलमिदं स्रष्ट्रा सृष्टम् । मन्दपवनावधूतं पक्वक्षेत्रञ्च मनुजचित्ते विचित्रभावान् उत्पादयति अस्य सौन्दर्यं सम्राज्ञां प्रासादाङ्गनरमणीयतया अतिरिच्यते। अस्मिन् मध्ये साक्षाद् भगवान्महादेवः स्वप्रियया समं ताण्डवं विदधातीति भ्रमः संजायते । नवतरङ्गैः प्रतिक्षणनवं भूतं क्षेत्रं । तद्दर्शनेन च दृष्टिरपि न भवति विकला । न जाने मया कियत् कालं अस्यां समाध्यवस्थायां तत्र स्थितं यदानन्देनोक्तं 'किं निवर्तितुमिच्छसीति ।'

किं पर्याप्तमिदमिति पृष्टं मया ।

'पर्याप्तं तु न अतिविलम्बोऽपि न कार्यः ॥'

तदाग्रतः गच्छेति मया प्रार्थितोऽसौ यथा भवते रोचतेत्युक्त्वा मन्दगत्या चलितुमारब्धः मयापि अनुसृतः ।

शशाङ्कस्य परितस्तारागणनृत्यमपि खे आरब्धम् । आवामर्धमार्गमागतौ । कोऽपि शब्दः न श्रूयते । सर्वे चराचराः प्रसुप्ताः अथवा तारागणताण्डवदर्शने मग्नाः । मे हृदये किमपि अज्ञात भयमुपस्थितम् । आनन्दोऽपि विमनाः दृश्यते । अध्वनि एकः जलप्रवाह आगतः। उत्प्लुत्यावाम् तत्पारं गतौ । किञ्चिदपि नोक्तं परस्परम् ।

यावदीषद् दूरमागतौ सहसा शशाङ्कमन्दप्रकाशे 'शीं, शीं' इति शब्द आकर्णितः। क्वागतोऽयमिति यावन्मया विचारितं आनन्दोऽनुधावति ।

'किमस्ति' पृष्टवानहम् ।

विवर्णवदनेनाभिहितं तेन 'स······पः' इति मा भैषी इति मया उत्साहितोऽसौ । आवामेकपार्श्वे भूत्वा स्थितौ । असौ भीषणकृष्णसर्पः करकलपस्त्वाकृत्या परिमाणेन च साक्षात्काल इवावयोः। समक्षमेव पानार्थं गतः ।

विमनसावावामपि अतिविश्रान्तौ बहुविलम्बेन गृहं प्राप्तौ।।

# प्रमाणपरीक्षणम्

( निबन्धा—श्रीदीननाथशर्मा शास्त्री सारस्वतः
स० ध० कालेजाऽध्यापकः, मुलतान )

'श्री' पत्रे ५-२ पाठकैः श्रीविद्याधरभास्करमहाशयस्य लेखो (४।४,५।१ संख्यास्थ—) मल्लेखस्योत्तरे पठितो भवेत्। अथ चैतदपि ज्ञातं भवेद्, यदत्र मामकीनं किमपि प्रमाणं काचनाऽपि च युक्तिर्लेखक-महाशयेन न प्रत्यवाचि, अत एवाऽत्र लेखे यदि लेखकमहोदयो मन्नाम नाऽग्रहीष्यत; तर्हीमं लेखमहं स्वतन्त्रं मत्वैतदुपेक्षामकरिष्यम् । परं मन्नामग्रहणेन लेखको मत्कृतसमालोचनां वष्टीति व्यज्यते। परं सम्पा-दकमहाशयेनाऽग्रे विवादाय विस्तराय च निषिद्धम्। अतोऽहं भास्कर महाशयकलितयुक्तीः स्वप्राक्तनलेखे निराकरणकारणादुपेक्ष्य तत्प्रमाण परीक्षणं विदधे सङ्क्षेपेण।—

पारस्करगृह्यसूत्रस्य १।३, २।२, २।३, २।५ प्रभृतिस्थाने, आपस्त-म्बगृह्यसूत्रस्य ४।१० ५।११, ५।१३ प्रभृति प्रदेशे, गोभिलगृह्यसूत्रस्य २।१० प्रभृतिस्थले, एवम् आश्वलायनादिगृह्यसूत्रेषु, मनुस्मृतेर्द्वितीया-ऽध्यायस्य ३६-३७-३८-४१-४२-४४-४५-४६-४९-६२-६५-१२७ इत्यादि-श्लोकेषु, एवमन्यत्र यदा द्विजानामपि आरम्भत एव मिथो भेदाः प्रोक्ताः; तर्हि द्विजेभ्यश्शूद्रादीनामसाम्यं तु दुर्निवारम्। अत एव वेदभगवताऽपि 'स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम्' अ० १९।७१।१ 'ब्राह्मणो वैव राजन्यो वा वैश्यो वा; ते हि यज्ञियाः' शतप० ३।१।१।९ 'अयं स होता यो द्विजन्मा' ऋ० १।१४९।५ इत्यादिप्रमाणैर्वेदे द्विजातिरिक्तानामधिकारः प्रतिषिद्धः।

एवं द्विजशूद्रादीनां साम्ये निषिद्धेऽपि 'सङ्गच्छध्वं संवदध्वं' 'समानी प्रपा' समानो मन्त्रः' इत्यादि मन्त्रेषु यदि एषां मिथः साम्य-वादो निरूप्येत; तर्हि वेदे व्याघातदोष उपतिष्ठेत। अत एवैतदादिका मंत्राः एक कुटुम्बिष्वेव चरितार्थाः; न तु सांसारिकमनुष्यमात्रे, चातुर्वर्ण्यमात्रे

वा—इति ज्ञेयम्, असम्भवात्*। अत एव वेदेन स्पष्टतायै स्वयं प्रोक्तम्—'अनुव्रतः पितुः पुत्रो मात्रा भवतु सम्मनाः। जाया पत्ये मधुमतीं वाचं वदतु शन्ति वाम्' अ० ३।३०।२ 'मा भ्राता भ्रातरं द्विक्षन्, मा स्वसार युत स्वसा। सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया' अ० ३।३०।३ तत् कृण्यो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः' अ० ३।३०।४ 'अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान् वः सम्मनसस्कृणोमि' अ० ३।३०।५ अतएव पं० राजारामशास्त्रिणा ऽपि स्वभाष्ये एतत्सूक्तारम्भेऽस्य विनियोगो लिखितः—'परिवार के जनों के परस्पर वर्ताव और प्रेम के लिये।' एभिर्मन्त्रैः स्पष्टता जाता यद्—एक कुटुम्बिषु मिथो यथा योग्यप्रेमवादो भवितुमर्हति, न संसारमात्रे; असम्भवात् प्रत्यक्ष-विरोधाच्च। 'अरा नाभिमिवाऽभितः, अ० ३।३०।६ इत्युपमाऽन्यमपि प्रकाशमर्प्पयत्यत्र विषये। अरा रथनाभौ भवन्ति सम्बद्धाः; परन्तु रथानां बहुत्वं भवति, नत्वेकता। यथा ते ते अराः स्वस्वरथनाभौ भवन्ति सम्बद्धाः; तेषां व्यवहारः स्वरथेनैव भवति नाऽन्यै रथैः; तथा प्रकृतेऽप्यवसातुं शक्यम्। विस्तरभयादधिकमुपेक्ष्यते।

'वेदमाता...पावमानी द्विजानाम्' अ० १९।७१।१ इति मन्त्रो बुद्धिमतोऽपि शूद्रस्य नामग्रहणमपि न मृष्यति। द्विजत्वञ्च जन्मतः ८।११।१२ वर्षेषु भवति केवलं ब्राह्मणक्षत्रियवैश्यानाम्, शूद्रस्य तु कस्मिन्नपि वयसि सोऽधिकारो न स्थापितो धर्म्मशास्त्रकारैः; अत एव स 'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः। चतुर्थ एक जातिस्तु शूद्रः' मनु० १०।४ इत्यादिनैकजातिः कथितो न तु द्विजातिः†।

अधुना वर्णव्यवस्था-प्रमाणानि परीक्ष्यन्ते—

(१) 'धर्मचर्य्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते'—

*अथ च 'समानो मन्त्रः' एतदादिका मन्त्रा ऋत्विगादीनां कृते न सर्वसाधारणानाम्।

†कदाचिन्मनुप्रभृतय आतपतायिनः स्युस्तथाऽऽचक्षाणा, लेखक्रमवेन।

परं कदा? एतदुत्तरम् आपस्तंम्बः स्वयमाचष्टे—'जातिपरिवृत्तौ' जननं-जानिस्तत्परिवृत्तौ-मरणे इत्यर्थः। मरणे जन्मान्तरे एतज्जन्मस्थवर्णपरिवर्त्तने नाऽस्माकमापत्तिः। अतएव तत्साधकं छान्दोग्यवचनमस्मदीय प्राक्तनलेखे प्रष्टव्यम्।

२. 'शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैव शूद्रताम्' मनु० १०।६५ परं श्रीमता भास्करेणैतत्पूर्व्वसम्बद्धः श्लोकस्तमसि निःक्षिप्तः, सचाऽयम्—'शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत् प्रजायते। अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमात् युगात्' १०।६४ एतदनन्तरमेवोक्तश्लोकः; इदं युग्मकं पद्यद्वयम्। इदं ब्राह्मणाच्छूद्रायां जातस्य क्रमशः सप्तमयुगे ब्राह्मणत्वप्रतिपादकम्, वीर्यप्राधान्यप्रतिपादकञ्च। तेन 'आ सप्तमात् युगात्' इति पदं भास्करे स्वर्भानुभूतम्।

३. 'नहि गोऽश्ववज्जातिभेदोऽस्ति देहिनाम्' यदि गोऽश्ववज्जातिभेदो नास्ति प्राणिनाम्; तर्हि नाऽत्रास्माकमाग्रहः; परमवान्तरजातिभेदस्तु वर्त्तत एव। यथा गवाश्वयोः पशुत्वजातिः समाना; तथा ब्राह्मणशूद्रयोर्मनुष्यत्वजातिस्समाना। यथा पशुजातिसामान्येऽपि अवान्तरगोऽश्वजातिभेदः; तथा ब्राह्मणशूद्रयोर्मनुष्यत्वजाति-साम्येऽपि अवान्तरब्राह्मणशूद्रत्वजातिभेदो वर्त्तत एव। अत एव महाभाष्ये 'आकृतिग्रहणा जाति-' इति जातिलक्षणे सत्यपि 'सकृदाख्यातनिर्ग्राह्या' इति भिन्नं जातिलक्षणं कृतं ब्राह्मणवृषलयोर्जातिभेदप्रतिपादनपरम्। विस्तरभयादधिकं न प्रतन्यते।

४. 'शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः' इति पुराणवचनमर्थवादत्वात् स्वाऽक्षरार्थे तात्पर्य्यं न ग्राहयति। अथ च 'लोकवृत्तमितिहासपुराणस्य लोकव्यवहार-व्यवस्थापनं धर्म्मशास्त्रस्य-विषयः; तत्रैकेन न सर्व्वं व्यवस्थाप्यते इति यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति' न्याय० ४।१।६२ 'तयोर्द्वैधे स्मृतिर्वरा' व्यास स्मृ० १।४ इति वचनात् पुराणवचनम् 'अथ हाऽस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपरिपूरणम्' गोतम० १२ अ० 'एकमेव तु शूद्रस्य प्रभुः कर्म

सम्भादिशत्' मनु० १।९१ 'न शूद्राय मतिं दद्यात् ........न चास्योपदिशेद्धर्म्मं' मनु० ४।८० इत्यादि धर्म्मशास्त्रवचनैर्बाध्यते।

५. 'शूद्रजातौ हि जातस्य......वैश्यत्वं लभ्यते ब्रह्मन्' इत्यादिवर्णपरिवर्त्तनं जन्मान्तरेऽभिसंहितम्; यतो महाभारतसिद्धान्ते 'स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः। एकजात्या सुदुष्प्रापम् अन्य वर्णत्वमागतम्। तच्च कर्म्मविशेषेण पुनर्जन्मनि जायते' इति अन्यजन्मन्येव वर्णपरिवर्त्तनं भवति, न तस्मिञ्जन्मनि। अस्य स्पष्टता तत्रैव इन्द्रमतङ्गसंवादेऽनुशासनपर्व्वणि २८।६।७।८।६।१० द्रष्टव्या।

६. यत्तु—'यश्च शूद्रो दमे सत्ये' तं ब्राह्मणहं माये' महा० वन० २१६।१४ इति प्रमाणं दत्तम्; न स सिद्धान्तपक्षः; किन्त्वेकव्यक्तिकथनमिति तत्रैव द्रष्टव्यम्। अथ च तत्र 'तं ब्राह्मणमहं मन्ये' इत्यनेन तं 'ब्राह्मणवद् मन्ये' इत्यत्रैव तात्पर्य्यम्। न चाऽत्र वतिप्रत्ययो नाऽस्ति; तत् कथमेषोऽर्थ इति वाच्यम्, 'अन्तरेणाऽपि वतिमतिदेशो गम्यते, तद् यथा—एव ब्रह्मदत्तः; अब्रह्मदत्तं ब्रह्मदत्त इत्याह' तेन मन्यामहे-ब्रह्मदत्तवदयं भवतीति, इति १।२१, २।३।६९ सूत्रे महाभाष्ये। अत एव वनपर्व्वणि २।६।१३ इति पूर्वश्लोके 'ब्राह्मणः पतनीयेषु वर्त्तमानो विकर्म्मसु। दाम्भिको दुष्कृतः प्राज्ञः शूद्रेण सदृशो भवेत्' इति 'सदृश' शब्दः साक्षाद् दृश्यते। सदृशत्वेऽपि सर्व्वे व्यवहारास्ते ते न सम्भवन्ति। 'साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः' तर्हि साहित्यसङ्गीतहीनो मनुष्य × खलबुसघासादिकं तु न भोज्यते। भवदुद्धृतश्लोको महाभारते व्याधस्य कृते कथितः। महाभारतं स्वयं तस्मिञ्जन्मनि व्याधं शूद्रं मन्यते, अन्यस्मिन्नेव जन्मनि तद्वर्णपरिवर्त्तनमाचष्टे इति 'शूद्रयोन्यां वर्त्तमानो धर्म्मज्ञो हि भविष्यसि' २१६।४ 'जातिस्मरस्त्वं भविता स्वर्गं चैव गमिष्यसि' २१६।५ 'शापक्षये तु निर्वृत्ते भविताऽसि पुनर्द्विजः' २१६।६ इत्यादिश्लोकेषु द्रष्टव्यम्।

इत्थं प्रकारान्तरमपि ...... प्रकरणं दर्शितम्;

येन लेखकभ्रान्तिः सिद्धाऽस्मिन् विषये। तेन 'तर्हि अस्मत्पूर्व्वोपात्तानि प्रमाणानि सङ्गमयितुं श्रीमतां कतमो यत्नः स्यात्' इति प्रत्युक्तम्। 'चातुर्वर्ण्यं मया सृष्टम्' ४। १३ अत्र कथयिता परमात्माऽस्ति, यतः स उत्तरार्द्धे स्वयमाचष्टे—तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्।' अव्यय ॱ पुरुषॱ परमात्मा कथ्यते, तथा च—'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' गी० १५। १७ अवशिष्टमुत्तरं मत्प्राक्तनलेखे द्रष्टव्यम्।

'चेत् साम्यं स्याद्, न कश्चिदुन्नतिं स्पृहयेद्' इति साम्यवादखण्डकस्य स्ववचनस्योत्तरं भास्करमहाशयेन 'स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः।' गी० १८। ४५ 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्' गी० ३। ३५ 'सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत्' १८। ४८ 'आत्मीये संस्थितो धर्म्मे शूद्रोऽपि स्वर्गमश्नुते' अत्रिः १८ 'शक्तेनाऽपि हि शूद्रेण न कार्य्यो धनसञ्चयः। शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते' मनुः १०। १२९ इत्यादीनि मत्प्राक्तनलेखप्रकाशित प्रमाणानि द्रष्टव्यानि।

यत्तु—'आचार्य्यस्त्वस्य यां जातिं विधिवद् वेदपारगः। उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा' मनु० २।१४८ इति प्रोच्यते; तत्र ज्ञेयम्, यत्—सावित्री ब्राह्मणाय ८ वर्षे, क्षत्रियाय ११ वर्षे, वैश्याय १२ वर्षे प्रोच्यते उपनयनसंस्कारसमये आचार्य्येण; तदा तत्र शूद्रस्य त्वधिकार एव जन्मना निषिद्धः। एवं यदा तस्मिन्नेव ८ वर्षे ब्राह्मणस्य ब्राह्मणजातिः; ११ वर्षे क्षत्रियस्य क्षत्रियजातिः, १२ वर्षे सावित्रीसमये वैश्यस्य वैश्यजातिर्द्वितीयावृत्त्या—(द्विर्बद्धं सुबद्धं भवतीति द्विजत्वसङ्केतेन) अजराऽमरा कृताऽऽचार्य्येण (यतोऽयं सावित्रीप्रदानकालिकः श्लोकः); शूद्रस्य वराकस्य तु एक जातित्वाऽभिधानेन द्विजत्वविधेरेव सर्व्वथा निषेधो विहितः; तर्हि भवन्तस्तामजरामवरां सावित्रीप्रदानकालिकीं पूर्व्वजातिं कथं परिवर्त्तयितुमीशाना इति महदाश्चर्य्यम्। समावर्त्तनसमये कस्मिन्नपि

 

गृह्यसूत्रे, कस्मिन्नपि संस्कारविधौ*; कस्यामपि वा स्मृतौ धारणं-परिवर्त्तनं नाऽऽप्तम्; इति स्वसंस्कारविधिरपि स्वयं द्रष्टव्यः। अन्यथा समावर्त्तनसमय एवोपवीतम्, तत्र सावित्र्युपदेशः, ततश्च वेदारम्भः कृतः स्यात् ? परं नैवमस्ति।

शूद्रान्त्यजेभ्यो मन्दिरादिद्वाराणामावरणस्याऽपि कारणम् इति प्राक्तने लेखेऽस्माभिर्विशदीकृतम्। या मूर्त्तिर्वेदमन्त्रप्रतिष्ठिता स्यात्; तत्र वेदाऽधिकाररहितस्य शूद्रान्त्यजादिकस्याऽधिकारो न भवति; आम्—अन्त्यजादयः स्वयं स्वमन्दिरे स्वमूर्त्तिं स्थापयितुं—या वेदमन्त्रैः प्रतिष्ठिता न भवेद्—अधिकृताः। विस्तरभयादधिकं न लिख्यते। विशिष्य दिदृक्षवो ममाऽन्यत्र संस्कृतपत्रे विस्तीर्णं लेखमस्मिन् विषये पश्यन्त्विति निवेद्य विरम्यते। इति।

---

## सरस्वती यात्रा

### ( ३ )

**वाराणसी नगरी ( काशी बनारस इति )—**

प्रथम एव आसीत् मदीयो वाराणस्या दर्शनावसरोऽयम्। मनस्यासीदतीव कौतूहलं दर्शनाय प्रसिद्धभारतीयसंस्कृतिक्षेत्रस्यास्य। परं नाहं चकितोऽभूवम् वाराणसीयात्रानन्तरम्। कलिकातः नगरीतो वाराणसीमेवागत्याद्भुतचमत्कार युक्त नागरिक सभ्यतायाः केन्द्रात् कस्मिंश्चिद् ग्राम एव आगतस्य पुरुषस्य भाववत् मनसि विचारः समुत्पद्यते आधुनिक कालस्य यात्रिणः। नवीनविद्युत तुल्यचमत्कार प्रकाशकानां नगराणां वस्तूनां चावलोकनाय स्यात् चेदिच्छा यात्रिणस्तर्हि माभूत् तस्योद्यमः वाराणसीयात्रायाः। परं न भवति कस्यचिदपि सहृदयस्येच्छा तादृशी। प्रायशः प्राचीनभारतगौरव संस्कृतिदर्शकास्तु प्राचीनानां स्थानानां पूर्वजानां सुकृतीनां दर्शनोत्सुका न

* विधिशब्दः पुंलिंगे भवति।

कदाप्यौदासीनतां गच्छन्ति स्थानेष्वेतेषु प्रत्युत शिलानां मृतपिण्डानाञ्चाश्चर्यंजातैः प्रत्र स्थानानां दर्शं दर्शं स्मारं स्मारं चाह्लादयन्ति मनांसि सुखयन्ति नयनयुगलमाश्वासयन्ति च हृदयानि।

वाराणसी हिंदू विश्वविद्यालयः—

मित्रस्य मम निवास स्थानं कार्यस्थानञ्च हिंदू विश्वविद्यालय एव आसीत्। अतो मम निवासोऽपि दैवयोगेन विश्वविद्यालय एवाभूत्। तेन तु सम्यगीक्षणं ज्ञानञ्च विश्वविद्यालयस्य भागानां समजनि। विशालायां भूमावस्यां यत्र विद्यन्ते विश्व-विद्यालयाः बहूनि सन्ति स्थानानि विशेषतया निर्मितानि यत्र शतशो विद्यार्थिनः भारतखण्डस्य भिन्न प्रान्तेभ्य आगत्य विशेषविषयानधीयन्ते। आयुर्वेद विद्यालये रोगिनां चिकित्सापि क्रियन्तेप्राच्यपद्धत्या रोग प्रतीकारो ज्वरादिरोगानां, पाश्चात्य रीत्याच व्रणादि शोधनम्। सूक्ष्म कृमिकीटादीनां (Bacteriology) विद्यामपि पाठयन्ति। साधारण विद्यालयः, विज्ञानविद्यालयः, कृषिमहाविद्यालयः संगीतमहाविद्यालय अध्यापक शिक्षाविद्यालयः, महिला महाविद्यालयश्च विद्यन्ते। भिन्नानिविशालभवनानि सर्वे एतेऽलङ्कुर्वन्ति येषु शतशः युवकाः युवत्यश्चः विद्याग्रहणार्थमन्तेवासिनो दृश्यन्ते। विशेषं भवनं प्रसिद्ध विद्याप्रसारकं भारतीयेषु सर्वेषु महाविद्यालेषु प्रख्यातं यस्तु शिल्पकला महाविद्यालयो (Engineering college) वर्तते। यस्याचार्यः स्वर्गीयो महाशयः किङ्ग (Mr. king) नामाङ्गल जातीयोमद्यात्रा काले गतवर्षे स्वस्थ आसीत्। तदुद्योगेन शिल्प महाविद्यालयो 'यत्र विद्युत तथा कलायन्त्रनिर्माणं (Electrical & Machanical Engineering) शिक्षयित्वा बी० एस० सी० ऐन्जीनरिंग इति उपाधिः प्राप्त भवति,' सर्वत्र भारते प्रसिद्धोऽभूत। तत्रतु उत्तीर्णा विद्यार्थिनः

सर्वत्र सन्मानं लभन्ते, राजकीय पदेषु व्यक्तिगत कलाकौशलालयेषु च नियुज्यन्ते । महत् भवनमेकं पुस्तकालयस्यास्ति यत्र भिन्न २ विषयाणां सहस्रशः पुस्तकानि संगृहीतानि, प्राचीनभारतेतिहासकलाकौशलदर्शनसाहित्यदर्शकानिविद्यन्ते। अध्यापकानां निवास स्थानानि विशेषायां भूमौ निर्मितानि, विद्यार्थिनां क्रीड़ा विहारार्थे विशालानि क्षेत्राणि बृहद् पथो वामे दरिदृश्यन्ते। बहूदृष्टं बह्वावशिष्टं भवति। भारत संस्कृतेरद्वितीय रक्षकस्य भारत मातुः स्वदेश भूमेरनन्यसदृशयस्य महाविदुषः संसार प्रसिद्धस्य भारत भूषणस्यार्यजाते ललाम भूतस्य श्री पण्डित मदनमोहनमालवीयस्य कलियुगे हिंदू विश्वविद्यालयरूपः चमत्कारः भारतीयार्याणां प्राच्यगौरव स्मारकश्चायं न कस्यापि प्रेमिणः हर्षाश्रूणि प्रसारयेत्?

## क्वींस संस्कृत कालेज—

सुन्दर भवनेऽस्मिन् क्वींस संस्कृत महाविद्यालयो वर्तते। आधुनिक महाविद्यालयाकृति सदृशो नास्ति प्रबंधः श्रेणीनां न च सन्ति तत्र पेठिका मंचादयः विद्यार्थिनां स्थानार्थम्। प्राचीन गुरुशिष्य प्रणालीमवलम्ब्य गुरोः पुरतस्तिष्ठन्त्यासनेषु छात्राः शिक्षाञ्च प्राप्नुवन्ति स्वस्वालम्बित विषयेषु । बृहदागारो भवनस्य मध्ये भित्तिभिमहोच्चैश्च स्तूपैश्च सम्पादितोऽस्ति, यस्य विशालायां भूमौ प्रायशः सर्वे छात्रा गुरोस्सकाशात् पुस्तकाध्ययनं कुर्वन्ति। बहवः सुन्दराः श्लोका भित्तिषु लिखिता विद्यन्ते। महाविद्यालयोऽयं संस्कृतविद्यायाः केन्द्रो राज्यप्रबंधेन प्रचलति।

## विश्वनाथ मन्दिरम्—

महाख्यातं श्री विश्वनाथ मन्दिरमपि दर्शनयोग्यम्। मूर्तिः श्री विश्वनाथस्यैशान्यां दिशायां विद्यते मन्दिरे, यत्र नैके यात्रिणः पुष्पमालाहस्ता प्रदक्षिणां विधाय दर्शनेच्छुका अहमहमिकया

स्कंधान् स्कंधे परस्परं संघर्षयन्ति। भारतवर्षस्याऽधोगतेः स्थिरं स्मारकमत्र महामदीयानां मस्जिद इति मन्दिरस्यास्यार्धे भागे मन्दिरं त्रुट्यावरङ्गजेबेन मुग़ल सम्राज्ञा निर्मापितम्; तत्वत इदानीं मन्दिरस्यार्धो भागः हिंदूनां हस्ते त्वर्धो मुसलमानानाम्। यस्मात् कालादियं प्रवृत्तिः संजाता तस्मादेव हिंदूमुसलिम् कलह कारणं वाराणस्यां समुत्पन्नम्।

## ज्योतिषालयः—

नगरस्य मध्ये क्षुद्रासु वीथीसु भ्रमित्वा काशी नगर्यां यात्री प्राचीन ग्रहेऽ एकस्मिन् स्वात्मानं नयति। यत्राङ्गने मम गमनकाले आसन् काचन बालाः क्रीड़यन्त्यः, कपाटे भित्तिषु, आसीत् गोमयं लग्नं, परं गत्वा पन्थानमिमं गृहस्य सोपान पंक्तिमेंकामारुह्य उपरि आसन् शिलामयानि यन्त्राणि येभ्यः नक्षत्राणां गत्यादिकं ज्ञातं भवति। एवं प्रतीयते यत् नास्ति कोपि रक्षकः स्थानस्यास्य न च कश्चिद् प्रबन्धः समीचीनो नक्षत्रज्ञानालयस्यास्य। यद्येदृश्येवावस्था स्यात् भविष्य कालेऽपि स्थानस्यास्य तर्हि हिंदू सभ्यता स्मारकस्यास्य का गतिः ?।

## हिन्दी भवनम्—

सुन्दरं स्थानमिदं यस्मिन् बहूनांहिंदी पुस्तकानां पुस्तकालयः; हिंदीभाषा वर्द्धयितॄणां चित्राणि हृदयङ्गमानि स्थाने स्थाने संरक्षतानि। हिंदीभाषा साहित्यस्य परिषदो ऽधिवेशनानि ततकृते कार्यमन्यदप्यत्रैव क्रियते। हिंदीभाषैव स्यात् राष्ट्रभाषा भारतवर्षस्य' एवं सर्वं यत्नं भवति 'हिंदी सम्मेलनस्य सदस्यानाम्। भारतवर्षस्य पूज्याय देवायाधुनिककालस्य श्री महात्मा गांधिनोऽपि बृहत् चरित्रमेकं विशेष स्थानं भवनस्यालङ्करोति।

## विशेष स्थानानि—

दर्शन योग्यानि स्थानानि तु बहूनि सन्ति काश्यां परं समया-

भावात् च सर्वेषां सम्यक् दर्शनं न भवति। स्थानाभावेन च त्रैमासिक पत्रेऽस्मिन् न च सर्वेषां दृष्टिगोचरभूतानां वर्णनं पार्यते कर्तुम्। जगद्गंज काशी भारत धर्म महामण्डल गृहं, रणवीर संस्कृत पाठशाला काश्मीर हवेली, गणेश मन्दिरं, कैथोलिक चर्च, अस्सीघाट, महात्मा तुलसीदासस्य कबीरदासस्य च स्थानं रामनगरं दशाश्वमेधं इत्यादीनि बहूनि स्थानानि संस्था गृहाणि च सन्ति परमिदानीं मया द्वित्रानाम ऽत्यावश्यक हृदयङ्गम दृश्यानां वर्णनं यत् किञ्चिदेव विधाय समाप्तिं नीयते सरस्वतीयात्रैषा। भवतु कौतूहलं तु सर्वत्र, परं सर्व स्थानानां परिचयः किञ्चित् कालमेव प्रस्थितस्य विश्वस्य यात्रा विधानाय यात्रिणः कथं सम्भवति। अथवा वाराणसीवर्णनमिदानीं त्यक्त्वा विरमामि। विरामात् पूर्वमात्यवश्यकं दर्शन योग्यं स्थान पाठकान् नेतुमिच्छामि यस्मादृते वर्णनमेवेदं व्यर्थम्। तत् स्थानं तु सारनाथ नाम्ना विश्वविख्यातं सर्वसंसार यात्रिणां दर्शन योग्यं पूज्यम् च। परं तत्र गमनात्पूर्वं अतीव हृदयङ्गमो दृश्यो वाराणसी जाह्नवी तीरस्य मया सह भवद्भि र्द्रष्टव्यः।

## जाह्नवी तीरम्—

उत्तरमध्याह्नवेलातोऽपि किञ्चिदनन्तरं सायंकालात् पूर्वं नौकामारूह्य न पश्यति गङ्गातीरं यो यात्री तस्य काशी गमनमेव निष्फलम्। दूरत एव गङ्गायाः रमणीयं स्वच्छं पावनं जलं अवलोक्य प्रसीदति हृदयम्। उपरि रेलवे निर्मितं गङ्गा प्रतरं सुन्दरं दृश्यम्। तस्मादरभ्य नीचैः दक्षिण पार्श्वे प्रसिद्ध पत्तनानां स्थानानां च दर्शनम्। अस्सी घाट, श्री महात्मा तुलसीदासस्य निवास स्थानं कबीरभक्तस्य चाश्रमं, हिंदूनां श्मशानं राज्ञा हरिश्चन्द्रस्य च स्मारकं दर्शं दर्शं च स्मारं स्मारं कस्यार्यजातेः पुत्रस्य नोत्थानं गच्छति मनः। नद्याः

बाम भागे महाराजस्य वनारसस्य विशालं सुन्दरं भवनं यत्र रामनगरं नवीन सम्राज्ञा प्रतिनिधि लॉर्ड लिलिथगो गत वर्षे तस्यातिथ्यमभजत। यद्यपि हृदयन्तु न त्यजति गङ्गातीरं तथापि कार्यवशात् दैववशात् च त्यक्तव्यं भवति सर्वमिदं जगत्। परं नाविकामारूह्य हिंदू मन्दिराणि पत्तनानि स्थानानि च दृष्टिगोचराणि कृत्वा शनैः शनैश्चालने नौकायाः-प्रतीयते स्वर्गदोलायामिवाकाशे देवानाम् विहारस्य गतिः।

## सारनाथ—

विश्वप्रसिद्ध भारत ललामस्य महात्मा गौतम बुद्धस्य प्रथम-मुपदेश स्थानमिदम्। महाबोद्धिं वृक्षस्यछायायां सांसारिक पारमार्थिकविषयानां सम्यगन्वेषणं विधाय बुद्धस्य पदवीं प्राप्य गौतम बुद्धोऽत्रागत्य वाराणसीतः ७, ८ मील पर्यन्तं सारनाथ नामानं स्थानमेकं लेभे; कतिपयान् यत्र शिष्यानुपदिश्य विहारं एकं संस्थापयामास। बहून्यत्र जीर्णानि कोष्टमयान्यागाराणि जलनालिकाः पूजा स्थानानि खनितानि। आङ्गलभारत राज्य प्रबन्धेन सुरक्षिताःस्तूपाः खनिताश्च दरीदृश्यन्ते। सर्वा विशाला भूमिरिदानीं प्रवलितास्ति। यस्यां खनितायां बहूनि सुन्दराणि वस्तूनि शिलामयानि प्रायशः सर्वाण्येव महात्मा बुद्धस्य भिन्न २ चरित्र-दर्शकानि लब्धानि।

महाराजाशोक आसीत् बुद्धधर्मस्यानुयायी प्रचारकश्च। तस्य-शिलामयानां उच्चैःस्तूपानां सिंह स्मारकानि Lion capital भारते त्रिचतुस्स्थानेषु लभ्यन्ते, अशोक कैपिटल इति (Asok's Lion Capital) नाम्ना सांची प्रदेशेऽपि विद्यते स्तूप एक अन्यश्चात्रापि। तस्योपरि भागस्तु सुरक्षितस्तत्र कौतुकागारे विद्यते। सर्वाणि वस्तूनि मूर्तयश्च निकटवर्ति कौतुकागारे (Museum) सुरक्षितानि। सारनाथ स्थानं

मिदानीं संसारस्य बौद्धानां प्रधानं यात्रा स्थानम्। चीनतः जापानतः लङ्कातः बर्मा देशतः सुमात्रा रव द्वीपतः शर्मण्य देशतश्च बहवः यात्रिणः प्रतिवर्षं दर्शनायागच्छन्ति।

## नवीनं बौद्ध मन्दिर—

मेकमधुनैव भूमावस्यामिदानीं बौद्धैः स्थापितमस्ति। निर्माणाय मन्दिरस्यास्य चीन जापान देशस्य बौद्ध शिल्पिनो प्यागतवन्तः। महोच्चैः भित्तिषु चित्रमयानि दृश्यानि बुद्ध-धर्मस्येतिहास दर्शिकानि चित्रितानि।

संमुखे मन्दिरस्यास्य वृद्धपथः दक्षिण भागे नवीनैका धर्मशाला विशाला श्री बिरला महाशयेन यात्रिणां सुखेन निवासार्थं मधुनैव निर्मापितास्ति। यद् किञ्चिदेव कालोऽव्यतीतः यदत्र सारनाथ भूम्यां हिंदूनां बौद्धानाञ्च सम्मेलनं समजनि। भारत भूषणः श्री पं० मदनमोहन मालवीयोऽप्युत्सवमिमं सभापति-रूपेण शोभयामास। स्ववक्तृतायां संसारस्य बौद्धा आर्या इति नाम्नाचष्टे मालवीय महाशयः। सर्वे वयं भारतीय हिंदूवः युष्माकं बौद्धानां आर्य भ्रातरः। यूयमपि सर्वे चीन जापान बर्मा लङ्केत्यादि देशानां बौद्धा आर्य जातेः पुत्रस्य महात्मा गौतम बुद्धस्यानुयायिनः। बौद्धाश्च हिंदूवश्चार्य सभ्यताया शाखे द्वे। सर्वे वयमार्याः संगठनार्हाः। जापान देशस्य कांसल जनरलो (Consul General) व्यापार प्रतिनिधिरपि तत्रो-पस्थित असीत् बनारस भागस्य कमिश्नरश्च। बौद्धानां प्रतिनिधिना धन्यवाद पूर्वकं सन्तोषःप्रकटितम्।

आसीत् भारतीय हिंदूनां पूर्वस्मिन्काले बुद्धैः सह महान् विचार भेदः परमत्रार्यजातेः आर्यधर्मस्य च विशेषतातु सर्वदा सहिष्णुता सहनशीलता च; विचार भेदेन नाभूत् परस्परमीर्षा द्वेष इति। महाराजेनाशोकेन बुद्धधर्मस्य महा प्रचारकेन ब्राह्मण मन्दिरा-णामर्थेऽपि धनं दत्तं बौद्धानामर्थे तु देयमेवासीदित्येत्थं गुप्त

राज्यकाले बौद्धापि सम्मानिता ब्राह्मणा अपि तथैव च। यादृशः महानुपकारः बुद्धधर्मानुयायिभिः सर्वसंसारे भारतीय प्रचार-करणे भारतीयानां गौरव रक्षणे कृतः नान्यस्य कस्यचिद् हिंदूधर्मस्य शाखयाभूदि तिहास सिद्धमिदम्। न केवलं बौद्ध शास्त्राणां प्रचारः सञ्जातः बुद्धैस्तिबव्त प्रभृतिषु देशेषु परं तु हिंदुशास्त्राणां संस्कृत विद्याया प्रचारोऽपि प्रचुर अभूदनेन। श्री राहुल साकंत्यायन महाशयेन बुद्ध धर्म प्रचारकेन 'तिबत (भोट) देशे बुद्ध धर्म प्रचार' इति शीर्षकेन ऽस्मिन् पूर्वायां पत्रे सञ्चिकायां चत्वारः लेखा प्रकाशिताः। येभ्यः प्रतीयते यत् भोटदेशे काश्मीरक पण्डितैःरामानन्द भट्टादिभिः कियान् महाप्रचारः बौद्ध विद्यायंसभ्यतायाश्च कृत इति—

कुलभूषणः

---

## काश्मीरराजतरङ्गिणी

पूर्वतोऽनुवर्तते

ले० पं० गोविन्दराजानकः शास्त्री M. A. M. O. L. L. T. Prabhaker

तस्य विक्षिप्तचित्तत्वाच्छंसमेर हुसैनकौ।
यौवराज्याकम्पनपौ याकोको नृपतिर्व्यधात्॥
राजा सूनो र्हालवाल ग्रामे वैवाहिकीं विधिम्।
विधातु मगमद्वाद्यकाहलध्वन्यलङ्कृताम्॥
समापितोद्वाहकृत्यो ययावच्छबलाध्वना।
किन्त्वमात्येन तेनाथ रुद्धो योद्‌धुं चिकीर्षुणा॥
अलीडारा शंसचक्कालंशिमेंरुहूसैनकाः।
योयुद्धयन्तश्चिरमापुर्भङ्गिं पश्चाद्धतौजसः॥
प्रत्यावृत्य यौवराज्य पदस्थेन सुतेन ते।
संग्रामं कर्तुमाजग्मु विमनस्काः प्रतारकाः॥
पूर्वागत महीपालवृत्तं ज्ञात्वा महाबलाः।
भित्त्वा ते प्रतरान्नू जालदूगरे सेनया स्थिताः॥

श्रीः

भूमिप पेदगाहाख्ये ससैन्यश्चाथ तस्थिवान् ।
यत्र तौ संगतौ शूरभटाधिकृतसंगरौ ॥

पराजयं प्राप्य चान्तेऽलीडारश्चरणाम्बुजम् ।
राज्ञो गृहीत्वा कुटिलः प्रार्थयामास तं क्षमाम् ॥

उपायनादिसाम्ना च तोषयामास तं भृशम् ।
सबलं कं न मनुजास्तोषयन्ति हि निर्बलाः ॥

नाक्षमत्तेजसा तीव्रो दण्ड्यदण्ड प्रदः परम् ।
प्रलयाभां क्रोधकलामपि चक्रे नराधिपः ॥

राज्ञा तिरस्कृतश्चाथ धूमकेतु रिवार्तिकृत् ।
कोलाहलं लुण्ठनं च चक्रे सुय्यपुरं गतः ॥

अनुद्रुतः सुय्यपुरे तं पराजित्य भूमिपः ।
ततो विद्रापयामास दूरं हि पर्वतेषु सः ॥

प्रत्यावृत्तस्तदा भूमिपतिर्जितरिपोत्करः ।
सर्वे तस्यानुयातारो हर्षेणोत्फुल्ल लोचनाः ।
प्रतरे भग्नप्राये ते प्रमत्ता प्रययुर्ध्रुवम् ।
अशिश्रियुर्याम्यपुरं मग्ना वैतस्तके जले ॥

दैवाज्जातमहोत्पातविषमेऽगाध संकटे ।
गतानुगतिकास्तेऽथ पतिता अत्यजनसून् ॥
खोयग्रामाध्वना प्राप्ते नगरं धरणीपतौ ।
जडीबले विषादाख्य शालायां मलिनाशयाः ॥
अंशसाद्या विनिर्धूत पुण्यारम्भा विभीषकाः ।
व्यलादिव परं त्रस्ताः स्वात्मानं ते जुगूहिरे ॥
अलंशिरामेर्हसैनौ साकमनुचरैः शठौ ।
स्वाग्निगृह्याश्रयमापुः केशाश्रममहालुके ॥
भूपेनान्विष्य निक्षिप्तोऽलीडारो वन्दिवेश्मनि ।
वेशरत्नमन्त्रोवृत्ति वैश्ययेव स्वचेतसि ॥

मह्मद्भट्टाभिधानोऽप्यं भेजे मन्त्रिपदं ततः ।
महीपारातिदुश्चित्तार्गलो मन्त्रविशारदः ॥

इत्थमकण्टकं राज्यं कृत्वा मन्त्री नृपं नवः ।
विरुरोध कुकृत्येभ्योऽसहमान स्तु तद्बलम् ॥

निष्कास्य मन्त्रिणं चक्रे राजालीयं ततः कुधीः ।
सति नाशे क्रियाः सर्वा विपरीता विधीयते ॥

तथा सुनीजाति मुख्यं प्रणन्तुं कासिमोजकम् ।
आकारयित्वादिदेश कुमन्त्रिपरिलालितः ॥

प्रस्तुतायामथाकारणायामादेशलङ्घिनम् ।
बृहन्मस्जिददेशे तं सशिरच्छेदनं व्यधात् ॥

तत्कबन्धें वाजिपुच्छबद्धे बभ्रामिते पुरे ।
तद्गेहान्तिकगे गाढं घोषणादर्शनोत्सुका ॥

तुष्टा निःसृत्य भवनान्माता तमब्रवीत्ततः ।
साधु साध्विति ते पुत्र मरणं पुण्यवर्धनम् ॥

सुधर्म रक्षणायैवं जातं श्रेयस्करं तव ।
येष्वाकल्पं हि रमसे तेऽपि लोकाः सनातनाः ॥

तव भूता स्तथा शोच्या अपुनर्जन्महेतवः ।
स्वधर्मे निधनं श्रेय इत्यवोचत्स्वयं प्रभुः ॥

इत्थं प्रशंस्य तनुजं स्वशिरः शाटकेन सा ।
कृतनीराजना दीना रुदती करुणं बहु ॥

वदन्तो हा हतेत्येव मश्रुसिक्त सुलोचनाः ।
पदाहत्या जनाश्चैतां प्रत्यानीयन्त वेश्मनि ॥

अवाप्तभेदो लोकेऽथ भूपो मूर्खजनाग्रणीः ।
च्युतं मन्त्रिपदान्मह्मद्भट्टं क्रूरं व्यधोत्पुनः ॥

श्रीः

तस्मै बाजोकभट्टाय प्रायच्छत्पदवीं तु ताम् ।
ब्राह्मणेभ्योऽपिलोकेभ्यो द्वेष्यति स्माप्यसौ खलः

परितो विघ्नकृत् धूर्तो बभूवा मन्त्र विदसौ ।
उभयोः पक्षयोर्द्वेशे मन्त्री भूपविनाशकृत् ॥

मूर्खेण मन्त्रिणा दीर्घपुच्छकान्तिमता नृणाम् ।
उत्पादिता महोत्पाता कुकालकेतुनेव वै ॥

अनावृष्ट्युद्धवाकालभक्ष्य भक्षण वर्जितः ।
बभूव तस्मिन् समये नूनं धर्मविपर्ययः ॥

सौम्येतरदिनेष्वस्ता मुष्णाशीतमयूखयोः ।
संक्रान्तय इवोदर्ककुफलान्यभिशंसकाः ॥

इतीदृशोत्पातकम्पकम्पिता दुःखवायुना ।
नूनं जर्जदिता लोकवृक्षा उन्मूलिता इव ॥

विश्वलोकमनः शंकुनेवमुद्वेजितेषु वै ।
तेषु दावादयाकोकाभिधौ द्वौ बुद्धिमत्तरौ ॥

कश्मीरेभ्यो विनिर्गत्य प्रेषितौ दुःखितैर्नरैः ।
उद्विग्नचेतसौ तूर्णं संप्राप्तौ दीहलीपुरम् ॥

---

# भारतीय सभ्यता

[ लेखक—पण्डित जगद्धर जाडू शास्त्री एम. ए. ]

भारतीय सभ्यताऽतिप्राचीना निखिल देश सभ्यताया ललामभूता च। विद्यायां, विज्ञाने, ललितकलायां वास्तुकलायां, मूर्तिकलायां, संगीतशास्त्रे, नृत्यवाद्यविज्ञाने, नाटककलायां, ज्योतिःशास्त्रे, आयुर्वेदे, अस्त्रशस्त्रादिप्रयोगे, मन्त्रतन्त्रविधौ, विविधधर्मचर्चायां, दर्शनशास्त्रेषु, राजतन्त्रे, अर्थनीतौ, गणितशास्त्रे, विविधकलासु च भारतवर्षीयाणां वैचक्षण्यं सर्वसंमतमेव वरीवर्ति। यच्चिह्नानि, भारतवर्ष एव नहि, प्रत्युत निखिल पूर्वीय-पश्चिमदेशेषु साम्प्रतमपि गवेषणानिरतैः पुरातत्त्वविद्भिः समुपलभ्यन्ते। अतोऽनुमीयते—सकलविद्या विज्ञानकेन्द्रीभूतस्यास्य भारतवर्षस्य मस्तकं समुन्नतं समुज्ज्वलं चाऽऽसीत् पूर्वम् इति। एतादृशदेशस्य निखिलदेशविदेशशिरोमणेः प्रतिस्पर्धनीयां सभ्यतां प्रति कस्य विवेकशालिनो मनुष्यस्यास्ति संशयस्यावकाशः?

अथ केयं सभ्यता नाम? सभ्यता किल मनुष्यसमाजस्योन्नतेः परिपक्वावस्था। उन्नतिस्तु—आध्यात्मिकी आधिभौतिकी च। तंत्रमन्त्र विज्ञानयुक्ताऽऽत्मजिज्ञासाविषया गवेषणा भारतवर्षीयान् ऋषीन् मुनीन् च विहाय कैर्वा वैदेशिकैः कृता पूर्वम्?। नहि कैरपि। 'हिरण्यगर्भः समवर्तताग्रे' पूर्णमदः 'पूर्णमिदं पूर्णात् पूर्णमुदच्यते', 'अजामेकां लोहितकृष्णावर्णां', 'अथातो ब्रह्मजिज्ञासा' इत्यादयः सर्वज्ञानराशिभूत—वेदोपनिषत्सांख्यवेदान्तोपबृंहिताः सूक्तय अध्यात्म-पयोनिधि-विमन्थनक्षमाः केषाम्? तेषामेव सकलविश्वविख्यातानां जटिलसमस्यापाटन पटीयसां भारतीयानां महर्षीणाम्।

एवमेव भारतवर्षस्य विश्वोत्कृष्टा पुरन्दरपुरसमृद्धिमप्युपहसन्ती भौतिकी समुन्नतिः सकललोकेतिहासविदां नैवाऽपरोक्षा।

पुनश्च, सभ्यता नाम मानसिको धर्मविशेषः, सदसद्विवेकबुद्धेः सामञ्जस्यं, सुविनयसौशील्य-सौजन्यादि-प्रकटीकरणं च।

स्वापेक्षया विद्यावयोवृद्धेषु शिष्टाचारपूर्वकं प्रवर्तनम्। समानवयःसु समानकुलविधेषु विनय-सुशीलपरिष्कृतो वार्तालापः। कनिष्ठैःसह धर्मार्थयुक्तस्य नीत्युपदेशस्य संकीर्तनम्। तथा च तेषां शिष्टाचारादिसंशिक्षणम्, इत्यादिकं सर्वं सभ्यतामूलकमेव।

'किं नाम भवतः'? 'कस्माद्देशादागतोऽसि', इत्यादिवक्तव्ये—'कानि मधुराणि अक्षराणि भवन्नामाऽलंकुर्वन्ति?, 'को वा विरहपर्युत्सुकजनः कृतो देशः?'—इत्यादि गुणरसालंकाररञ्जितं सुरम्यं वचनजातं सभ्यता-शिष्टाचार-द्योतकमेव। आधुनिके कालेऽपि—'क्षम्यतां (Excuse me)', 'श्रीमतः परमशुश्रूषापरो भृत्यः (Your most obedient servant)', 'उपकृतोऽस्मि—अनुगृहीतोऽस्मि नितरां, (Thank you very much)' इत्यादिपदजातमपि मानवशिष्टाचारमेव समाविष्करोति। इयं तु वाचिकी सभ्यता। एवमेव कायिकी मानसिकी च प्राज्ञैर्वेदितव्या। अस्तु।

परन्तु, भारतवर्षं यदि सर्वं संमतायाः सभ्यतायाः पूर्वमास्पदीभूतमासीत् तर्हि साम्प्रतं कथमस्याः ह्रासो दरीदृश्यतेऽत्र?। किं सत्यतया सभ्यताया अभावो वरीवर्ति देशेऽस्मिन्?। कालविपर्ययो दृष्टिकोणविपर्यासश्चात्र कारणे। पूर्वमस्माकं पूर्वजा नित्यकर्मनिरता यमनियमादि परायण दया-क्षमार्जवसत्य-दानशीलसद्विवेकाद्यनेकगुणगण मण्डिता विद्याविज्ञानकलानुशीलनतत्पराः परोपकारनिरता धर्मनीतिशास्त्रानुसारिणश्चाभवन्, येन तेषां प्रातःस्मरणीयमहिमत्त्वं पुण्यश्लोकत्वं च जगतीतलेऽधुनाऽप्यऽमरत्वं भजति। तेषां स्वाध्यायपरत्व विद्याव्यसनित्वं च नानादिग्देशस्थितान् लोकान् विद्याभ्यासाय भारतवर्षे समागन्तुमाकर्षतिस्म। येन च

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।"

इत्यादि मनुवाक्यं सफलीभूतमिव प्रतिभाति। भारतवर्षविद्वद्भ्यो विद्यामधिगम्य बहवो वैदेशिका विद्यार्थिन अस्य देशस्य सभ्यता-

माहात्म्यं निजविरचितकृतिषु सम्यक् गायन्ति स्म, येन मृतकल्यापि भारती सभ्यताऽधुनापि जीवत्येव ॥

इदानीन्तने समयेऽस्मदीयं हृदयं सर्वदा-परापकारमेव प्रायश्चिन्तयत ईर्ष्यासूया-कपटदम्भासन्तोष-प्रमादालस्यादिबहुदोषपरिपूरितं पापपङ्के एव सर्वथा पतति। अत एतादृश्यां परिस्थित्यां सभ्यताप्राप्तेः कः सम्भवः ?। केवलं यः पूर्वसंचितः सभ्यतालेशलवः, सोऽपि दिनाद्दिनं क्षीणतरो भवति, यद्दृष्ट्वा मनसि नितरां परिखेदः संजायते ॥

हिन्दूसभ्यतायाः ह्रासः प्रथमं विदेशीयानां विधर्मिणां संपर्केण समजायतास्मिन् देशे। येन वर्णाश्रमधर्मेऽपि महान् आघातः समपद्यत। अनन्तरमाङ्गलराज्यकालेऽस्मासु विचारपरिवृत्तिरेतादृशी संजाता, यद् वयं पूर्वीयां सभ्यतामसभ्यतामिति मन्यमाना यत्किंचित् पश्चिमीयमथवाऽङ्गलदेशोद्भवं यूरोपदेशागतं वा वस्तु-विचार विमर्शादिकं तत्सर्वं वेदवाक्याभेदतया प्रतीयामहे। यद्यपि आंगलेभ्यः स्वीकृता बहिरंगवेषभूषा कतिभिः कारणविशेषैरपरिहार्या, तथाप्यस्माकं मानसिक उत्कर्षः स्वधर्मविचारादिकं च पूर्वीयरीत्याऽस्मत्पूर्वजमर्यादामनुसृत्यैवाक्षुण्णरूपेण भवितव्यम् ॥

अतः सविनयं प्रार्थ्यते—भवन्तः सर्वदा पूर्वीयसभ्यतानुशीलनपराः, विदेशीयसभ्यतां विषमिव परित्यजन्तः, अस्मद्विधर्मिणामाचारं बाह्यरूपं किंशुकपुष्पविलासमिव परिगणयन्तः, सदा स्वधर्मनिरताः, नीरक्षीरवत् संमिश्रितेभ्यो नानाविधिसंसारिकविषयजातेभ्यः क्षीरमेव निष्कास्य मधुरसुधास्वादमेवाऽनुभवेयुः इतिशम्—!!!

---

श्रीः

# संस्कृतसाहित्यपरिषदः श्रीनगरस्य १९९२ वैक्रमी-यस्यायव्ययस्य निर्णयः ।

## तत्रायसूचनिका

| | |
|---|---|
| वर्षारम्भे बैंकनिक्षिप्तद्रव्यम् ... ... ... | ५५७—१३—० |
| दानं श्रीःपत्रार्थेशुल्कश्च १९९२ वि० सं० ... | २३६— ४—० |
| धर्मार्थकार्यालयात्साहाय्यम् ... ... | १५०— ०—० |
| निक्षिप्तद्रव्ये बैंकात्कुसीदम् ... ... ... | १२— २—० |
| ऐक्यम्... | ९५६— ३—० |

## व्ययनिर्णयसूची

| | |
|---|---|
| श्रियः पञ्चाङ्कानां मुद्रापणे ... ... ... | ४०८— ५—६ |
| डाक व्ययः ... ... ... ... | ३०—११—६ |
| श्रीकार्यालयपत्रादि सामग्रीव्ययः ... ... | ६—१०—३ |
| "श्री" पत्रिकानयनादिव्ययः ... ... | ४— ०—० |
| कायस्थ-सेवकयोर्वेतनम् ... ... ... | ६०— ४—० |
| उत्तमसंस्कृतप्रस्ताव लेखने पारितोषकम् ... | १३— ०—० |
| सामान्यव्ययः ... ... ... ... | २—१५—६ |
| ऐक्यम्... | ५२५—१५—० |
| वर्षान्ते बैंकमध्ये निक्षेपः ... ... ... | ४२८— १—३ |
| हस्तगतद्रव्यम् ... ... ... ... | २— २—६ |
| बृहदैक्यम्... | ९५६— ३—० |

(हस्ताक्षराणि) (हस्ताक्षराणि)

निरीक्षकस्य परिषन्मन्त्रिणः

पं० ज्ञानीरामस्य कुलभूषणस्य

प्रोफैसर श्री प्रताप महाविद्यालयस्य

## श्री राघवेन्द्र संस्कृत पाठशाला होल नोरांछिया भागलपुरं (विहारतः)

२-६-३६ तिथौ छात्र स्वातन्त्र्य प्रचारिण्या सभाया यथा समयं यथा नियमं पाक्षिकाधिवेशनं समजनि यत्र आचार्य प्रथम-खंडस्थ श्री शशिशेखर पुराण प्रवचनानन्तरं सभासंचालकः श्री परमानन्दः निम्नांकिताशयं प्रस्तावमुपस्थापितवान् यदद्यत्वे पुरस्कारवितरणं छात्रेभ्यः प्रतिवर्षं प्रतिष्ठितपुरुषहस्तेनैव भवति येन प्रान्ते उद्घोषः विद्यालयस्य कीर्तिः छात्राणां यशः छात्रबन्धूनां मोदश्च जायते। तस्मादिहापि विश्वसनीयस्य कस्यचिदुपान्ते स्थितात्सभाकोशात् शारदोत्सवे वितीर्णं पुरस्कारं यदि छात्रा लभेयु स्तर्हि महच्छोभनं स्यात्" प्रस्तावेऽस्मिन्विवेचनापुरःसरं स्वीकृते आचार्य चतुर्थ-खंडस्थ श्रीयागेश्वर द्वितीयखंडस्थ श्री परमानन्दः कामेश्वरकौ प्रथम-खंडस्थः शशिशेखरकश्च समस्या पूर्ति विषयकं पुरस्कारमध्यगच्छन्। तदनु प्रधानाध्यापकः "संस्कृत परीक्षा शीर्षकं" लेखं श्रावयित्वा सभ्यानमूमुदत।

पुनरपि १६।६।१६३६ तमे सभाधिवेशने "जीवने कीदृशो व्यायामः" इति विषये श्रीबलभद्रमिश्रो हिन्दीभाषया व्याख्यातवान्। "दुर्जया हि विषया विदुषाऽपि" इति समस्यापूरणेन श्री परमानन्दझा आचार्य द्वितीयखंडस्थ श्री परमानन्दो मध्यमस्थ श्च पुरस्कारं प्राप्तवन्तौ। १।१०।३६ तमेऽधिवेशने 'प्राचीनमम्बुज यशो मलिनं करोषि' इति समस्या पूर्तौ कामेश्वर, उमाकान्त, श्री परमानन्द, श्री कीर्त्यानन्द श्री शोभाकान्त मिश्राः व्याख्याने च परमानन्दः शास्त्रार्थे श्री योगेश्वरकाः सभया पुरस्कृताः। १४।११।३६ तिथौ श्री परमानन्दझा भविष्यत्संसारविषये हिन्दीवाचा व्याख्यातवान् "बिन्दुरिन्दुः" इति समस्या पूरणाय यादवचन्द्र परमानन्दौ शास्त्रार्थे श्री परमानन्दः व्याख्याने कामेश्वरः सभया पुरस्कृताः। एवं २८।११।३६ "मैथिल-

वाचो नन्नी [illegible]' इति विषयं मैथिला व्याख्युः। "'मन्दा[illegible]स्याः" इति समस्यां यागेश्वर शशिशेखरकौ [illegible]पूरयताम् चन्द्रशेखर मिश्रश्च शास्त्रार्थे जयमाप येन ते सर्वे पुरस्कारमवापुः १४।१२।३६ दिने 'स्वीयो धर्मः' व्याख्यान शीर्षक आसीत् 'यत्तपसः फलम्' इति च समस्या पूरणेन पूर्व एव छात्रा पुरस्कारं लब्धवन्तः। एवं २०।१२।१९३६ तमेऽधिवेशने 'जगद्भविष्यति सन्तति जीवनं किमिव उज्ज्वलं कर्तुं शक्नोति' इत्यस्मिन्विषये व्याख्यानमभूदुमाकान्तस्य शास्त्रार्थश्च परमानन्दस्य येनोभय एव पुरस्कारं समवापतुः। १३।१।३७ तमे 'अस्माकं शारदोत्सवः' इति विषये मैथिलैर्व्याख्यातः 'सन्तति' समस्यायां च महादेव ठाकुरः पुरस्कारं लब्धवान्। प्रतिवर्षं पौष एव शारदोत्सवः स्यादिति—

---

वर्ष ८ Vol. 8
सं० १, २ * ओ३म् * No. 1&2

कश्मीर मण्डलान्तर्वर्ति श्रीनगरस्थायाः

# संस्कृत साहित्य परिषद-

## त्रैमासिकी

### पत्रिका

श्रीः

QUARTERLY JOURNAL OF THE

# Sanskrit Sahitya Parishad

SRINAGAR (Kashmir)

वार्षिक मूल्यम् १)

आषाढाश्विण १९९६

Kashmir Mercantile Press Srinagar.

# विषय सूची



## सम्पादक समितिः

पं० कुलभूषणः डी पी. एच. (लंडन) श्रीनगरम्
पं० जगद्धर जाडू एम. ए. शास्त्री "
पं० गोविंद राजदान " " जम्मू
पं० शिवनाथ शर्मा शास्त्री श्रीनगरम्

पत्रव्यवहारादेः पत्रिकाप्राप्तेश्च संकेतः-
पं० कुलभूषणः 'श्री' सम्पादकः

# उपनिषन्महत्वम् ।

( ले० पं० गोविन्ददत्तः शास्त्री, रैणावाटिका, श्रीनगरम् )

ओं पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

पुरात्र भारतवर्षे सर्वेषां द्विजन्मनामेषा प्राथमिकी कर्तव्यता आसीत्, यन्मानुषेण गुरूपसदनं कार्यम्, तदनन्तरमाचारान् पालयता विद्याभ्यासः कर्तव्यः

आचार्यास्तु— 'उपसन्नाय प्रब्रूयात्' इतिनियममनुसृत्योपसन्नं शिष्यं क्रमशो ब्राह्मीं विद्यां (उपनिषदादीन्) अध्यजीगमन् । शिष्या अपि तथाधीत्य मेधाविनः सन्त आत्यन्तिकीं शान्तिं लेभिरे । इत्थं सनियममधीयाना ब्रह्मचर्य-व्रते च स्थिताः सुष्ठुतया वेद्यमर्थमवेदिषुः । अत एव तासां (उपनिषदां) पराविद्यात्वम् । उक्तं च— परमपुरुषार्थब्रह्मज्ञानहेतुत्वादुपनिषदां पराविद्यात्वम् । किंलक्षणाश्च ताः—

उप नि पूर्वः सद्, क्विप्; कोशविशेषे तु इत्थमर्था निर्दिष्टाः— वेदान्तशास्त्रम् समीपगमनम्, द्विजातिकर्तव्यो व्रतभेदः, निर्जनस्थानम् ।

मुण्डकोपनिषदि प्रथमाध्यायस्य सम्बन्धभाष्य आचार्यमूर्धन्यः श्रीशङ्कर उपनिषदर्थमित्थमभिदधाति—

गर्भजन्मजराद्यनर्थपूगं निशातयति, परं वा ब्रह्म गमयति, अविद्यादि संसारकारणं चात्यन्तमवसादयति विनाशयतीत्युपनिषत् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात् ।

नह्येतदविदितं विदुषां यन्मनुष्य आत्यन्तिकीं शान्तिं बाह्यविषयसेवनेनाधिगन्तुमलं भवति, एतदर्थं तु सदा मानुषेण ज्ञानस्य साहाय्यं आश्रयणीयम्, येन सत्यासत्यविचारमधिगम्य मर्त्यः श्रेयस्करं ज्ञानमधिगच्छति । अत एवोक्तं च—

'येनाश्रुतं श्रुतं भवति, अमतं मतं भवति, अविज्ञातं विज्ञातं भवति । छा० उ० ६ । १ । ३ । मुण्डकोपनिषदि

च– 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । मुण्ड० उ० २ । २ । ८ ।

उपनिषत्सु प्रथमा 'ईशावास्योपनिषत्, या शुक्लयजुःसंहितायाश्चत्वारिंशत्तमोऽध्यायः । एतस्मात्पूर्वमूनचत्वारिंशत्तमेऽध्याये कर्मनिरूपणमस्ति । अस्याद्यमो मन्त्रः 'ईशावास्यं०, अत एवैतन्नाम ईशावास्योपनिषदिति । ग्रन्थरूपेणेयमत्यल्पा, परमेतन्महत्वं सर्वसम्मतमस्ति ।

पश्चिमीयैर्विद्वद्भिः मैक्सम्यूलरमहाशयप्रभृतिभिरुपनिषन्महत्वं मुक्तकण्ठं प्रशस्यते । मैक्सम्यूलरस्तु–

इयमुपनिषद्वेदान्तदर्शनस्यादिमं कारणं, अस्यामीदृशा विचारा दृश्यन्ते, यैर्मनुष्यस्य कल्याणकरो मार्गः पुरस्कृतो भवति । शर्मण्यदेशीयः शोपेनहरस्तु–

नहि सर्वास्मिन् संसार ईदृशोऽन्यः स्वाध्यायो वर्तते, यो मनुष्यं कल्याणकरे मार्गे प्रवर्तयति । आगमिष्यति स समयः यदाऽयमेव जनताधर्मो भविष्यति । डाक्टरगोल्डस्टूकरस्तु–

उपनिषदस्तु उच्चतमं ज्ञानं, यासु पूर्वेषां विचाराणां पुनरावृत्तिः सञ्जाता । उक्तं चान्यत्रापि–

य इदं ज्ञानामृतं पिबति, स जन्मजरामृत्युभयान्मुच्यते, नहि तेन किञ्चित् कर्तव्यं प्राप्तव्यं वा भवति ।

उक्तं च वेदान्तसिद्धान्तमुक्तावलीकृता–

कुलं पवित्रं जननी कृतार्था वसुन्धरा पुण्यवती च तेन ।
अपारसच्चित्सुखसागरेऽस्मिन् लीनं परे ब्रह्मणि यस्य चेतः ॥

---

"आत्मनो बन्धुरात्मैव शत्रुरात्मैव चात्मनः"

## रागद्वेषफलम् ।

(ले. पं० टीकालालशास्त्री)

इह खलु सर्वे एव प्राणिनः– 'इच्छादिद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्– इति गौतमसूत्राभिहितेच्छादि-

लिङ्गेन आत्मना समधिष्ठीयन्ते । तदुपभोगयोग्यं च इन्द्रियपञ्चकसञ्चितं भूतजातप्रसूतं चेष्टाविशिष्टं कलेवरं; तस्यैव चाक्षुषादिप्रत्यक्षजनने करणरूपतया उपकारकं अन्तःकरणम् । स च आत्मा गुणत्रयसाम्यदशानिर्देश्यया प्रकृत्या समुपयुक्तः । सा च सत्त्वरजस्तमोभिधेयान् गुणान् सञ्जनयति । त एव सकललौकिकक्रियाकलापपरिपाटीपटीयांसः । उक्तं च भगवता श्रीगीतायाम्— "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः" इति। ततः प्रथमकक्षादीक्षितस्य यदा वृद्धिः समभिजायते, तदानीम्—

"सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत" ॥

इति शारीरिकसमस्तद्वारप्रकाशनक्षमः ज्ञानप्रदीपः प्रदीप्तो भवति, रजोबलीयस्त्वकाले च—

"लोभप्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ"—

इति श्रीगीताप्रगीतपद्यानुरूपं लोभप्रवृत्त्याद्युत्पत्तिः । अस्यैवानन्तोत्कर्षत्वे—

"अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन" ॥

अज्ञानादिप्राबल्यं वरीवर्ति । रजोजनितरागद्वेषौ च तमोनिर्गतमिथ्याबुद्ध्याऽनुगम्यमानौ नाट्ये इव नटसूत्रधारौ यत् यत् वैचित्र्यसंपादकं जीवजातसंमोदकं नाट्यं नटयतः तत् तत् प्रायः दृष्टिश्रुतिपथं नीतमेव विचारचतुरैः । ताभ्यामेव च लोभेर्ष्यादयो दोषाः प्रादुर्भवन्ति ॥

लोभमहिम्ना च दुष्परिणामेषु अपि स्रक्चन्दनवनितादिषु सुखोपलब्धिबुद्ध्या प्रवर्तमाना मानुषादिजीवजातिः संसारचक्रचङ्क्रमणशालिनी विपदाम्बुधौ निमज्जति । तेनैव खगोऽपि

खगगणेषु व्याधप्रसारिते तण्डुलजालशालिनि जालके परिपत्य निर्जीवो भवति, लोभप्रबुद्धश्च फणिमणिजिहीर्षया प्रहरन् उरगं सत्वरं एव उरसि प्रदष्टो नष्टतामुपयाति । तदाक्रान्त एव हरिणो ग्रीष्मोष्मरश्मिप्रदीप्तासु वालुकासु कीलाललिप्सया चिरतरं इतस्ततः परिभ्रमत् विषादमेति । तत्प्रेरित एव नरो रत्नाकररत्नाकरचिचीषया चेष्टमानः स्वेष्टजनानन्दचन्द्रेण सममेव परिभ्रश्यति सागरे । तदनुकम्पयैव च कुमुदमकरन्दसन्दानामन्दस्पृहा मधुलिहोऽपि वीतविशालसंसारविरागा ॐ ॐ इतीव ब्रुवन्तः संन्यासिन इव मुक्तिमुपयान्ति । लोभाभिभूतः श्रीरामचन्द्रललनास्पृहयालुः दशाननोऽपि निराननतामभिययौ ॥

ईर्ष्यया च द्वेषप्रसूतया विश्वामित्रेण विश्वामित्रेणापि वसिष्ठसूनुशती लोके निरवशेषतां नीता । तयैव च प्रेर्यमाणा हरिस्पर्धकाः शिशुपालादयो यां दुरवस्थामधिजग्मुः सापि सर्वेषां विदितैव, भास्कराय द्रुह्यन्ती भास्वरापि कुमुदिनी दिवसेऽकुमोदिनी भवति इत्यवलोक्यत एव ।

कण्ठीरवकण्ठरवपरिपूरितदिगम्बरान्तायाः पाशाङ्कुशशरशरासनशयकिसलयाया अनुकम्पापीयूषरसालयायाः स्तुतिपटुशक्रादिसुरचक्रचटुलचूडामणिमणिसहस्रराश्मिसहस्ररश्मीकृतप्रत्येकांघ्रिनखायाः श्रीमत्याः पार्वत्या विद्वेषिणां चण्डमुण्डादीनां श्वानलुण्ठनमपि विदितमेवास्ति संसारे । पाण्डवविरोधिनां कौरवाणामपि भास्करेण कैरवाणामिव हरिणा प्रकल्पिता वाष्पप्रवर्षिणी गाथापि गीतैव गीतायाम् । अतः, रागद्वेषावेव मित्रामित्रत्वप्रयोजकौ । प्रथमस्य तु सौहार्दजननैपुण्यं, द्वितीयस्य च शत्रुवदनिष्टकल्पने प्राबल्यम् । यो हि जीवोऽपरस्मिन् रागं प्रकटयति, सोऽपि तेनैवोद्भाव्यमानः मृत्युं भजते । द्वयोश्च परस्परमेकक्रियाहृद्यतया सुहृद्भावः समाविर्भवति इत्यस्माभिरत्र

लोके दरीदृश्यते । अन्योन्यं द्रुह्यतोस्तु कथं सख्यभावः, अवलोक्यन्ते च लोके लोकाः पयःप्रदां धेनुं घासादिवितरणेन तोषयन्तः प्रसाद्यमानाश्च दुग्धप्रदानेन तया । न केवलमयं रागद्वेषमहिमप्रभावो जीवेष्वेव परञ्च देवेष्वपि, नहि कोऽपि सुरः सपर्यया रागमनभिव्यनक्ति, नरे रतिमननुबध्नाति, न चापि वाञ्छितमप्रयच्छति, अतः प्रीत्या परो मित्रं द्वेषेण च द्विट् ।

एतौ रागद्वेषौ च सत्त्वतमोगुणाश्रयौ, सत्त्वतमोगुणौ च प्रकृतिकृतौ, प्रकृतिश्चात्मायत्ता, इति परंपरातः सख्ये सपत्नभावे च आत्मन एव हेतुता । देवदत्तस्य यज्ञदत्तो मित्रं विष्णुदत्तः शत्रुरित्यादि प्रयोगास्तु प्रयोक्तृणामेव शेमुषीलेशशून्यतां द्योतयन्ति, यतो देवदत्तस्य रागेणैव यज्ञदत्तो मित्रतां नीतः द्वेषेण च विष्णुदत्तः शत्रुः, रागद्वेषौ च देवदत्तात्मनैव परम्परातः प्रसूतौ, अतो मित्रत्वामित्रत्वयोरपि तदात्मनः कारणता, इत्यलं विस्तरेण ।

---

ओं

## कश्मीरदेशान्तर्गतं मार्तण्डक्षेत्रं (मटनेतिनाम्ना प्रसिद्धम्)

( ले० जगन्नाथकौलः, रैणावाटिका, श्रीनगरम् )

अयि श्रीमन्तः परोक्षभूतकथाविमर्शशालिनः ! इतिहासप्रणयिनः ! स्वदेशोद्धाररसिकाः ! मान्याः ! विद्वांसः !

"सर्वदेशेभ्यः कश्मीरदेशः पतितोद्धारकैरन्यत्राऽविद्यमानैः कतिपयैस्तादृशैर्बहुभिस्तीर्थैरलङ्क्रियते" इति विदितमेव भवताम् । तथाहि —

मार्तण्डेत्यभिधानमेकं पावकं तीर्थं (यत्तु कश्मीरभाषया मटनेति नाम्ना प्रथितमस्ति) केवलं कश्मीरदेशान्तर्गतमेवैतत् , नान्यत्र कापि समुपलभ्यते इत्येतदस्माकमयः । अतः प्राप्तपरमानन्देन

मया पुराणप्रतिपादितां कथामवलम्ब्य संक्षेपेण तत्प्रादुर्भूत्यादिकमेवाधस्ताद् विषयीक्रियते । तथाहि—

महर्षिः मरीचेः सूनुः कश्यपमुनिर्दक्षकन्यामदितीति नाम्नीं परिणिनाय । कश्यपः स्वां पत्नीं संसेविकां पुत्राभिलाषिणीं च विज्ञाय पुत्रप्राप्तेर्विष्णुमाराधयितुमाऽऽदिशत् । अथ सापि पत्युपदेशं शिरसि संप्रधार्य कठिनं तपस्तप्त्वा प्राप्तविष्णुसाक्षात्कारा तमभितुष्टाव । ततः सा च "विष्णुप्रभावतुल्या महातेजस्विनः पुत्रा मे भवन्तु,, इति वरमयाचत । विष्णुश्च "तथास्तु,, इति संभाष्य तामुपदिदेश।"हे महाभागे ! विश्वसितयाऽव्यभिचारिण्या च बुद्ध्या कश्यपं भजस्व, अन्यथा विघ्नागमनसंभावना स्यादिति,, । विष्णोराज्ञां प्राप्य सा कामार्ता पुत्रकामनया कश्यपसमीपं गत्वा तं ध्यानमग्नमद्राक्षीत् । एतस्मिन्नन्तर एव महातेजस्विनो महादेवस्य दर्शनं प्राप्य पतिनिष्ठापि सा तस्य रूपेण विस्मिता मदनशरपीडिता चाऽजनि । महादेवस्यान्तर्धाने पुनरपि सा कश्यपसमीपमाययौ । कश्यपोऽपि तपोबलेन तदीयस्खलनमात्रं दृष्ट्वेषत्क्रुद्धस्तस्यै "त्वं वन्ध्यगर्भा भव,, इत्यशपत् । इत्याकर्ण्य क्रुद्धा सा शापविध्वंसाय दिव्यं सार्धद्वादशवार्षिकं कठिनतमं दुःसाध्यं तपस्तप्तवती । अथ तपसा प्रज्वलन्तीं तेजोभिः परिवृतां स्वां पत्नीमदितीं कश्यपो दृष्ट्वा तां तपसो निवृत्त्यर्थमतीवासान्त्वयत् । भर्तुराज्ञया सापि तपसो निवृत्ता, अर्थात् त्रयोदशवर्षस्य व्रतानियममर्धमेव विहितवती । ततस्तौ प्रसन्नचेतस्कौ गार्हस्थ्यधर्मतत्परावभूताम् । कालान्तरेण तां प्रकटितगर्भचिह्नां समीक्ष्य, स्व–स्त्रीसेवया हृष्टः कश्यपोऽवदत्, "प्रिये त्वमभिलषितं वरं याचस्व, अहं तुभ्यं देवानामपि दुर्लभं वरं दातुं प्रभवामीति,, । सा केवलं तेजोमयान् सुतानयाचत । एवं च स्मितमुखः कश्यपः प्रत्यभिदधौ, "यतः क्रोधपूर्णया त्वया द्वादशवर्षं दुष्करं तपस्तप्तं, अतस्त-

व महातेजस्विनो द्वादशपुत्राः प्रादुर्भविष्यन्ति, परन्तु पूर्वं मद्दत्तेन सार्थकेन शापेन त्वत्तः अण्डाकारा द्वादश गर्भा जनिष्यन्ति, तेभ्यश्च द्वादशपुत्रा द्वादशमाससूर्याणामधिष्ठातृदेवता भविष्यन्ति, यतस्त्रयोदशवर्षेऽर्धमेव व्रतमाचरितं, अतः स गर्भो मृताण्डमेव भवेदिति,, ॥

कालक्रमेण देवमाताऽदितिस्त्रयोदशान्यण्डानि प्रासोष्ट । पुत्रान्प्रतीक्षमाणयोरदितिकश्यपयोः समीपं ब्रह्मा स्वयमागत्य तावुपादिशत् , । "प्रियौ! भवद्भ्यां कालः प्रतीक्षितव्यः। युवयोरात्मजाः सुरासुरलोकानपि स्वतेजसाऽधिकुर्वन्तो व्याप्ततेजसो द्वादशपुत्रा भविष्यन्ति, एतन्मृताण्डं च सतीसरसि निधातव्यं, एतद्धि प्राप्तप्रतिष्ठं मृतानामपि प्राणिनामुद्धरणे चतुर्वर्गदाने च प्रभविष्यति। अस्य तु प्रतिष्ठास्थाने मार्तण्डेति नामकं क्षेत्रं त्रिषु लोकेषु विख्यातं पतितोद्धारकं भविष्यति,, । व्यतीते तु किञ्चित्काले इत्थमेव सर्वमभूत् ॥

एतदनन्तरं ह्यप्रार्थयत् ब्रह्माणं कश्यपः स्वतपस्तपनाय पवित्रं स्थानम् । ब्रह्मणोपदिष्टः कश्यप आराधितमहादेवानुग्रहात् सतीसरः प्राप । सरसः पयोनिष्कासनार्थं च विष्णुमस्तौत् । परमकारुणिकः श्रीविष्णुः कश्यपस्य स्तुत्या प्रहृष्टचेता चक्रद्वारा वराहमूलनाम्नि (बारामुल्ला) स्थाने पर्वतं विदार्य शुष्कं च सरः कृत्वा तत्र दृष्टसौवर्णमृताण्डस्य चक्रेण द्वौ भागावकरोत् । अथ तस्माद् नेत्रप्रतिघातिना तेजःपुञ्जेन प्रादुरभावि । तेजःपुञ्जेन समुत्पन्नपरमप्रकाशस्य ग्रामस्य आड (आह) इति प्रख्यातं पावकं च नामाऽभूत् । यत्र च स्थाने तेन तेजसा संतमसं नष्टं, तस्य स्थानस्य अन्धोरक (अन्दर ग्राम) इति प्रथितमभिधानं संजातम् । अमुं तेजःपुञ्जं दृष्ट्वा विस्मिता देवाः साकारस्य महादेवस्य प्राप्तसाक्षात्कारास्तुष्टुवुः । कृतगोविन्दसाङ्गसाक्षात्कारे स्थाने करांगेश (क्रंगुस) इति नामाऽ-

ख्यापि प्रख्यातम् । यतो मृताण्डात्तेजःपुञ्ज उत्पन्नः, अत एवे-तिहासिकैस्तदधिष्ठातृदेवस्य मार्तण्डनाथेति नामोच्चार्यते । स च देशः "मार्तण्डक्षेत्र,, मित्यभिधीयते ॥

श्रीविष्णोरत्राऽस्य मृताण्डस्य भवनेन प्राप्त्या (भू प्राप्तावित्यस्माद्धातोर्भवनं) एतत् क्षेत्रं "भवन,, इति नामवि-ख्यातिमलभत । अपि वा मुख्यक्षेत्रस्य भवनेन सत्तया, अथवा मृतप्राणिनां भावनात् साधुगतिदायकत्वात्, अथवा मार्तण्डनाथ-स्यायं भवनं गृहमित्यतो वा "भवन,, इति पवित्रं नाम लो-के प्रख्यातिं प्राप ॥

साकारस्य मार्तण्डनाथस्य नेत्राभ्यां निर्गतया ज्वाल-या भर्गशिखेति, हृदयादुत्पन्नया योगीश्वरीति, जिह्वायाः नि-सृतया भीमेति, मुखात्प्रसृतया भास्वतीति, दक्षिणपार्श्वात्प्रादु-र्भूतया भवानीति नाम्न्यो देव्य उदपद्यन्त । द्वाभ्यामण्डख-ण्डाभ्यां विमल-कमलेति नामकौ द्वौ नागौ समुत्पन्नौ । चक्र-प्रहारेण या पुण्यप्रवाहा नद्युत्पन्ना, तस्याश्चाका (चक्रसुता) इति नाम प्रथितमस्ति । (चकति प्रतिहन्ति पापानीति चाका)। अस्यां स्नानदानादिना घोरातिघोराणि पापानि नश्यन्ति । यतो हरिहरयोः प्रतिक्षणमत्रैकास्मिन्नेव खण्डे वसनादेकस्य ना-गस्य "विमले,, ति नाम वर्तते, (वि=विष्णुः, म=महादेवः, तौ लौ=लीनौ यत्रेति विमलः) । (क=ब्रह्मा, म=महादेवः, तौ लौ=लीनौ निवसतो यत्र स नागः "कमले,, ति नाम्ना प्र-थितः) । यत्र श्रद्धावन्तः पुरुषाः स्नानदानादिना परमात्मनः सामीप्यं सादृश्यं चाधिगच्छन्ति, तत् स्थानं श्रीमत्सभवनमिति नाम्ना विख्यातमस्ति ॥

मार्तण्डक्षेत्रस्येतस्तत एव भर्गशिखादयो योगिन्यो निव-सन्ति । नेत्रतेजसा तूत्पन्ना भर्गशिखेति योगिनी पर्वताधिष्ठिता-स्ति, यां तत्त्वविद्स्त्रिपुरसुन्दरीं, वैदिकाः गायत्रीं, सावित्रीं,

सरस्वतीं च वदन्ति, यस्याः पूजनेन श्रद्धायुक्ताः पुरुषा महापातकान्मुच्यन्ते । श्रूयते च— इन्द्रोऽपि वृत्रासुरवधरूपात्पापादत्रैव मुक्तोऽभूत् ॥ द्वितीयया भवानीति योगिन्या प्रतिष्ठितं पुरमद्यापि "भवानीपुर" इति संज्ञाया प्रथ्यते ॥ तृतीया च भीमेति योगिनी चांकाकृताधिष्ठाना विद्यते ॥ मार्तण्डनाथस्य पादस्थले योगीश्वरीति नामधेया योगिनी संतिष्ठते, तत् स्थलमद्यापि "लोकारिस्थल" इति (लुखरियार) नाम्ना विख्यातम् । शास्त्रैश्च "लोकारिस्थले कृतं स्नानदानादिकर्माभूतसृष्टेर्न क्षयति, तत्र मलिम्लुचमासे कृतं श्राद्धादिकर्म कल्पेषु प्रयागतीर्थे कृततर्पणश्राद्धाद्, गङ्गायां गयायां वा श्राद्धादिक्रियायाश्चोत्कृष्टतरं, तृप्तिकारकं, सुगतिदायकं, निर्वाणदं च,, इत्येवं वर्ण्यते । तथा च नित्यं नैमित्तिकं वा तस्मिन् स्थाने कृतं श्राद्धादि कर्म ग्रहणकालेषु विधिपूर्वकं वेदविदे ब्राह्मणाय गोकोटिदानफलादपि प्रभूततरं फलदायकं भवति ॥ अधुनाऽस्यैव मार्तण्डनाथस्य परिमाणं शास्त्रेणेत्थं लिख्यते—

उत्तरे हिमवत्कुक्षौ शुभे काश्मीरमण्डले।
क्रोशत्रयपरीमाणं सूर्यक्षेत्रं विमुक्तिदम् ॥ १ ॥
चक्रेश्वरात्समारभ्य यावद्गौतमसङ्गमम् ।
मार्तण्डं नाम तत्क्षेत्रं पितॄणां मुक्तिकारणम् ॥ २ ॥
स्पर्शनादेव तोयस्य हरन्त्या पातकं नृणाम्,
नद्या पश्चिमगामिन्याश्चाकया परिशोभितम् ॥ ३ ॥
पूर्वादिरक्षितं साक्षाद्देवीभिरधिष्ठितम्।
परितो रक्षितं साक्षाद्देवीभिः परशक्तिभिः ॥ ४ ॥

---

## बौद्धदर्शननिदर्शना ।

(अनु० विद्यावारिधिः पं० शिवनाथशास्त्री श्रीनगरम् ।)

गताङ्कादनुवर्तते—

अस्तु । उक्तकारणैश्चक्षुरादीन्द्रियाणां पारस्परिकविषयफलसंयोजकत्वेनान्यस्यान्तरिन्द्रियस्य मनस अङ्गीकारावश्यकत्वेऽसात्परस्यान्यस्यात्मनः काऽऽवश्यकता । चेत्प्राक्तनानुभवस्मृतिरूपस्थापनासिद्ध्यर्थं मनसः क्षणिकत्वादित्युच्यते । (नैवं ब्रुवते ते, इत्थं ये मनसः क्षणिकत्वं नाङ्गीकुर्वन्ति ।) वयं तु ब्रूमो क्षणिकत्वं मनसः । परं स्वपरवर्ति मनसः कारणत्वमप्यस्यास्तीव । आनुवं-

शिकनियमानुसारेण यथा मातापित्रोः बहवो गुणदोषाः पुत्रे पौत्रे च संक्रामन्ति; एवं पूर्वो मनः स्वानुभवानां बीजं संस्कारश्चोत्तरागामिमनोऽर्थं दायत्वेन स्थापयति। तदेवाधुना स्मृतिकारणं भवति। वस्तुतः संस्कारचिह्नानि क्षणिकवस्तुन्येव लगन्ति। यद्यात्मानं कूटस्थं नित्यं वा मानयामस्तर्हि सोऽनन्तकालपर्यन्तमेकरसः परिणामरहितश्च भवितव्यः। नित्ये चात्मनि अनुभवचिह्नानि कथं वा लगन्ति। लगन्ति चेत्तर्हि चिह्नसंक्रमणान्तरमेव रूपपरिवर्तनं स्यात्। नास्त्यात्मा जडपदार्थः, यस्य केवलं बाह्यावयवान्येव लाञ्छितानि स्युः। सच चेतनः, अतोऽस्यां दशायामिन्द्रियजनितज्ञानं सर्वतः प्रविशति। ततः स रागमोहद्वेषादिप्रकारेभ्यः कमप्याश्रयति। तदा तद्रूपो भवति। नत्वेकरसः। एवं च कथमात्मा नित्यः?। चेत्किश्चित्कालं मानयामश्चिह्नितो भवतीति। तर्हि तेऽभौतिकाः संस्कारा नित्य आत्मनि लग्ना नित्या एव भवन्ति। शुद्धेर्मुक्तेश्चाशा तदा कथं स्यादिति॥

यदि वदामः— नास्ति कोऽपि नित्य आत्मा, तर्हि मनसः क्षणिकत्वे शरीरस्य विनाशे शुभाशुभकर्मणां विपाकः संभवितुमर्हति कथम्?। अत्रेदं पूर्वं विचार्यं, बौद्धा विपाकं कथं स्वीकुर्वन्तीति। ते त्वित्थं नाङ्गीकुर्वन्ति, यद्वयं शुभाशुभकर्म कुर्महे, तल्लेखनाय ईश्वरेणास्मत्पृष्ठे द्रुतलेखको धृतः। कायिक-वाचिक शुभाशुभकर्मणामुद्गमस्थानं मनः। अतो द्वेषयुक्तकार्यकरणाय द्वेषयुक्तं, रागयुक्तकार्यकरणाय च रागयुक्तं मनः पूर्वं संपादयामः। यावत्कालं तत्तत्संस्कारसंस्कृतं मनः द्वितीयसंस्कारसंपादनध्वनिना न घर्षितं भवति न तावत्पूर्वसंस्कारभावाभावः। मनुष्यः एकस्मिन्नेव दिने झगिति स्वभावतो न क्रौर्यं प्राप्नोति। यदि शस्त्रकर्म ( Operation ) कृद्वैद्योऽपि शनैःशनैरेव मनसो दार्ढ्यं संपादयति, तर्हि का कथैव हिंसकस्य। अनाथासहायबालिकाताडनदर्शनेन दर्शकमनांसि दयाप्रज्वलितानि भवन्ति, हिंसकमनस्तु किं न दृढं भवेत्। यद्यत्कर्म वयं कुर्मस्तस्य तस्य प्रभावस्तदैव मनसि पतति, यावती क्रूरकर्मणा दृढता भवति, तावतीव सूक्ष्ममानसिकचिन्तनस्य विकासयोग्यतायाश्च हानिर्भवति॥

शुद्धाशुद्धमनोभावास्तु धनायव्ययवदेव। यथाधिकाये व्ययस्य न्यूनता, व्ययाधिक्ये धनस्य न्यूनता भवति। भावास्तु प्रति-

क्षणं मनस क्षणिकत्वेन स्वयमेव नवनवा भवन्ति । भावास्तु क्षणात्क्षणं परिवर्तन्ते, नास्त्यत्र पक्ष–मासादिभेदसंभावनैव । एवं प्राक्तनशुद्धाशुद्धानां अनुभवानां पूर्णो योगो मनुष्यः । क्षणान्तरोत्पन्नमनसः पूर्वक्षणजनकमनसा बहवो भावा दायत्वेन सञ्चरन्ति । एष एव संचारो बाल्याद्वार्धक्यं यावदनिर्बन्धसद्भावः । नास्त्यत्र वैमत्यमणवपि । बुद्धशिक्षानुसारेणैष भावसंबन्धो जन्मतः पूर्वं मरणान्तरमपि अनेकजन्मसंबद्धो भवति । प्राचीनानुभवोद्भूत–मनस उपमा मृत्युक्षणे शरीरत्यागविधौ तादृशतप्तलोहधारा समा, या कयापि नालिकयाऽधो गच्छन्ती मध्येमार्गे प्रतिबन्धकबद्धा स्यात् । प्रतिबन्धकलग्नाऽन्या च प्रणालिका चुम्बकशक्तियुक्ता भवेत् । अवश्यं चुम्बकाकृष्टा सा धारा तेनैव पथा निर्याति । एवं मृत्युकाले चित्तप्रवाहः स्वसंस्कारसमूहेन सह जीवनसीमायां तिष्ठति । तत्संस्कारराशिरूपिचुम्बकसमधर्मि समीपवर्तिनि द्वितीयशरीरेऽऽकर्षयति। तत्रापि प्राचीनैव कार्यप्रणाली पुनरारभ्यते । अयमेव क्रमस्तावत्पौनःपुण्येन प्रत्यावर्तते । यावत्तृष्णासंक्षयादियं भावसन्ततिर्विशृंखलिता न स्यात् निर्वृतिं न प्राप्नोति । एवमेव कर्माणि तत्फलानि जन्मान्तरशतानि भवन्ति च ॥

जीवस्य नित्यत्वाङ्गीकारे बहुदोषापत्तिर्भवति । यदि भवन्तस्तस्य नित्यत्वं मन्यन्ते, तर्ह्यमरत्वमजन्मात्वं च मन्तव्यं स्यात् । ततः सामीयधर्मे [Semitic] यत्र पुनर्जन्म न मतं, तदपि मतं भवति, जीवोऽनादिकालादद्य यावन्निश्चेष्टो मौनी तिष्ठति । एक–दश–शतवर्षान्तं वा विना केनचित्पूर्वकर्मणा संसारे जन्मांधो–सनेत्रो वा जन्मरोगी–स्वस्थो वा, मन्दबुद्धिः–प्रतिभाशाली वा समुद्भूतः, मरणानन्तरमनन्तकालार्थं स्वकृतकतिचिद्वर्षपुण्यापुण्यकर्मणा स्वर्गे नरके वा पतति । किमेवं प्रकारा नित्यता युक्तियुक्ता मन्तुं शक्या वा? । ये नराः पुनर्जन्मना सहात्मानं नित्यं मन्यन्ते, तेषां मतेऽपीदं द्वयं परस्परविरुद्धम् । यद्यात्मा नित्यस्तर्हि कूटस्थः सदैकरसोऽपि स्यात् । एकरसवस्तुनि परिशुद्धे कथं तस्य जन्ममरणबाधा?, । अशुद्धे तु स्वाभाविकाशुद्धस्य कथं मुक्तिः?, । नित्यस्य कूटस्थस्य संस्कारलेशोऽपि न लगतीति पूर्वप्रतिपादितमेतत् । यदि संस्कारार्थं मनसोऽङ्गीकरणं, तर्ह्यात्माङ्गीकरणस्य काऽवश्यकता?।

ननु यद्यात्ममनसोरेकत्वं क्षणिकत्वं च, तर्ह्यनेकतायां 'अह-

मभविष्यं, 'अहमस्मि' एतादृशैकताभानं कथं भवति । शृणु । संसारे सार्वभौमिकनियमोऽयं यत्समुदाये एकत्वबुद्धिरस्ति । संसारे सर्वाणि वस्तूनि क्रमशः सहस्राणुभिः संपन्नानि । किञ्च लोह-प्लेटिनमधातु-रत्नानि कठिनवस्तूनि परमाणुपुञ्जनिर्मितानि सन्ति । सूक्ष्मदृष्टिमन्तस्तान्परमाणुपुञ्जान्भिन्नान्पश्यन्ति, यथा स्थूलदृष्ट्या वनान्तर्गत्वा वानेयवृक्षान् विभिन्नान् । एवं संसारे सर्वेषु दृश्यपदार्थेषु वास्तवानेकतायामप्येकत्वव्यवहारः । यथानेकाङ्गसंभूते शरीर एकशरीरतां, अनेकवृक्षसंपादिते स्थले वनमिति एकोक्तिवचनम् । बहुतृणसंपादिते वस्तुनि रज्जुरिति । अत्रां भेदस्त्ववश्यमस्ति । यत्र शरीरे वने रज्जुविषये चैकस्मिन्देशे काले चांशांशिरूपौ भिन्नतया स्थितौ स्यातां, तत्र प्रतिक्षणमेकैकतया मन एव पुनःपुनरुत्पद्यते। यथाहि-दीपकज्वाला तादृशसूक्ष्मकालेन शीघ्रं सञ्चरमाणा घटपटादीन् प्रकाशयति । सञ्चरणं तस्या न गृह्यते, कालस्तु स्वतन्त्रमानेन चालयति, एवं मनोऽप्यतिशीघ्रं स्वस्थानेऽन्यं मन उपस्थापयति यस्यान्तरकालो न गृह्यते । एवं संख्यातीताणुसंपन्नं वस्तु केवल (एक) भावेनावलोकयामः । नदीधारा जलबिन्दुनिर्मिता, बिन्दवश्चागणित-उद्रजनोषजनपरमाणुभिः, परमाणवस्त्वनेकान्तरसहितैर्विद्युत्कणैर्निर्मिता एवमेका नदी निरन्तरेति प्रतिभाति । वस्तुतः संसारे समुदाय एकमूर्त्या समुदीर्यते । एवं च चेदसद्भाषायाः सार्वभौमिकोऽयं प्रयोगस्तर्हि क्षणिकमनःप्रवाहस्त्वेक एवेति किमाश्चर्यम् । सर्वथा नामैक्येन व्यवह्रियमाणे वस्तुनि अणुसमुदायसंपन्नेऽपि पृच्छ्यते, समूहितोऽयामिति । तत्रात्मा किमेकः प्रतिभासते?। ननु चेदात्मा क्षणिको द्वितीयक्षणे नैव तिष्ठति, तर्हि तस्य पूर्णता परिशुद्धिश्च कथं? । चेदुच्यते, वयं मनसः क्षणिकत्वाङ्गीकारेऽपि (अपरिमिताणुसंपन्ननदीप्रवाहवत्) मनः (सन्तति) प्रवाहस्य क्षणिकत्वं नाङ्गीकुर्मः । अस्या एव चित्तसन्ततेः पूर्णता परिशुद्धिश्च कर्तव्या भवति । यावच्चेयं रागद्वेषमोहमलेभ्यो मुक्ता भवति, तावच्च तस्य पुरुषस्य कायिक-वाचिक-मानसिककर्माणि परिशुद्धानि भवन्ति । येषां फलस्वरूपतो स्व-परोपकरणाय सामर्थ्यं लभते । क्रमशो भूमण्डलस्यापि (तृष्णास्वार्थक्षयात्सर्वदुःखेभ्यो विमुक्तो भूत्वा) उपकारी भवति ॥

एवं मनसः क्षणिकत्वे तत्सन्ततिक्षणिकत्वं नास्ति, सन्तति-

परिशुद्धिरत्यावश्यिकी । वस्तुतो यदि आत्मा नित्यः कूटस्थश्चेति वयं न मानयामस्तत्स्थाने प्रतिक्षणोत्पद्यमाना चित्तसन्ततिरेवास्तीति । तर्हि शब्देषु नास्माकं कोऽप्याग्रहः । आत्मेति शब्दस्तु नित्य-चेतनवस्तुन्येव व्यवह्रियते । अत एव बुद्धेन अनात्मशब्दप्रयोगः कृतः ॥

३— न स्वतःप्रमाणत्वं ग्रन्थानाम् ॥

जगति स्वतःप्रमाणत्वं नास्ति कस्याप्येकस्यैव ग्रन्थस्य, सर्वे च स्वस्य ग्रन्थस्य स्वतःप्रामाण्यं मन्यन्ते मानयन्ति च परान्स्वकौशल्येन । ब्राह्मणास्तु वेदं एव स्वतःप्रमाणत्वेन मन्यन्ते । यस्य बहुतराः कथा अन्यधर्मग्रन्थेभ्यस्तथा विज्ञानद्वारेण सिद्धानामनेककथानां विरुद्धाः सन्ति । स कथं स्वतःप्रमाणत्वमर्हति । चेत्कोऽपि वदेद्वेदो वैज्ञानिक-प्रयोगसिद्धसिद्धान्तानामविरुद्धस्तर्हि स प्रष्टव्यः, कथमिव । अन्ते चैतद्विषयसिद्धिसाधनाय बुद्धिरेव शरणम् । अतो ज्ञायते वेदस्य प्रामाणिकता स्वीकरणं बुद्धिविषयकम् । तर्हि वेदापेक्षया बुद्धिरेव स्वतःप्रमाणा । ग्रन्थापेक्षया तु-बाइबिल-अंजील-कुरानआदि स्वतःप्रमाणत्वेन मन्तव्यग्रन्थेष्वपि पूर्वोक्तं सङ्गच्छते । वस्तुतो यदीश्वरासद्भावस्तदा तत्प्रोक्तग्रन्थाभावोऽप्यस्ति ॥

पुस्तकानां स्वतःप्रमाणाङ्गीकारात्संसारे बहवो भयङ्करा अत्याचाराः संपन्नाः । बाइबिलस्य स्वतःप्रमाणाङ्गीकरणेनैव गेलेलियो (Galelio) दशा तादृशी दुर्गतिपूर्णा जाता । बहवो वैज्ञानिकाश्च मरणं प्राप्ताः । मुस्लिमविजेतारः स्वं कुरानग्रन्थं स्वतःप्रमाणं मानयन्तः शताधिक-तत्त्ववेदिनां सहस्रवर्षपरिश्रमफलभूतां सिकन्दरिया-पुस्तकालये सुरक्षितां ग्रन्थराशिं ददाहिरे । ग्रन्थस्य स्वतःप्रमाणाङ्गीकार एवासहिष्णुता कारणमास्ति । अत एव पृथिव्यां बहुकालान्मनुष्येषु धर्मान्धता-मिथ्याविश्वासः-मानसिकी दासतैव न केवलं समापातिता, प्रत्युत ज्ञानविकासनिमीलनपुरःसरं रक्तेन पृथिवीरञ्जने साहाय्यं कृतम् । स्वग्रन्थस्य स्वतःप्रमाणमन्तव्यत्वमेव परैः सह धर्मकलहो विज्ञाननाशकः ॥

अन्यच्च कस्यापि ग्रन्थस्य स्वतःप्रमाणस्वीकरणेन तद्गतविषयविश्वासेन चागामिजिज्ञासाप्रतिबन्ध एव । जिज्ञासैव संसारे महामहावैज्ञानिकाविष्कारकारणभूतास्ति । तथा च— यदि गेलेलियोमहाशयः (Galelio) बाइबिल कथनानुसारेणैव पृथिवीं चिपि-

ष्टामममानयत्तर्हि तस्य पृथिव्या वर्तुलत्वभानमपि नाभविष्यत् । यदि च केप्लर [Keplere] महाशयो बाइबिलोक्तसूर्यभ्रमणविश्वासविश्वस्त एव विरमेत्तदा पृथिवीभ्रमणस्य त्रीणि प्रकाराणि कथं वाविष्कुर्यात् । न्यूटनश्च (Newton) ग्रन्थस्वतःप्रमाणेन कथं गुरुत्वाकर्षणस्याशयो जानातिस्म । आइनस्टाइन [Enstein] महाशयोऽपि तत्संशोधकसापेक्षताया महत्सिद्धान्ताविष्करणं कथं च कर्तुं शक्नुयात् । वस्तुतः संसारे विद्यायाः सभ्यतायाश्च या उन्नतिर्दृश्यते, सातु ग्रन्थस्य (ग्रन्थानां वा) स्वतःप्रमाणानङ्गीकारादेव । प्रत्यक्षसिद्धस्तु नच व्यवहारकाले स्वधर्मग्रन्थप्रमाणतावश्यः कोऽपि मनुष्यः । अतो निर्विवादमेतद्यद् धर्मग्रन्थाः तत्तत्सामयिकरूढ्या अन्धविश्वासेनाज्ञानेन च संवलिताः, तत्सामयिक-धार्मिक-सामाजिक-राजनैतिकव्यवहारपरिपोषका भवन्ति । सहस्राब्दीनामनन्तरं तानि मृतकथानकानि मृतशिरःसु क्षेप्तव्यानि । सेन्टपाल [St. Paul] समये स्त्रीणां प्रावृतशिरस्कत्वं सभ्यतानिदर्शकमासीत्, इदानीं क्व तत् ।

ग्रन्थानां स्वतःप्रमाणाङ्गीकारकरणाय पूर्वं तत्कर्तॄणां सार्वज्ञत्वं मन्तव्यं, तदपि सर्वदेश-काल-वस्तुसम्बन्धेषु । यद्यस्मद् धार्मिकग्रन्थकर्तारः सर्वज्ञा अस्मदुत्पत्तिपूर्वं सहस्रवर्षेभ्योऽस्मत्क्रियमाण-शुभाशुभकर्म जानन्त आसन्नेव, तर्हि वयं तत्कार्यकरणे परवशा एव, अन्यथा सर्वज्ञताविरोधः । तथा सति तादृशसर्वज्ञहस्तेषु वयं कटपुत्तलिकामात्रा एव । कटपुत्तलिकायास्तु स्वशुभाशुभकर्मविचारणे करणे च कोऽधिकारः । अतो धर्मग्रन्थानि धर्मनियमानि निष्प्रयोजनान्येव ॥

परिशुद्ध्यर्थं मुक्त्यर्थं च कर्मकरणे मनुष्यस्य स्वातन्त्र्यमावश्यकं कर्मकरणस्वातन्त्र्याय बुद्धेःस्वातन्त्र्यं, बुद्धिस्वातन्त्र्यर्थं च ग्रन्थापारतन्त्र्यमावश्यकम् । यतो हि बुद्धिरेव ग्रन्थाङ्गीकरणे प्रमाणा, न ग्रन्थस्य बुद्धिप्रमाणकरणे शक्तिरिति ॥

४— जीवनप्रवाहस्तु वर्तमानशरीरेण पूर्वोत्तरभावि ॥

बालस्योत्पत्त्या सहैव तस्य जीवनारम्भोऽपि भवति । बालस्तु शरीर-मनःसमुदाय एव । शरीरमपि नैकं, प्रत्युतासंख्याणुसमुदायः । अणवस्तु प्रतिक्षणं विपरिणमन्ते । तत्स्थाने तत्समा द्वितीयाणव उत्पद्यन्ते । एवं क्षणात्क्षणं शरीरमपि परिणामं याति ।

बहुवर्षानन्तरं वस्तुतस्तदेव शरीरं न भवति । किन्तु सदृशाणुभिः परिवर्तितमतदपि तदेव भवति । तेन प्रतिपद्यतेऽयमेव स इति । अयमेव प्रकारो मनस्यपि घटते । केवलं भेदस्त्वेतावानेव यन्मनः सूक्ष्मस्तस्य परिवर्तनं पूर्वापरभेदोऽपि सूक्ष्म एव । तस्मात्तस्य भेदभानस्य दुष्करत्वम् । आत्मामनसोरेकत्वेऽऽत्मा प्रतिक्षणं परिवर्तत इति पूर्वत्र कथितमेव ॥

जीवनप्रवाहस्य शरीरेण पूर्वं-अन्तरभावाङ्गीङ्कारेण क्षुब्धतरमपि मनुष्यमुच्चतराशादाने प्रभवामः । लोकस्तु स्वमानोन्नत्यर्थं परमानमवलोक्य कार्यभूमाववतरति । जीवनप्रवाहस्य निरन्तरत्वेन तत्तत्कार्यसाधनान्यवाप्य सिद्धहस्तो भवति लोकः ।

बुद्धस्य शिक्षा-दर्शनञ्च कथितसिद्धान्तचतुष्टयावलम्बितमस्ति । प्रथमसिद्धान्तत्रयं सांसारिकान्यधर्मतो बौद्धधर्मं पृथक्करोति । जडवादे बौद्धधर्मे च साम्यमस्ति पूर्वसिद्धान्तानाम् । चतुर्थः सिद्धान्तः [जीवनप्रवाहः पूर्वं पश्चादपि शरीरसहगामीति] जडवादतो भेदको बौद्धधर्मस्य । वैशिष्ट्यं चास्य यद्व्यक्तीनां भविष्यमाशामयं दर्शयति । येन विना कस्याप्यादर्शवादस्य कार्यरूपपरिणतिर्दुष्करैव ।

चतुर्षु सिद्धान्तेषु प्रथमास्त्रयो मनुष्यं त्रिविधपारतन्त्र्येण मोचयन्ति, चतुर्थस्तु भविष्ये आशामयं ददाति, शील-सदाचारस्याङ्कुरारोपणं च करोति । चतुर्णां सिद्धान्तानां यत्रैकत्र संमेलनं स्यात्स बौद्धधर्म इति नमो बुद्धाय इति शम् ॥



## संस्कृतभाषा राष्ट्रभाषा कथं स्यात्

(ले० प्रेमनाथ हण्डू शास्त्री)

भारतीभक्ता भारतपुङ्गवा विद्वांसः !

संस्कृतभाषाविषयेऽतीतगौरवप्रशंसनं वर्णनं वा नास्ति सांप्रतमसाम्प्रतम् । नैतदविदितं यथार्थविदां विदुषां यत्- कस्मिंश्चिदपि राष्ट्रे भूतायां वर्तमानायां-भविष्यमाणायां च राष्ट्रभाषायां का नाम योग्यता भवेत्, मन्मत्यां तु—

(१) सा लोकप्रिया स्यात्,

(२) तत्तद्युगानुसरणसमुचिता शक्तिस्तस्यां स्यात्,

(३) प्रखरमतयो मतिमन्तस्तस्या लेखकाः स्युः ।

लोकप्रियतायाः प्रयोजनं- तदर्थं त्यागशक्तिर्लोकानां, त्रिविधेनैव कर्मणा प्रायशो लोका स्तद्धितपराः भवेयुः, । द्वितीयांशस्य प्रयोजनं, युगानुरूपः संस्कारस्तस्याः क्रियेत । तृतीयांशस्य प्रयोजनं, सुकवयः-सुलेखकाः-सुसम्पादकाः सुसमालोचकाश्च तस्यां स्युः । प्रथमांशस्तावत्संस्कृतस्य राष्ट्रभाषासम्भवे निभाल्यते

(१) को नाम भारतीयो वचसापि सान्त्वयति वराकीमिमाम्, संस्कृतमधीयानाः स्वोदरपूर्त्तिमपि पारयितुं कुत्र प्रेद्यन्ते प्रभवः, संस्कृतप्रियम्मन्याः कामुदारतां पेशलहस्ततां सहानुभूतिं वाऽद्यावधि अस्यै प्रादर्शयन् प्रदर्शयन्ति वा, केवलं गिरिगह्वरेषु प्रच्छन्नकुटीषु च सभाधिवेशनैरतीतगौरवं स्मारं २ शोकोच्छ्वासपूर्वकं मनोग्लानिं नाटयित्वा स्वमनोविनोदं कुर्वते, अन्ये च समयं व्यत्यापयन्ति नान्यत्किञ्चिदपि ।

(२) द्वितीयांशविषये तु—

कदाचित्किल संस्कृतभाषाऽऽर्य्यावर्ते एव न प्रत्युत विश्वस्मिन्नपि विश्वे निरङ्कुशं प्रचलिता बभूव, तदानीन्तने युगेऽस्याः प्रसृत्यनुरूपाशक्तिर्निर्बाधाऽऽसीत्- इति तावन्मन्यामहे । परं-परिवर्त्तिनि संसारेऽस्मिन्-किमस्ति तत्, यत्परिवृतिं नैयात् । अतः पुरा प्रचलितस्य संस्कृतस्य अद्यत्वे प्रचलनं तावद् दुःशकमेव न, प्रत्युतासम्भवमपि । यावत्सांप्रतिकयुगानुरूपः संस्कारः पुनर्नास्य क्रियेत, यतः क्रियात्मिका दृष्टिरद्यावधि नाकृष्टाऽभवत्कस्यापि, नचाद्य प्रभृति-अपि सम्भवतो भविष्यति । उदाहरणरूपेण तावत् प्रेद्यताम्-यदि कश्चन संस्कृतमध्येतुमिच्छति, तर्हि काधिरोहणी विद्यते तस्मै वर्तमानसंस्कृतसाहित्ये । अत्र नास्ति कश्चन सन्देहावकाशो यत्-समस्तोपलभ्यमानसाहित्येषु संस्कृतसाहित्यमेव प्रथमां श्रेणिमध्यासितुमर्हति, एतदपि निश्चप्रचमेव,क्रामिकग्रन्थानामभावो विद्यते साम्प्रतं संस्कृतेऽस्मिन्साहित्ये । यथान्यासु भाषासु बालः क्रमिकग्रन्थानुशीलनं कुर्वन् शनैः २ उपर्युपरि-अधिरोहणे सौकर्य्यं प्राप्तुमलम्, न तथा संस्कृते एकांशेनापि, तथा च-यथेतरभाषासु नानाविषयाणां विकासो वीक्ष्यते, तादृगीषदपि दृष्टिपथं नावतरति वराकेऽस्मिन् संस्कृते । अन्यच्च यथा सांप्रतिकप्रचलितभाषासु यथेच्छं व्यवहर्त्तुं शक्यते, तथाविधो गन्धोऽपि

आघ्रातुं न पार्य्यतेऽस्मिन् ।

एवं च-क्रमिकग्रन्थाभावः-विषयाविकासः व्यवहरणाक्षमता च, एते त्रयो दोषा न निष्कासिता विद्यन्तेऽस्मात् । अयं दोषः केषां शिरःसु पातनार्ह इति चेद्विमृश्येत, तर्हि मन्मत्या- भारतीयार्य्यजनतायां-आर्य्यधनिकेषु-अधिकारिषु चेति ।

भारतीयानां नास्मिन्हार्दो भावः । धनिनो गृहमेधिनः साहाय्यं न ददति संस्कृताध्यायिभ्यः संस्कृतपण्डितेभ्यश्च । अपिच घृणामेव प्रदर्शयन्ति । 'पण्डितेषु दारिद्र्यं, इति रूढिस्तु केवलं संस्कृतपण्डितेष्वारूढा । अधिकारिणश्च वज्रहृदया ग्लानिमिव प्रदर्शयन्ति । एवं विदुषश्च सोच्छ्वासं मौनमाकलयन्ति हन्त !!! अपिच 'विदुषां वैरवृत्तिः, इति महाजनोक्तिः सुस्पष्टैव संस्कृतविदुषंमन्येषु-एव चरितार्था, येनाप्यस्य पूर्वोक्ता समस्या पूर्तिं नैति ।

एतेनैव तृतीयोंऽशः (सुलेखकाः सुकवयः सुसम्पादकाः सुसमालोचकाः च तस्यां स्युः) अपि विशकलितः ।

सारांशेन नास्ति योग्यता साम्प्रतं संस्कृतभाषायाः पूर्वं योग्याया अपि राष्ट्रभाषा सम्भवे स्मृत्यापि, यदि जगन्नियन्ता विधातैवेच्छेत् तर्हि-अस्ति सम्भवः, नान्यथा ।

समुचितोऽयमवसरोऽस्ति भारते राष्ट्रभाषानिर्मापणे, तत्र सत्यमस्ति-अधिकारः साम्प्रतं संस्कृतपुत्र्या हिन्दीभाषायाः, यदि विदुषां दृष्टिस्तत्रैवाकर्षिता भवेत्पूर्णतया, बद्धकटयश्च भवेयुः सर्वे तत्र, तर्हि-अपि संस्कृतस्य प्रियं स्यात् । इति ॥



## अन्धं जगत्

( ले० 'निरञ्जन हुण्डू, 'ए, गणेशघाठ श्रीनगर काश्मीर. )

भाग (१)

अयि गीर्वाणवाणीप्रणयिनः सहृदयमहाभागाः । यूयं जानीथैव यदद्यत्वे बहव अज्ञानेनावृताः शास्त्राणां याथार्थ्यमजानन्तो जना मिथ्याप्रयत्नोत्पादनैः शास्त्रान् शास्त्रकारानपि च निन्दन्तीति । तथाहि—

प्रश्न०— 'गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुः साक्षान्महेश्वरः' इत्यस्मिन् विषये नहि गुरुर्ब्रह्मविष्णुरुद्राणां सादृश्यमनुभजतीति यत् केचनजनाः कथयन्ति । तत् सर्वथाप्ययुक्तम् । तथाहि—

उत्तरं-रुद्रस्तु संहारकारकः, विष्णुः पालकः, ब्रह्मा च सृष्ट्युत्पादकः,

इति सर्वसिद्धमेतत् । इत्थमेव गुरुरपि 'वर्णानां ब्राह्मणो गुरुः' इत्युक्त्या ब्राह्मणोऽपि शिष्यस्य (यजमानस्य वा) अज्ञाननिवारणात् रुद्रस्य सादृश्यमावहति । रुद्रस्य सृष्टिसंहारकत्वात् गुरोरज्ञानसंहारकत्वात् सादृश्यमिति भावः । अज्ञाननिवारणानन्तरं तस्मै एव शिष्याय (यजमानाय वा) ज्ञानप्रदानत्वेन ब्राह्मणो ब्रह्मणः साम्यमधिगच्छति । ब्रह्मणः सृष्ट्युत्पादकत्वात्, ब्राह्मणस्य च ज्ञानोत्पादकत्वात् सादृश्यमिति भावः । ज्ञानप्रदानान्तरं ज्ञानपोषकत्वात् गुरुर्विष्णोरौपम्यं गच्छति । सृष्टिपोषकत्वात् विष्णोर्ज्ञानपोषकत्वाच्च गुरोः साम्यमिति ब्रह्मविष्णुरुद्राणां सृष्ट्युत्पादनपोषणसंहारकत्वात् ब्राह्मणस्य च ज्ञानोत्पादनपोषण-अज्ञाननाशकत्वात् साम्यमिति । उक्तमपि च—

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशिलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरुवे नमः ॥ १ ॥

भाग(२)

प्रश्न- 'इश्वरो हि 'अज' इति नाम्नाऽभिधीयते । अर्थात्-कदाचित् कथंचित् कुत्रचिदपि न जायत इत्यजः । अज-शब्दाभिधेयस्य ईश्वरस्याजन्मत्वादवताराऽभावस्तु सिद्ध एव' इत्याक्षेपकारिणामज्ञानेनावृतानां केषांचित् जनानामर्थे श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेनोक्तमधोलिखितं श्लोकमेव पर्याप्तम्—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ४—६ ॥

अर्थादजः सन्नपि, 'अव्ययात्मा, अव्ययः-नाशनक्रियाया अविषय आत्मा-स्वभावो यस्य सोऽव्ययात्मा नित्यः, ब्रह्मादीनामन्येषां च भूतानामहमेवेश्वरो नियन्ता, एवमजोऽप्यव्ययात्मापीश्वरोऽपि च सन्नहं निर्विकार एव परमात्मा 'प्रकृतिं, प्रकर्षेण कृतिः सृष्ट्यादिक्रिया यस्याः सकाशान्मम सा प्रकृतिः त्रिगुणात्मिका दैवी-माया, तयात्ममायया सोऽहमजत्वादि लक्षणः सम्भवामि । कदा किमर्थं च सम्भवामीति प्रश्ने तु—

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥' इति ।

काश्मीरदेशे विमले विशाले
निःशेष-विद्वद्वरभासमाने ।
सुसंस्कृतस्योन्नतिहेतुभूता
'श्रीः' पत्रिका नन्दतु नित्यमेव ॥ १ ॥

इमां सकृत्सम्यगधीत्य पूरुषः
गीर्वाणवाण्यां लभते प्रवीणताम् ।
कथासु वैचित्र्यमथापि शिक्षते
मानं सदा तस्य सभासु विद्यते ॥ २ ॥

श्रियं[1] यथा श्रीः[2] कुलभूषणेन[3]
प्राप्नोति चैषापि सदा तथैव ।
इति श्रियाः[4] साम्यमियं वहन्ती
भूयाज्जनानां जयदा सदैव ॥ ३ ॥

१ श्रियं–कान्ति । २ श्रीः–लक्ष्मीः, श्रीः–पत्रिका च । ३ कुलभूषणेन–स्वकुलोदितेन रत्नेणत्यर्थः, (लक्ष्म्याः समुद्रोत्पन्नत्वात् रत्नस्य च सुमुद्रोत्पन्नत्वात् कुलस्याभिन्नत्वम् ) । पक्षे कुलभूषणनाम्ना पं० डा० महाशयेन । ४ श्रियाः–लक्ष्म्याः ।

श्रियं यदि प्रार्थयत वृथाश्रमः
काऽचञ्चलैषा[5] क्व च चञ्चला श्रीः[6] ।
इति स्वयं साधु विचिन्त्य सेवने
यत्नं सदास्याः कुरुताथ यूयम् ॥ ४ ॥

५ एषा–श्रीःपत्रिका । ६ श्रीः–लक्ष्मीः ।

बुद्धिं बुद्धिमतां तनोति सततं या वै किलोच्चारणात्
छात्राणामपि पाटवं जनयति या चानुवादादिषु ।
सा 'श्री' रेव श्रियै भवत्वतितरां गीर्वाणगीःप्रेमिणाम्
इत्येवं तु निरञ्जनं पशुपतिं "नीरञ्जनो[7]" याचते ॥ ५ ॥

७ लेखकनाम । इति शम् ।

---

## सुरभारती विजयतेतराम् ।

(ले० द्वारकानाथ शर्मा रघुनाथकालेज जम्बू)

रघुनाथ दीनबन्धो ! दीनान् दयालु पाहि ।
त्वयि सक्तमानसानां भीतिर्न भूतलेऽस्मिन् ॥ १ ॥
हरिसिंह-कर्मवीरः श्रीकर्ण-वीरयुक्तो ।

जीयात् सुदीर्घकालं कश्मीरजम्बुभर्ता ॥ २ ॥
राष्ट्रे सुनीतिरास्तां सुखितां प्रजाः प्रयान्तु ।
राजन्वती समृद्ध्या सर्वातिशायिनी स्यात् ॥ ३ ॥
सुरभारती-महत्त्वं गीतं भवेत् समन्तात् ।
शो भावि भातु चास्या कमनीयसद्गुणायाः ॥ ४ ॥
चान्द्रीं श्रियं हरन्त्याः सन्मानमावहन्त्याः ।
कार्यालयेषु चास्या नहि जातु वारणं स्यात् ॥ ५ ॥
एषाऽस्तु सज्जनानां हृदये विराजमाना ।
सर्वे समुच्चरन्तु सुरभारतीप्रकर्षम् ॥ ६ ॥
वितताऽत्र नूतना या भाषा समस्तदेशे ।
अधुनैव सा प्रयातु ऐंगलण्ड-फ्राँसदेशे ॥ ७ ॥
देशे तु चास्मदीये तस्याः पुरातनायाः ।
वाण्याश्च बोभवीतु स्थानं महत्त्वपूर्णम् ॥ ८ ॥



## संस्कृतपत्त्राणामनभिवृद्धौ कारणनिर्देशः

निबन्धा- श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः ।
( स० ध० कालेजोपाध्यायः, मुलतानसिटी )

तत्तद्भाषायाः प्रसारे यथा समाचारपत्त्राणि † साधनं, न तथाऽन्यत् किमपि दृग्गोचरीचरी क्रियते ‡, एतदर्थमेव तत्तद्भाषाहितैषिणो यत्र तत्र तत्तद्भाषिकसमाचारपत्त्राणि प्रकाशयन्ति । वयमत्र भाषान्तराणि उपेक्ष्य स्वाभीष्टां गीर्वाणवाणीमेव आश्रयामः । गीर्व्वाणवाणीप्रसाराय तद्धितेच्छुभिस्तत्समाचारपत्त्राणि प्रकाश्यन्ते । ईदृशे संस्कृतपत्त्राणां कृते महाभयावहेऽपि काले ये महाभागाः स्वकीयस्य धनस्य समयस्य च व्ययमपरिगणय्य तत्प्रकाशनाय समुद्यच्छन्ते ‡‡; ते खलु शतमुखेन स्तुत्याः।

एवं सत्यपि ते स्वकीयपत्त्राणां कृते सर्व्वविधप्रबन्धमकुर्व्वाणा भविष्यति तत्प्रकाशने क्षतिमनुभूय विरतोत्साहास्तत्पत्त्रप-

† पत्त्रशब्दो द्वि-तकारवान् भवति, एक-तकारवाँस्तु अशुद्धो भवति, परं मुद्रकाः प्रमादादेक-तकारं मुद्रयन्ति । ‡ गोचरीचरीक्रियते, यङ्लुगन्तस्य कर्मणि लटि । ‡‡ उद्यच्छन्ते-अत्र यम्-धातुस्तस्य छः ।

काशनं स्थगयन्ति । १९२१ वैक्रमाब्दः संस्कृतपत्त्राणामाविर्भावस्य द्वितीयः कालः । इतः प्रथमकालो-यस्मिन् विद्योदयसहृदयामञ्जुभाषिणीशारदा-संस्कृतरत्नाकर-संस्कृतचन्द्रिका-सूनृतवादिनी-उषामित्रगोष्ठी-सूक्तिसुधा, सद्धर्म्मांऽऽर्यप्रभा-विद्वत्कला-विज्ञानचिन्तामणि-काशीविद्यासुधानिधि-बहुश्रुतप्रभृतिपत्त्राणि आसामासुः-स कालः पर्य्याप्ताऽन्तरत्वादुपेदयते ।

अस्मिन् द्वितीये काले संस्कृतसाहित्यपरिषत्-कलकत्ता । सुप्रभातम्-काशी । सूर्योदयः-काशी । सहस्रांशुः-काशी । उद्योतः-लवपुरम् । ब्राह्मणमहासम्मेलनम्-काशी । अमरभारती-अमृतसरः । संस्कृतम्-अयोध्या । पीयूषपत्रिका-नडियाद । श्रीः-श्रीनगरम् । संस्कृतरत्नाकरः-जयपुरम् । अमरभारती-काशी । वल्लरी-काशी । कालिन्दी-आगरा । मधुरवाणी-बेलगाम । मञ्जूषा-कलकत्ता । पद्यवाणी-कलकत्ता । उद्यानपत्रिका-मद्रास । श्रीमन्महाराजपत्रिका-मैसूर । मीमांसाप्रकाश-पूना । ज्योतिष्मती-काशी । एतदादिकानि एकविंशतिपत्त्राणि प्रकाशितानि । द्वाविंशतितमं वाराणसेयं ✢ पात्त्रिकं 'वाङ्मयम्' गर्भे आगतमपि गर्भस्राववशाद् व्यभिचरितसत्तात्मकमभवत् । अन्याऽपि चैका त्रैमासिकी पत्त्रिका कतिपयदिवसोत्तरं गोलाबाज़ार (गोरखपुर) तः प्रकाशयिष्यमाणा वर्त्तते-इत्यस्मत्पार्श्वे लेखार्थमागततत्प्रार्थनापत्त्रेण प्रतीयते । अन्यान्यपि संस्कृतपत्त्राणि स्युः कदाचिद्, यान्यस्माकं दृग्गोचरे नाऽऽपतितानि स्युः । परमद्य एषु किं सर्व्वाणि पत्त्राणि जीवन्ति? ।

एषु उद्योतः-सहस्रांशु-ब्राह्मणमहासम्मेलनाऽमरभारती (अमृतसर) पीयूषपत्त्रिका-कालिन्दीप्रभृतिपत्त्राणि सर्व्वथा लुप्तानि । अमरभारती (काशी) वल्लरीप्रभृतिपत्त्राणामदर्शनेन तेषामपि स्थगनं विश्वस्यते । मञ्जूषा-पद्यवाणी-मीमांसाप्रकाश-संस्कृतसाहित्यपरिषदुद्यानपत्त्रिकादिविषयेऽस्माकमसंस्तव एव । अधुना विजानीयुर्विद्वत्पाठका यद्-अङ्गुलिगणनीयानि पत्त्राण्यत्राऽधुना जाग्रति ✣ । तेष्वपि एकेषां न साधीयसी व्यवस्था । किमत्र कारणं, कथं वा पत्त्राणामेवमनभिवृद्धिरिति स्वभावतो विजिज्ञासेरन् संस्कृतहितैषिणः । वयमस्मिन्सम्बन्धे सङ्क्षिप्तान् स्वविचारान् 'श्री'

✢ वाराणसेयम, नद्यादित्वाड्ढक् । ✣ जाग्रति, बहुवचनेऽभ्यस्तत्वाद् झस्याऽत् ।

पाठकानां समक्षं समुपस्थापयामः ।

एतन्तु दुराशामात्रं यत्-संस्कृतज्ञानां पार्श्वे परस्सहस्राणां रूप्यकाणां समाचारपत्त्रकृते मूलधनं स्यात् । तथापि प्राग् न्यूनान्न्यूनम् एकसहस्रमितं धनं संस्कृतपत्त्रप्रचिचालयिषुभिः संग्राह्यं स्यात् । अन्यथा पत्त्रस्य प्रचारो व्यभिचरेत् । वयं पश्यामः, केचित् पत्त्रप्रचालका द्वित्रमासप्रकाशनपर्य्याप्तं धनमेकत्रीकृत्य पत्त्रप्रचारोद्घोषणां कुर्व्वन्ति । ग्राहकाणामल्पतया ततो धनसङ्ग्रहाऽभावे पत्त्रं स्थगितीकुर्वन्ति । ततः पुनर्धन-संग्रहे सम्पन्ने पुनः पत्त्रं प्रकाशयन्ति । पुनस्तदस्ततायां तत्कारणजिज्ञासुग्राहकवृन्द-प्रेषितपत्त्राणामुत्तरमपि न ददति । एवं सति ग्राहकाणां विश्वासो विलीयते । ततश्च तादृग्विधं पत्त्रं कदापि स्थिरमूलं न जायते । अत्र अवश्यमवधानीयं पत्त्रसञ्चालकैः ।

अपर उपायो भवति पत्त्राऽभिवृद्धौ ग्राहकाणामभिवृद्धिः। † ग्राहकाणां परितोषणाय यानि साधनानि अलं स्युस्तेषामवलम्बनमवश्यं कार्य्यम्। यस्य प्रसिद्धपत्त्रस्य ग्राहकसङ्ख्या भूयिष्ठा स्यात्, तस्य तत्कारणाऽध्ययनं कार्यम्, यत्-कथममुष्य पत्त्रस्य एतावन्तो ग्राहकाः। तथात्वं स्वपत्त्राभिवृद्धयेऽपि ऊरीकार्य्यम्।

अस्माभिर्ग्राहकाणां विषये योऽनुभवः कृतः; तं पाठकानां पुरः समुपस्थापयामः । अस्मिन्न कोऽपि सन्देहसन्दोहो यत्-प्राक् तत्तद्भाषिकपत्त्राणां ग्राहका अल्पा भवन्ति । अद्यत्वे यद्यपि आङ्गलभाषाया उर्दुभाषाया वा पत्त्राणां बाहुल्यम्, तदीयग्राहकाणां भूयिष्ठता च; तथापि उपक्रमे एव तत्पत्त्राणामपि ग्राहका ‡ अल्पेऽभवन् । प्रत्युत बहवस्तद्द्वेषिणस्तन्मार्गे प्रत्यूहव्यूहपातका अभूवन् । परं 'विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति' इयमुक्तिर्येनाऽनुकृता, सफलतादेवी तदग्रे हस्तौ संयोज्य तिष्ठति । तस्यैवेदं फलं यद्-अद्यत्वे आङ्गलोर्दुभाषिकपत्त्राणां बहवो ग्राहकाः सन्ति । केचित्तु तत्र ईदृशा ग्राहका उपलभ्यन्ते, यैस्तत्समाचारपत्त्रपठनं वेदाध्ययनकल्पं मन्यते । केचिच्च तु तत्रेदृशा ग्राहका उपलभ्यन्ते, ते यावद् आङ्गलोर्दुसमाचारपत्त्रं पठितुं न लभेरन्; तावत् तेषां भुक्तमपि भक्तं ‡ न जीर्य्यति।

† ग्राहकाणां परितोषणाय, उभयत्र विहितव्यवधानादणकारः ।
‡ अल्पे-'प्रथमचरमे' ति सर्वनामता । ‡ भक्तम्-अन्नमित्यर्थः ।

एवं हिन्दीभाषिकपत्त्राणामपि प्रारम्भे ईदृशी दशा समभवत । परमधुना बहूनि हिन्दीपत्त्राणि स्थिरमूलानि भूयिष्ठग्राहकवन्ति च सन्ति । ततो हिन्दीपत्त्राणामभ्युन्नतिं वीक्ष्य संस्कृतपत्त्रप्रचिकाशयिषूणामपि इतः प्रणिधानं प्राप्तम् । परं प्रागेव तद्विषये उपायाद्यचिन्तनेन ग्राहकाल्पत्वात् तेषामुत्साहभङ्गे जाते तैस्तानि पत्त्राणि स्थगितीक्रियन्ते । परं प्राग् यथोक्तम्-एष संस्कृतपत्त्राणामारम्भकालः, अथवा एतदेव कथ्यतां यत्-शैशवकालः । शिशुः प्राक् पितुरेव धनव्ययं कारयति । परस्तादेव यौवनमुपसन्नः सन् स्वाऽर्ज्जितधनाऽर्पणेन पितरं † सुखाकरोति । तर्हि प्राक् संस्कृतपत्त्रेषु हानिः सोढव्यैव भवेत् । हानिं सोढ्वापि ये धैर्य्यधारणपराः सन्तः प्रारब्धकार्य्ये भग्नोत्साहा न स्युस्ते एव साफल्यमपि अश्नुवीरन्-इति प्राकृतिकोऽस्ति नियमः । तथापि तदर्थं पत्त्रप्रचालकैर्ग्राहकवृद्ध्यर्थमपेक्षिता निम्नोपाया अवश्यमाश्रयणीयाः । तेऽमी—

पत्त्रं सदा नियततिथौ प्रकाश्य नियतायामेव तिथौ ग्राहककरपर्य्यन्तं प्रापणीयम् । कामं भवत्पत्त्रं साप्ताहिकं न स्यात् पाक्षिकं स्यात्; पाक्षिकं न स्याद् मासिकं स्याद्; मासिकं न स्याद्; त्रैमासिकं स्यात्; परं तद् नियततिथावेव प्रकाशनीयम् । अस्मिन् नियमे उपेक्षिते सति तत्पत्त्रानुरागिणोऽपि विरज्यन्ति तस्मात् पत्त्रात् ।

अन्यानि कारणानीमानि यत्-कतिचित् पत्त्राणि बहुमूल्यान्यपि आकारप्रकारे एतावल्लघूनि भवन्ति, यत्-ततोऽपि द्विगुणाकाराणि सूचीपत्त्राणि अमूल्यं वितीर्य्यमाणानि दृष्ट्वा तच्च पत्त्रं तथैव लघ्वाकारं दृष्ट्वा तस्य कदापि च वृद्धिमदृष्ट्वा ग्राहका उदासते ‡ पत्त्रात् ।

कतिचित् पत्त्राणि च एकदेशिकविषयान् प्रस्तुत्य स्वं नीरसं कृत्वा ग्राहकाणामनास्थास्पदं भवन्ति । कतिचन च विद्यार्थ्युपयोगिषु परीक्षोपयोगिषु वा लेखेषूपेक्ष्य सर्व्वदा प्रौढपण्डितमात्रवेद्यनिबन्धानेव स्वगौरवायाऽऽधारीकृत्य + सरलताप्रेमिणामुत्साहभङ्गे कारणानि भवन्ति । प्रायः पत्त्राणां विद्यार्थिन एव ग्राहका

---

† सुखाकरोति-अत्र डाच् । ‡ उदासते । बहुवचने झस्याऽत् ।
+ प्रेमिणाम्, अत्र निमित्ताऽभावान्न दीर्घः ।

बुभूषन्ति ; तर्हि येषां तत्राधिकारः ; त एव उपेक्षयेरँश्चेत्तदौपयिक-निबन्धाऽप्रकाशनेन ; तर्हि ग्राहकसङ्ख्यायां कथं वृद्धिः स्यात् ? ।

पत्त्राणां प्रचारार्थं विविधविषया अपेक्षिता भवन्ति । स-रसानां मौलिकानामनूदितानां वा उपन्यासानाम्, हास्याऽद्भुतादि-रससंवलितललितलघ्वाख्यायिकानां वा, अद्यतनसदृशोपन्यासल-घुकथादिप्रेमिणि ग्राहकसंसारे प्रयोजनीयता भवति । परं तद-त्यन्ताभावं वीक्ष्य तदनुरागिण आरम्भिकशिक्षावन्तश्च विरहितोत्सा-हास्तत्पत्त्रनिन्दां प्रचार्य्य ग्राहकनैयून्याय कारणं भवन्ति ।

पत्त्रेषु प्रश्नोत्तरमालायाः क्रमो न निवेश्यते, पुरस्कारप्र-तियोगिता नावस्थाप्यते, परस्परलेखस्पर्द्धा न कार्य्यते, अभद्रक-र्गजानामुपयोगो विधीयते, लेख 'प्रूफ' शोधनसौष्ठवाय च न प्र-यस्यते, विद्यार्थिनां लेखाः स्थानं न लम्भ्यन्ते †, वर्त्तमानप्रगति-समालोचनायां रुचिर्नाऽवलम्ब्यते, समये समये विशिष्टाङ्का न प्र-काश्यन्ते, पत्त्रेषु ग्राहकैः सह संवादा न क्रियन्ते. चित्राणि न स्थाप्यन्ते, प्रत्यङ्कं नव्यता न स्थाप्यते, धर्म्मविषये विचारो न विधीयते, केवलं सम्पादकीयलेखभूम्ना सम्भृतानि भवन्ति पत्त्राणि, ‡ उत्साहिनां लेखकान्तराणां कृतेऽवसरो न दीयते ; तर्हि कथं प-त्त्राणामुन्नतिः स्यात् ? ।

तस्मात् पत्त्रप्रसारणार्थं सचित्रता, वेदादिशास्त्ररतिः, ग-णितेतिहासविशुद्धराजनीति–समाजनीत्यर्थशास्त्रप्रभृति विषयरतिः, भूगोलादिरुचिः, सारल्यप्रवणता शब्दाडम्बरमात्राऽगृह्यता, ज्योति-षसाहित्यादिप्रणयिता, कूटप्रश्नप्रहेलिका–समस्यापूर्त्ति–ग्रन्थसमालो-चना–दुरवापग्रन्थविज्ञापन–दुर्लभलघुकाय ग्रन्थप्रकाशनरुचिश्च एत-दादिग्राहकतोषणोचितसामग्रीसम्भारः समाश्रयणीयः ।

अन्ते 'रत्नाकर' सम्पादकशब्दैः संस्कृतहितैषिणः प्रेर्य्य-न्ते यद्–भवद्भिर्या भाषामुपजीव्य यावज्जन्म वृत्तिः प्राप्ता, प्रतिष्ठा-ऽधिगता, यशः समर्जितम्, पूजा स्वीकृता, महोपहारा हाराश्च आसादिताः ; तस्याः संस्कृतभाषायाः सेवाबुद्ध्यापि किं संस्कृत-पत्त्राणां ग्राहकतास्वीकारो नोचितः ? अवश्यमुचितः । तदर्थं कै-श्चिद् धनं समर्प्य, अपरैः स्वयं ग्राहकीभूय, अन्यैर्ग्राहकान्तराणि

† लम्भ्यन्ते । णिजन्ताल्लभतेः कर्मणि लटि । ‡ उत्साहिनाम्, उत्साहिन् शब्दः ; अतो नात्र दीर्घप्राप्तिः ।

निष्पाद्य, इतरैः सारग्राहिलेखान् प्रेष्य × संस्कृतपत्राणां यथाशक्ति + साहाय्यं विधेयम् । आशासे श्रीमन्तः स्वकर्त्तव्यपालने पश्चात्पदा न स्युरिति निवेद्य ‡ विरम्यते पाठकानां पुनः सेवायै । शम् ।



## "मन एव मनुष्याणां कारणं बन्धमोक्षयोः"

[लेखकः- महेश्वरनाथः गणेशघाट्टीयः]

बन्धनहेतुक एवायं संसारः । अत्र सर्वे एव प्राणिनः स्वकर्मफलं भोक्तुं देहबन्धे निबद्धाः । न केवलं जङ्गमाः प्राणिन एव कर्मफलं भोक्तुमागता अपि तु केषांचिन्मते स्थावरा वृक्षादयोऽपि भोगयोनय एव । अत इह संसारे यच्चराचरं दृश्यते, सर्वं तद्बन्धे स्थितम् । सर्वे मनुष्याः स्वकर्मणा शुभाशुभानि फलानि प्राप्नुवन्ति । अत एव केचिद् धनाढ्याः सुखिनश्च दृश्यन्ते, अन्ये निर्धना दुःखिनश्च । एवमेव कीटपतंगादयाः क्षुद्रजन्तवः । अश्वराजप्रभृतयो महाकायाः सर्वेऽपि स्वकर्मानुसारेण भिन्नासु २ अवस्थासु दरीदृश्यन्ते, अतः सर्वथा बन्धाय एवायं संसारः । बन्धशब्दस्य श्रवणान्मोक्षशब्दोऽपि मनसि स्थितिं लभते । यतो हि ये कदाचिन्मुक्ता आसन् । तेषामेवेदानीं बन्धः, येषामिदानीं बन्धः, ते कदाचिन्मुक्ता अपि भविष्यन्ति । बन्धरहितानां मोक्षो मोक्षरहितानां च बन्धो न कदापि सम्भवति, अतो बन्धमोक्षौ अवश्यं भाव्यौ ।

कारणं विना कार्यं न सम्भवति, सर्वाणि घटपटादीनि कार्याणि कारणादेव जायन्ते, अतो बन्धमोक्षयोरपि कारणेन भाव्यम्, केवलमीश्वरेच्छापि बन्धमोक्षयोः कारणं न भवति, जीवानां कर्मानुसारेणैव भगवत इच्छा प्रवर्तते । केवलं प्राकृतिको नियमोऽपि बन्धमोक्षयोः कारणं न सम्भवति । एवंविधे विकल्पसमुद्रे पतितानां मानवानां समुद्धरणाय भगवता श्रीकृष्णेन सर्वसंशयानामुच्छे-

---

× प्रेष्य । अत्र उपसर्गपूर्वकत्वाल्ल्यप् । + यथाशक्ति । अव्ययीभावे सुपो लुक् । ‡ गताङ्के मल्लेखे २६ पृष्ठे-मूर्च्छायित्वा-अत्र 'मूर्छयित्वा' इति ज्ञेयम्, 'तेन नाऽकथयिष्यत्' पृ० २६ अत्र तकारो हलन्तो न स्याद् । तत्रैव 'एकस्याऽपि' इत्यशुद्धं मुद्रितम्, तत्र 'एकस्या अपि' इतीष्यते, यत्वलोपे तस्याऽसिद्धत्वात् सन्धिर्न । तत्रैव 'आसन्' इति नकारो हलन्तो न स्यात् । एवमन्यत् स्वयं ज्ञेयम् ।

दोऽकारि। उक्तं हि- मन एव मनुष्याणां कारणं बन्धमोक्षयोरिति—

महान् हि खलु मनसः प्रभावः, संसारस्य सर्वाणि कार्याणि मन आश्रित्यैव प्रवर्तन्ते, एतद् हि न क्षणमपि जीवानां पिण्डं त्यजति । भ्राम्यते हि सर्वं जगदनेन मोक्षदशायामपि जीवस्य सहायतां न त्यजति, न म्रियते न जीर्यते न वा कदापि बाल्यवार्धक्यकालेन परिभूयते, मनुष्यस्य बन्धस्य कारणमपि मन एव । पूर्वं जीवा मनसा कुकृत्यानि चिन्तयन्ति, पुनश्च वाचा वदन्ति, पश्चाच्च कर्मणा कुर्वन्ति, यत्कर्मणा कुर्वन्ति तदभिसंपद्यते, मन एव मानवान् कुकृत्येषु योजयति, मन एव सर्वाणि स्वस्वकार्येषु प्रवर्तयति, मनसा विना नेत्रे न किमपि पश्यतः, श्रोत्रे न किमप्याकर्णयतः, अत इन्द्रियजातेन यदपि क्रियते, तत्सर्वं मनसः साहाय्येनैव क्रियते–उक्तं हि न्यायाचार्यैः—

॥ अयौगपद्यज्ज्ञानान्मनसो लिङ्गम् ॥

यदि मनसः सहायतां विना इन्द्रियाणि किमपि कुर्युः, तदा युगपदेव सर्वाणि स्वानि २ कर्माणि क्रियेरन्, परं न तथा, अतो मनस एव तत्र सहायता, एकं हि मनो नैकस्मिन् कालेऽनेकानि कार्याणि कर्तुं प्रभवति, अतो मन एव सर्वकुकृत्यानां मूलकारणम्, कुकृत्यैरेव बन्धो जायते ।

मोक्षस्यापि मन एव कारणम्, मन एव सर्वाणि इन्द्रियाणि सुकृत्येषु प्रवर्तयति, सुकृत्यानां फलं तु मोक्ष एव, यदा मनः शुद्धतां याति, तदा सर्वाणि इन्द्रियाणि शोभनानि कार्याणि कुर्वन्ति, भ्रष्टे मनसि सर्वेन्द्रियग्रामः कुकृत्येषु प्रवर्तते, शुद्धे मनसि बुद्धिरपि शुद्धा जायते, शुद्धायां बुद्धौ तु मोक्षप्राप्तिरवश्यंभाव्या, तत्वज्ञानादेव मोक्षाधिगम आचार्यैः प्रतिपादितः । "बन्धहेतुरविद्यैव"— इति कणभुजामपि निर्णयः, अत एव मनो यदाविद्यां जनयति सुकृत्यानि च कारयति, तदा तु मोक्षस्य कारणं भवति, अतो बन्धमोक्षयोः कारणं मन एव ।

मुमुक्षुभिरवश्यमेव मनो वशीकरणीयम्– यदि मनो वशे न भवेत्, तर्हि सर्वमेव नष्टं, परं मनोवशीकरणं तु न सुकरम्, अर्जुनोऽपि मनोवशीकरणमसम्भवं मन्यमान आह—

चञ्चलं हि मनः कृष्ण प्रमाथिबलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरपि सुदुष्करम् ॥

परं नास्ति किमपि दुष्करं, यन्मन्त्रसाध्यं न स्यात्-भगवता श्रीकृष्णेन मनोनिग्रहस्याप्युपायोऽभिधायि,

असंशयं महाबाहो मनो दुर्निग्रहं चलम्,
अभ्यासेन तु कौन्तेय वैराग्येन च गृह्यते ॥

दृष्टं भवद्भिर्मनसोऽकाल्यप्रभावः, चराचरे जगत्यस्य प्रभुत्वम्, मनसि वशंगते सर्वं वशंवदं भवति, इदं हि 'ज्योतिषां ज्योतिरेकम्

इदं हि अस्ति— 'यस्मान्न ऋते किञ्चन कर्म क्रियते' इद ज्ञानाज्ञानयोः, बन्धमोक्षयोः कारणम्, अतोऽवश्यमेव प्रार्थनीयम् ,
"तन्मे मनः शिवसंकल्पमस्तु" ॥ इति ॥

## प्राचीनसंस्कृतपुस्तकानां संग्रहः,
### तेषां सूचीनिर्माणं च ।

ले० प्रो० जगद्धर जाडू. एम. ए. शास्त्री.

अत्रभवतो जानन्त्येव यत् कश्मीरेष्वसंख्याः कवयः समभवन् । श्रीकण्ठचरितस्य त्रयोदशे सर्गे पञ्चाशदधिकानां कविपुङ्गवानां मङ्खकविना नामनिर्देशः कृतोऽस्ति । मंखकवेः समय ईस्वीयद्वादशशतकान्नैवार्वाचीनः । तत्पूर्वमपि क्षेमेन्द्र-कल्हणप्रभृतिभिरैतिहासिकैः कविभिरनेकेषां गीर्वाणवाणीरसिकानां कवीनां लेखकानां च नामधेयानि निजानिजकृतिषु सादरं समुद्धृतानि सन्ति । येनैतत् सनिश्चयं ज्ञायते, यच्च चिरकालं काश्मीरिकैः कविभिर्देवभाषाया अपरिमिता सेवा कृतास्ति ।

यद्येवं मन्यते तर्हि तेषां कवीनां पुस्तकानि कुत्र विद्यन्ते? विनष्टप्राया एते-इति न नितरां श्रद्धेयमेतत् । यतो लिखितपुस्तक-धनं प्राणेभ्योऽपि प्रियतरमासीदस्माकं पूर्वजानाम् । विपत्स्वपि ते स्त्रीपुत्रत्राणापेक्षया स्वपितृपितामहागतस्य पुस्तकजातस्यैव रक्षणमकुर्वन् । देशत्यागेऽपि ते पुस्तकधनमेव शिरसि संधार्य; अन्यद्रव्यजातस्य महार्हगृहसामग्र्याश्चावहेलनां कृत्वा, देशात् देशान्तरं परिबभ्रमुः । मम कथनस्याभिप्रायोऽयमेव यदस्माकं पूर्वजैर्यथाशक्ति पुस्तकधनस्य रक्षायै प्रयतितम् । यदा च ते विपत्कालेषु स्वात्मना सह पुस्तकानि नेतुं नाशक्नुवन्, तदा तस्यां दशायां ते पुस्तकानि भूमौ गभीरेषु गर्तेषु निक्षिप्य देशान्तरमगच्छन् । यतः पुस्तकानि भूर्जपत्रलिखितान्यासन्, तेषां शीघ्रनाशो-

ऽप्यसंभाव्य एवासीत् । देवालयपुस्तकागारनिहितानां पुस्तकानां वह्निसाद्भावोऽस्माभिर्मन्यत एव, यतोऽनेकेषां देवालयानां विध्वंसोऽन्यधर्मावलम्बिभिर्बहुवारं कश्मीरेषु विहितः । पुस्तकालयानि च निर्दग्धानि । परं पुस्तकानां सर्वनाशो न संजातस्तदा । पुस्तकानां प्रतिलिपयोऽप्यन्यत्रवर्तन्ताऽन्येषु स्थानेषु । अतः कश्मीरेषु प्राचीनपुस्तकानां निःशेषविध्वंसो न समर्थ्यतेऽस्माभिः ।

पूर्वोक्तस्य सारांशोऽयमेव यत् कवीनां संख्या अस्मिन् देश अनल्पा समभवत्-तन्निर्मिता ग्रन्थाः विविधविषयपरायणाः संख्यातीता अविद्यन्त । तेषां पठनपाठनं कुर्वाणा अस्मत्पूर्वजाः सादरं जीवितनिर्विशेषं च तेषां रक्षणं यथाशक्ति व्यदधुः । अतः प्राचीनसंस्कृतग्रन्थानामस्तित्वमस्माभिर्न कथंचित् निराकर्तुं शक्यत अस्मिन् देशे । केवलं तेषां संचये परिसंख्याने च महान् प्रयासोऽपेक्षितोऽस्ति ॥

अपि च— क्रैस्टीयस्य नवविंशशतकस्य पंचसप्ततितमे वर्षे प्राचीनसंस्कृतपुस्तकसञ्चयार्थं बूह्लरपण्डितः शर्मण्यदेशीयोऽत्राजगाम । अपरिमितानि प्राचीनपुस्तकानि तेनास्माद्देशादात्मना सह नीतानि । तदनन्तरं काले काले अन्ये बहवो विदेशीयाः प्राचीनसंस्कृतपुस्तकसंचयरागिणः स्वात्मार्थं व्यापारार्थं वास्माद्देशात् पुस्तकानि क्रीत्वा महान्तं लाभमधिजग्मुः । अधुनाप्याङ्गलराज्यसंरक्षितानां पुस्तकालयानां कतिपये भारतीया अध्यक्षाः पुस्तकसंग्रहार्थं कश्मीरेषु गमनागमनं कुर्वन्त एव सन्ति । जागृतिमापन्नेषु केषुचित् देशीयराज्येष्वपि प्राचीनपुस्तकसंग्रहाभ्यासो दृष्टिगोचरं याति । तेषां पुस्तकागाराध्यक्षा अप्यत्रागत्य नैराश्यं न भजन्ते-अपि तु किंचिद् गृहीत्वैव प्रत्यावर्तन्ते-इति विस्तरेणालम् ।

एतत् सर्वं विचार्यात्रभवतां पण्डितप्रकाण्डानां पार्श्वे इयं विनीता प्रार्थना क्रियते—यत् यद् अद्यापि समयोऽस्त्यस्मदन्तिके यदा वयमस्मिन् नगरे गृहाद् गृहं गत्वा प्राचीनपुस्तकानां सूचीनिर्माणकार्यं समारभेमहि । अधुनापि पुस्तकानां निरवशेषता न संपन्नाऽत्र । बहूनां पण्डितप्रवीराणां गृहाणि प्राचीनपुस्तकैः संपूर्णानि सन्ति-इति वयं जानीमहे-इत्यतो न कोऽपि निराशासंभवः । केवलं यत्नोऽपेक्ष्यते । कर्तव्यमप्यस्त्येतत् अस्माकं नितराम् । कर्तव्यपरिपालनस्य भावोऽङ्कुरो वा युष्माकं हृदयेषु जागरूको भवतु ।

भवन्तः सर्वकार्यसंपादनदक्षाः, प्राचीनपुस्तकपरिसंख्याकर्मेदं दु-ष्करं भवताम् । आशास्महे बद्धपरिकरा भवन्तः कर्तव्यपालनं कुर्युः। येन भवतां चन्द्रमरीचिधवलं यशो दिगन्तान् धवलीकृत्य भविष्य-त्सन्ततेरुपकाराय उत्साहवर्धनाय च अलं भविष्यति । इति ॥

## वैदिकविवाहवयोनिर्णय-

### आक्षेपपरिहारः ।

(ले०— प्र० स्ना० धर्मदेवः सिद्धान्तालङ्कारः, विद्यावाचस्पतिः, संस्कृतधुरीणः, तर्कमनीषी, साहित्यभूषणः, कल्याणपुरम)

श्रियः १९९५ चैत्राङ्के प्रकाशिते लेखे मया श्रीदीनानाथशास्त्रिभिः प्रस्तुतानामनेकाक्षेपाणामुत्तरं ददतां त एवं प्रत्यपादि "गृह्यसूत्रविहित–चतुर्थीकर्माद्यवशिष्टविषयविमर्शोऽग्रिमे लेखे साक्षेपपरिहारं विधास्यते" इत्यादि । अत इदानीं स एव विषय उपक्रम्यते । श्रियः १९९२ चैत्राङ्के मया "बौधायन–पारस्करापस्तम्ब-जैमिनीयाद्यनेकगृह्यसूत्राणि विवाहानन्तरं त्रिरात्रं ब्रह्मचर्यं निधाय चतुर्थ्यां निशायां वरवध्वोर्मैथुनमतिस्फुटतयानुजानन्तीति" प्रतिपादितम् । मूललेखे च बहून्युदाहरणान्येतत्समर्थकान्यनेकगृह्यसूत्रेभ्यः प्रदत्तानि। किन्तु सम्पादकमहोदयेन लेखविस्तृतिभिया केवलं बौधायनगृह्यसूत्रवचनमेव प्रकाशितं । यदुद्दिश्य श्रीशास्त्रिमहोदयैः "अत्र श्रीमान् स्वप्रभावं पातयितुमिव गृह्यसूत्रकाराणां नामामात्रमेवाचष्टे, परमेकं बौधायनस्यैव वचनं निर्दिशति" इत्याक्षिप्तम् । तत्र सम्पादकमहोदयैरेव टिप्पण्याम् "पं० धर्मदेवेन बहूनामन्येषां गृह्यसूत्राणां प्रमाणानि विस्तृतान्यासन्, परं लेखस्यातिदीर्घत्वादस्माभिः सर्वाणि तानि एकं विहाय त्यक्तानि" इत्थं व्यक्तमलेखि । विषयस्यास्यात्यावश्यकत्वात्कानिचिद् गृह्यवचनान्यत्र पुनरुदाह्रियन्ते, यानि निष्पक्षपातं विचार्यमाणानि वैदिकं यौवनविवाह-पक्षं सुस्पष्टं समर्थयन्ति । तत्रापस्तम्बवचनम् 'त्रिरात्रमुभयोरधः-शय्या ब्रह्मचर्यं क्षारलवणवर्जं च' (आप० गृह्यसू० पटले ३ ख० ८ सू० ८)। (अत एवात्र सूत्रे शय्यैक्याद् दुर्वारमपि मैथुनमतिप्रयत्नेन वर्जनीयमित्येवमर्थस्तन्निषेधः इत्येतत्सूत्रव्याख्यायां सुदर्शनाचार्यः ।

जैमिनीयगृह्यसूत्रवचनम् "त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ अधः संवेशनौ असंवर्तमानौ सह शयाताम् [२० । ६] ऊर्ध्वं त्रिरात्रात् सम्भवः [२० । ७] सम्भवः- संयोगो मैथुनं वेति श्रीनिवासाध्वरीन्द्रादयः सर्वभाष्यकृतः ।

गोभिलगृह्यसूत्रे [२ । ३] "तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम् ।" [सू० १५] अत्र "ब्रह्मचर्यमिह व्यवामवर्जनमुच्यते" इति चन्द्रकान्ततर्कालङ्काराः। "ब्रह्मचारिणौ सङ्गमशून्याविति श्रीसत्यव्रतसामाश्रमिणः । अथातश्चतुर्थीकर्म [प्र० ५ कण्डिका सू० १] "......तदस्य गर्भाधानस्य पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होतव्यम् ।" वैखानसगृह्यसूत्रे "तदेवं त्रिरात्रं हविष्याशिनौ ब्रह्मचारिणौ धौतवस्त्रौ व्रतचारिणौ स्याताम् । ततोऽपरस्यां रात्रौ चतुर्थ्याम् अलङ्कृत्य......इमामनुव्रता इत्यालिङ्गिनीं मधुमान् मध्विदम् इति मैथुनं कुर्वीत । बौधायनगृह्यसूत्रे [१ प्रश्ने पञ्चमेऽध्याये ]

"उभौ जायापती व्रतचारिणौ ब्रह्मचारिणौ भवतोऽधः शयाते । चतुर्थ्यां निशायां हुते पक्वहोमे व्रतं विसृज्य दण्डमुत्थापयति, अत्रैनं वध्वै प्रयच्छति 'प्रजया त्वा संसृजामि । तं वधूः प्रतिगृह्णाति 'प्रजावती भूयासम्, इति । प्रसिद्धम् उपसंवेशनं सांख्यायनसूत्रे "त्रिरात्रं ब्रह्मचर्यं चरेयाताम् । अथ चतुर्थी कर्म । त्रिरात्रे निवृत्ते स्थालीपाकस्य जुहोति" । आश्वलायनगृह्यसूत्रे "अक्षारलवणाशिनौ ब्रह्मचारिणावलङ्कुर्वाणावधःशायिनौ स्याताम् । (८ । १०) अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रं वा" [८ । ११]

हिरण्यकेशीगृह्यसूत्रे [प्र० १ पटले ७ ख० २३] त्रिरात्रमक्षारलवणाशिनौ अधः शायिनौ ब्रह्मचारिणौ वसतः । चतुर्थ्यां अपररात्रे अग्निमुपसमाधाय प्रायश्चितपर्यन्तं कृत्वा, नव प्रायश्चितीर्जुहोति अथैनामुपयच्छति [मिथुनी भवतीति मातृदत्तादयः सर्वे भाष्यकृतः] "सं नौ मनः सं हृदयानि सं नाभिः सं त्वचः । सं त्वा कामस्य योक्त्रेण पुंजान्यविमोचनायेति । अथैनां परिष्वजति, ममानुव्रता भव सहचर्या मया भवेति, अथास्यै मुखमीप्सते । सर्वाण्युपगमनानि सम्भवन्ति भवन्तीत्यात्रेयः ।" इत्यादि ।

कौषीतकिगृह्यसूत्रे "त्रिरात्रं ब्रह्मचर्यं चरेताम्" पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमानिन्द्रश्च सूर्यश्च पुमान् संवर्ततां मयि स्वाहा ॥ इति पूर्वं गर्भकामा ।

इत्थमन्यैरप्यनेकगृह्यसूत्रवचनैश्चतुर्थीकर्म-निर्देशपूर्वकं वंरवध्वोरुभयोरपि यौवनं स्पष्टमभिव्यज्यते । केषुचिद् गृह्यसूत्रेषु विकल्परूपेण वर्षपर्यन्तं ब्रह्मचर्यमपि विहितं, तच्च विशिष्टफलमुद्दिश्येति बौधायनाश्वलायनादिवचनैर्व्यक्तं विज्ञायते । यथा बौधायनगृह्यसूत्रे—अथ यदि कामयेत श्रोत्रियं जनयेयमिति अरुन्धत्या उपस्थानान्कृत्वा त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणावासाते । चतुर्थ्यां पक्वहोम उपसंवशनं च ॥"

अथ यदि कामयेत अनूचानं जनयेयमिति द्वादशरात्रमेतद् व्रतं चरेत् ।

अथ यदि कामये ऋषिकल्पं जनयेयमिति मासमेतद् व्रतं चरेत् । अथ यदि कामयेत ऋषिं जनयेयमिति षण्मासानेतद् व्रतं चरेत् । अथ यदि कामयेत देवं जनयेयमिति संवत्सरमेतद् व्रतं चरेत् ॥ व्रतान्ते पक्वहोम उपसंवेशनं चेति सर्वत्र । तथैवाश्वलायनगृह्यसूत्रे संवत्सरं चैकं ऋषिर्जायत इति प्रतिपादितम् । एवं साधारणनियमरूपेण त्रिरात्रमेव ब्रह्मचर्ये स्थित्वा चतुर्थ्यां मैथुनादिकं गृह्यसूत्रकृद्भिरनुज्ञायत इति मदीयं कथनं सर्वथाप्युपपद्यते । विशिष्टफलमुद्दिश्याधिककालपर्यन्तं ब्रह्मचर्याचरणे कस्य नामाक्षेपः सम्भवति ? मया स्वकीये १९९२ चैत्रमासे प्रकाशिते श्रियोऽङ्के "बौधायनादिमुनिनामतः प्रसिद्धानि सर्वाण्यपि गृह्यसूत्राण्येकमत्येन विवाहानन्तरं त्रिरात्रं ब्रह्मचर्यं विधाय चतुर्थ्यां निशायां वरवध्वोर्मैथुनम् अतिस्फुटतयाऽनुजानन्ति" । इत्येवालेखि । अनुजानन्तीत्यस्यार्थमविज्ञाय श्रीदीनानाथशास्त्रिणां "यदि त्रिरात्रं ब्रह्मचर्यं विधाय चतुर्थ्यामेव निशि वरवध्वोर्मैथुनमनिवार्यमावश्यकं वाऽभविष्यदेषां मते, तर्हि कथमिमे एकवर्षकृते ब्रह्मचर्यमाज्ञपयिष्यन् अत एव स्नातकमहोदयस्य कथनं व्युदस्यते" इति श्रीशास्त्रिणामाक्षेपपूर्वको लेखस्तु सर्वथा निस्सार इति विवेचकाः सुधियः स्वयं ज्ञातुमर्हन्ति । पारस्कर-मानवाश्वलायन-गृह्यसूत्रवचनानि श्रीशा-

स्त्रिमहोदयैर्न सम्पूर्णतयोद्धृतानि किन्त्वंशत एव (यद्यपि तथा करणार्थमहं तैर्भूयो भूयो दूषितः (स्वकीयलेखेषु) ते चांशा भ्रमजनकाः। तत्र पारस्करगृह्यसूत्रवचनं श्रीशास्त्रिभिः "संवत्सरं न मिथुनमुपेयाताम् (पा. १ । ८ । २१) एतावदेवोद्धृतम् । यद्यपि तदनन्तरमेव "द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः । इत्यस्ति पाठो यश्चतुर्थ्यां मैथुनं स्वयमनुजानाति । तथैवाश्वलायनगृह्यसूत्रवचनमपि–तौ "संवत्सरं चैकं ऋषिर्जायते" (आ १ । ८ । १२) एतावदेवोद्धृतं यथापि तत्र पाठः 'अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रं वा' इति विधाय विशिष्टफलोद्देश्येन 'संवत्सरं वा एकं ऋषिर्जायते [संवत्सरं वा नियतौ स्याताम् एकः ऋषिकल्पः पुत्रो जायते] इति विकल्पसूचकं विधानम् । एतेन न चतुथ्यां मैथुननिषेधः कथमपि सिद्ध्यति । मानवगृह्यसूत्रवचनमपि 'संवत्सरं ब्रह्मचर्यं चरतः' (१ । १४। १४) इति रूपेण श्रीशास्त्रिभिरुद्धृतं, तदपि 'संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं त्रिरात्रमेकरात्रं वेति' तत्र पाठः । एवं शौनकवचनमपि स्वयं तैरुद्धृतम् 'अत ऊर्ध्वं त्रिरात्रं तौ द्वादशाहमथापि वा । शक्ति वीक्ष्य तथाब्दं वा चरतो दम्पती व्रतम् ॥ इत्यपि साधारणरूपेण त्रिरात्रब्रह्मचर्यानन्तरं मैथुनमनुजानाति । एवं च त्रिरात्रं ब्रह्मचर्यमाचर्य चतुर्थ्यां समावेशनापरपर्याय–मैथुनविधानं विवाह्यकन्याया यौवनं स्पष्टं द्योतयतीति निष्पक्षपातविचारकस्य कस्यापि मनसि संशीतिलेशः स्वल्पोऽपि न सम्भवति । पक्षपातग्रहग्रस्तानां त्वन्या कथा । इत्थं च चतुर्थीकर्म विवाहाच्चतुर्थनिशायां सम्भोगानुज्ञापकमित्यभिप्रायः सर्वेषामपि भाष्यकृतामेकमत्यम् । निदर्शनरूपेण गोभिलगृह्यभाष्ये 'अथातश्चतुर्थीकर्म' (प्र० २ ख० ५ । १) इति व्याख्यायां "चतुर्थी रात्रिकर्तव्यं गर्भाधानमाहुः" इति श्रीसत्यव्रतसामाश्रमिणः । "शेषं समावेशने जपेत्" इति बौधायनसूत्रव्याख्यायाम् "समावेशनं च वध्वा सह मैथुनार्थं शयनम्" इति सुदर्शनाचार्याः । "चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः । भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत् ॥" (बृहस्पतिस्मृतौ) इत्यादीनि वचनान्यस्मिन् विषयेऽतीव व्यक्ततया पूर्वोक्तमभिप्रायं समर्थयन्ति । अथर्ववेदस्य चतुर्दशकाण्डभाष्यभूमिकायां कौशिकसूत्राच्छ्रीसायणाचार्येण 'चतुर्थिकाकर्म' नामत उद्धृतम् । महीमूरु

(७-६-२) इति वरवध्वौ खट्वामालम्भयत्याचार्यः । आरोहयति [१४।२।३१] तत्र च तामुपवेशयति (१४।२।२३) संवेशयति च "देवा अग्रे न्यपद्यन्त पत्नीः समस्पृशन्त तन्वास्तनूभिः । सूर्येव नारि विश्वरूपा महित्वा प्रजावती पत्या संभवेह" (१४-२-३२) इति मन्त्रेण । "सं पितरावृत्विये सृजेथां माता पिता च रेतसो भवाथ। मर्य इव योषामधिरोहयैनां प्रजां कृणवाथामिह पुष्यतं रयिम्" (१४।२।३७) इति समावेशयति। तौ वस्त्रेणाच्छादयति। "अमोऽहमस्मि सा त्वं सामाहमस्पृक् त्वं द्यौरहं पृथिवी खम् । ताविह संभवाव प्रजामाजनयावौ । (१४-२-१०१) इति वधूवरौ परस्परं संगच्छेते । इत्यादिकं वचनजातं मन्त्रोक्त्युदाहरणपुरस्सरं चतुर्थ्यां निशायां मैथुनमनुजानाति । एवं प्रमाणशतके सत्यपि 'अत्रापि चतुर्थ्यापररात्रे समावेशनम्। तत्र वध्वाः स्वापनमात्रमेव न तु मैथुनम् ।...............तेन स्पष्टम् 'यच्चतुर्थ्यामपररात्रे वध्वाः शयनाभिनयमात्रमेवाभीष्टम् ।

आपस्तम्बस्य बौधायनस्यापि च मते नतु मैथुनार्थं शयनम्। तेन सुदर्शनाचार्यस्य 'समावेशनं च वध्वा सह मैथुनार्थं शयनम्' अत्रत्यं 'मैथुनार्थम्' इति पदं चिन्त्यं भ्रममूलकञ्च । तत्र वध्वा सह शयनम् इत्येव प्रकृतम् । इदन्त्वद्यत्वेऽपि सर्वेषां समक्षं क्रियते केचित् तत्करणेऽपि वधूवरयोर्लज्जां ज्ञात्वा तयोश्शिरोमात्रमेव मिथो मेलयन्तीत्याचारभेदो जातोऽद्यत्वे । इत्यादिकस्य श्रीशास्त्रिमहोदयानां लेखस्य निस्सारता स्पष्टमवगम्यते सुधीभिः । अस्य कल्पितस्याभिनयवादस्योत्तरं तु प्रदत्तमेव मया पूर्वलेख इति न पिष्टपेषणं क्रियते । इदानीं बाल्ये क्रियमाणो विवाहसंस्कार एव सर्वोऽभिनयरूप इति वक्तुं शक्यं किन्तु तेन शास्त्रोक्तविधेर्वास्तविकत्वं यथार्थत्वं वा नापलपितुं शक्यं। यत्र वधूवरौ सर्वेषां पुरतः परस्परप्रीतिसूचकान् "समञ्जन्तु विश्वेदेवाः समानो हृदयानि नौ ।      " इत्यादिकान् प्रतिज्ञामन्त्रानुच्चारयतः । यत्राद्यत्वे श्रीशास्त्रिपरमेव लेखानुसारं शास्त्रीयविधिमुल्लङ्घ्य समावेशनस्थाने केवलं तयोः (वधूवरयोः) शिरोमात्रमेव मिथो मेलयन्ति (पौराणिकपुरोहिताः) इत्याचारभेदो जातस्तथैव वास्तविकविधिमतिक्रम्य बालयोर्वरवध्वोः सहशयनस्याप्यभिनयः संजातो यौवनस्थवरवध्वोर्मैथुनार्थशयनस्थाने ।

स्वापनमात्रस्याग्निनयं यान् मन्त्रानुच्चार्य श्रीशास्त्रिमहोदयाश्चिकीर्षन्त्यभ्युपगच्छन्ति वा, तेषां मन्त्राणामर्थो मनागपि विमृश्येत चेत्तर्हि तद्वचनस्य निःसारता व्यक्तं बुध्येत। ते मन्त्रास्तु बौधायनादिसर्वगृह्यसूत्रेष्वपि प्रायः "आरोहोरुमुपधत्स्व हस्तं परिष्वज स्वजायां सुमनस्यमानः । प्रजां कृण्वाथामिह मोदमानौ दीर्घं वामायुः सविता कृणोतु ॥" (अ. १४ । २ । ३९) आरोहोरुमुपबर्हां च बाहुं परिष्वजस्व जायां सुमनस्यमानः। तस्यां पुष्यतं मिथुनौ सयोनी वह्वी प्रजां जनयन्तौ सेत ॥ 'तां पूषन् शिवतमा मेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विश्रयाति यस्यामुशन्तः प्रहरेम शेपः॥ (अ. १४ । २ । ३८) इत्यादयः प्रतिपादिता ये प्रजोत्पादनार्थं मैथुनमेव सुव्यक्तं द्योतयन्ति । तेन च श्रीशास्त्रिणां 'पूर्वोक्तभवन्निर्दिष्टसमावेशने तेषां गर्भाधानमन्त्राणां पाठः।' इति स्वयमेवात्र निर्णीतत्वमवलम्बनीयम् इति लेखोऽपि निस्सारः । एषां श्रीशास्त्रिभिरुद्धृतमन्त्राणां च भावार्थः समान एव ।

यत्तु श्रीशास्त्रिभिश्चतुर्थीकर्म पररात्रापरपर्याये ब्राह्ममुहूर्ते भवति गर्भाधानं तु रात्रौ 'किं तस्मिन् प्रातःसमये श्रीमान् वरवध्वौ मैथुनार्थमादिशति ? धन्यः श्रीमान्' इत्याद्यलेखि तत् तेषां पक्षपातग्रहग्रस्तत्वजनिताज्ञानमेव सूचयति। कथञ्चिदपि सत्यापलपनस्य प्रयत्नं वा। यतो हि चतुर्थीकर्म-विधानं न पररात्रे । यस्य व्याख्यानं ते "रात्रेः पश्चिमे यामे ब्राह्ममुहूर्ते" इति कुर्वन्ति। किन्तु 'अपररात्रे' सर्वत्रापि दरीदृश्यते अनेकगृह्यसूत्रेषु तु 'निशायाम्' ऊर्ध्वमर्धरात्रात् इत्यादिपदप्रयोगोऽपि वरीवर्ति । यथा—

आपस्तम्बगृह्यसूत्रे 'तं चतुर्थ्यां अपररात्रे उत्तराभ्यामुत्थाय .... .......... यथालिङ्गम् [अपश्यं त्वा मनसा दीध्यानां स्वायां तनूम्मृत्विये नाधमानाम् । उप मामुच्चा युवतिर्बभूयाः प्रजायां च प्रजया पुत्रकामे–अपश्यं त्वा मनसा चेकितानम् इति मन्त्राभ्याम] मिथः समीक्ष्योत्तरयाऽऽज्यशेषेण हृदयदेशौ संमृज्योत्तरास्तिस्रो जपित्वा शेषं समावेशने जपेत् । तत्र हरदत्ताचार्यभाष्यम्–शेषमनुवाकशेषम्–आरोहोरुपवर्हस्व बाहुम्..............इत्यादि समागमनकाले जपेत् । समावेशनं त्वस्मिन्नेव अपररात्रे नियमेन भवति इत्यादि ।

हिरण्यकेशिगृह्यसूत्रे चतुर्थ्याम् अपररात्रे अग्निमुपसमाधाय

प्रायश्चित्तिपयन्तं कृत्वा नव प्रायश्चित्तीर्जुहोति । १६ । २ प्राचीमुदीचीं वा संवेश्य शाययित्वा अथास्यै योनिम् अभिमृशति । अथैनामुपयच्छते अवकिरते मिथुनीभवति ॥

वैखानसगृह्यसूत्रे "ततोऽपरस्यां रात्रौ चतुर्थ्याम् ......... योनिमभिमृश्य संनाह्य इत्युपगच्छेत्...........मध्विदमिति मैथुनं कुर्वीत ।

जैमिनिगृह्यसूत्रे निशायां जायापतिकर्मण्यम् २०। ८ ऊर्ध्वम् अर्धरात्रात् संवेशनं 'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।' गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्कर स्रजो स्वाहा" इत्येतेन तृचेन (संवेशनं मैथुनम् इति श्रीनिवासाध्वरीन्द्रः) इत्थं च न परराात्रे ब्राह्ममुहूर्ते किन्तु अपररात्रे, निशायाम्, ऊर्ध्वमर्धरात्राद् वा चतुर्थीकर्मविधानं श्रीशास्त्रिभिर्भूयो भूय उपहासपूर्वकं कृतस्य मुख्याक्षेपस्य मूलमेवोच्छिनत्ति । संवेशनस्यार्थः केवलं शयनमात्रं न तु मैथुनार्थं शयनम् । तत्र च न विष्णुर्योनिं कल्पयतु...............धाता गर्भं दधातु ते। इत्यादयो मन्त्रा उच्चार्यन्ते इति तेषां लेखस्यायथार्थता वैभिर्जैमिनिगृहयसूत्रतद्भाष्यवचनैरवगम्यते। मन्ये श्रीशास्त्रिमहोदयाः कल्पितमभिनयवादं परित्यज्य 'चतुर्थीकर्म ब्राह्ममुहूर्ते भवतीति' च भ्रान्तिं विहाय सत्यग्रहणे बद्धपरिकरा भविष्यन्तीति । (अपूर्णः)



## । प्रस्तावः ।

(ले० पं० टिकालालशास्त्री लवपुरीयः)

'मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः,। कोऽयं खलु दुर्जनः? सृष्टिनिर्माणकाले हि निखिलबलशाली सच्चिदानन्दघनः 'परमात्मा, एकोऽपि बहु स्यामिति श्रुत्यनुरूपं केवलोऽप्यकेवलतां लिप्सन् नानाविधा व्यक्तीर्व्यक्तीकृतवान् । तासु चानेकासु जलेषु शशाङ्कबिम्ब इवैकोऽपि प्रतिबिम्बवशमाविर्भावयन्ननेकतामुपगतः । आधार-नामधेयपृथक्त्वेन च स्वयमपि बहिरिव गोष्ठीय-पर्वतीय-

चत्वरीयरूपाभिर्बह्वीभिः स्त्रीपुन्नपुंसक-पशुनराख्याभिराख्याभिराख्येयः समभवत् । ततश्च जनजातस्य सकलजातिराजिराजतां संविधित्सुस्तदुपभोगाश्रयं तत्कलेवरं घ्राणरसनादिभिः पञ्चज्ञानेन्द्रियैर्वाक् प्रभृतिभिः पञ्चकर्मेन्द्रियैर्मनसा च संनियोजितवान् । उत्पादयामास च गन्धरसरूपादीन् तत्तद्विषयान्, भाषणमैथुनाद्यभिधानभाञ्जि च तत्तत्कर्माणि करुणरससुधासुधाकरेण च तेन 'एतेषां स्वस्वविषयोपादाने यथाकामं दुरितनिर्वर्तिका प्रवृत्तिर्माभूत्, इतिविचिन्त्य, देवद्विजगुरुप्राज्ञ-पूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ।

इति श्री भगवद्गीतापद्यात्मकं तद्विधेयं कायिकवाचिक-तपोद्वयं वितेने । स्मृतिः— सुखदुःखादिप्रत्यक्ष-क्षमस्य मनसः परद्रव्यदारहरण-परितापन गोब्राह्मणहननादि निन्दितविधिषु विधेयतया किल्विष-प्रसूप्रवृत्तिर्नाविर्भवेत्, इति विमृश्य 'मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतन्मानसं तप उच्यते, इत्यात्मकं तदघघस्मरं मानसं तपश्च परिकल्पितवान् । जनजातौ च या व्यक्तिस्तदुपदिष्टेन शारीर-वाङ्मय-मानस-तपःस्वरूपेण पयसा सदसद्विषयोपभोगमसीपटलपरिमिलितं तत्तदिन्द्रियं परिक्षालयति, न तस्याः कदापि हृदि गर्हितकार्यपरताजनित पापलवोऽपि लभतेऽवकाशम । स्वान्त शुद्धौ च तत्प्रेर्यमाणानीन्द्रियाणि कथमलं भवेयुस्तत्तद्विरुद्धमाचरितुम, इन्द्रियाणां मनसः शरीरस्य च सकलदोषपराङ्मुखतया तत्सम्बद्धा व्यक्तिर्जगति 'सज्जन, इति व्यवह्रियते । तपःपयःप्रसिक्तायां च तस्य हृदयभूमावल्पीयसैव कालेनाङ्कुरायमाणं गुरूपदिष्टशिक्षाक्षरलक्षणमक्षरं बीजं जनयत्यचिरेणैव सच्चिदानन्दबोध-सौधसिन्धुबिन्दु-सन्दानजनितानन्य-..............माधुर्यं ज्ञानफलम् ॥ परिपक्वे च तस्मिन् स्वजनो जीवोपाधिव्याधिमवधीर्य परमात्मस्वरूपां प्रकृतिमेति ॥

तदपरा तु या व्यक्तिरुक्तपरतयं 'स्वकल्याण साधारण कारणमिति न गणयति । तत्तदिन्द्रियविषयोपभोगैकतानतया, तस्याः सांसारिकाप्रशस्य-व्यसनोपार्जित-दुरितोद्रेकावग्रहातिशुष्के मनःक्षेत्रेऽङ्कुरसम्पादनार्हताऽपि दवीयसी गुर्वादि मुखपङ्कजनिक्षिप्तस्योपदेशबीजस्य कुतो ज्ञानफल प्रकल्पनशक्तिः । अनुर्हीते

व ज्ञानप्रदीपे कथङ्कारं मनः सदनस्थाविद्याध्वान्तस्य शान्तिः । अनुपरतायां चाविद्यायां तत्प्रेरितः पुरुषोऽचिन्तयन् स्वां भाविनीमवस्थां दुष्कृत जन्य फलभोगं च, अन्यान्यप्युच्चावच्चानि समुपाचरन् दुश्चरितानि 'दुर्जनोऽयमिति लोकैर्लोके व्यवह्रियते ।

अविरतविहितदुर्नामधेय विधेय संचितानेक पापराशि शिलासमुच्चय परिव्याप्तायां च तस्य हृदयोषरभूमौ पथ्योक्तिसमवधारणादि बीजस्यानवकाशतया नोद्भवन्ति दया सत्य शान्तिलवाः । एकस्मिञ्जन्मनि समुपार्ज्य सुकृतेतरसंघं तत्फलेन दुष्कुले समुपादञ्जनि 'प्रकृतिर्दुस्त्यजा पुंसाम, सती चयोषित्प्रकृतिश्च निश्चला पुंसांसमम्येति भवान्तरेष्वपि. इत्यादिनीतिनिपुण वचनचयस्य याथार्थ्यं मुपपादयन्ति, पुनरपि हिंसा द्वेषमदादिक्रूरकर्माणि विदधन्नाददधाति सदाचारमार्ग प्रवर्तकानि हितलपितानि । अथवा-तस्यापि दोष घोषणा न समुचिता । यतो विविधपापपरिपूरितेऽणौ मनसि न सम्भवति सत्पुरुषभाषितप्रवेशः ।

प्रकृतिजनिता विचित्रा चित्रपरम्परा चाऽसंख्यातव्यमहिमेति विदितमेव संख्यावताम । यथाहि- न जहाति कदापि पीयूषपयोजुषितालवालः कुङ्कुमकेसरकर्पूरपूरपूरिताङ्कुरः पलाण्डुः स्वदौर्गन्ध्यम्, नावलोक्यते च पयः पिबन्नपि गतगरलाः करालो व्यालः । आजन्मसलिललहरीभिः परिप्लाव्यमानोपिमीनगणो न भण्यते केनापि स्वगन्धविहीनः । एवमहर्निशं क्रूरकृति कज्जल जलधिजलैः संह्नुते, दुर्मानुषमानसवासासि कथं विभाव्येरन् शिक्षकवक्त्राविर्भूतशिक्षाप्रदश्चाक्षरसंततिहरिद्राया मनोहारिणो वारिबिन्दवः । अतो दुर्जन चित्तवृत्तिर्गरिष्ठा वृत्तिरिव लोमहर्षी दुर्लङ्घ्येति सम्प्रतिपादयन्ती तात्विकी प्रतिभाति सुकवीन्द्रोक्तिः— मन्ये दुर्जन चित्ते त्यादि० इति शम् ॥

## इन्द्रप्रस्थ-नगरम् ॥

(ले० वेदान्तविद्यार्णवः पं० कृष्णदत्त भारद्वाज शास्त्री एम. ए. आचार्य. साहित्यरत्न. साहित्यालङ्कारः, वेदान्तविद्यार्णवः दिल्ली । )

इन्द्रप्रस्थं पुरं रम्यं, राजते यमुना तटे ।

यत्पुरा पाण्डुपुत्रेण, निर्मितं सत्यवादिना ॥ १ ॥
अत्राभवन्महाराजा, देश्या वैदेशिकास्तथा ।
येऽकुर्वन्विविधान्कोटान्दुर्गाण्यायतनानि च ॥ २ ॥
प्रस्तरस्तम्भ एकोऽत्र, पालीबाणीविभूषितः ।
तनोति विमलां कीर्त्तिं, भूपस्य प्रियदर्शिनः ॥ ३ ॥
अन्यश्च खण्डितप्रायः, सदैन्यमवतिष्ठते ।
दुर्मना निज भाग्यश्रीरहितः पुरुषो यथा ॥ ४ ॥
लौहस्तम्भोऽत्र चन्द्रस्य, महाराजस्य वर्तते ।
यो रेजे ध्वजरूपेण विष्णोर्विष्णुगिरौ पुरा ॥ ५ ॥
पृथ्वीराजोऽत्र चौहानः, सुखं संयोगितापतिः ।
उवास परया ऋद्ध्या, बलवाञ्शत्रुसूदनः ॥ ६ ॥
अस्य भूपस्य साम्राज्ये, कीलं सुशिथिलं ह्यभूत् ।
पुरस्याऽथाऽस्य संजातं, नामदिल्ली सहैतुकम् ॥ ७ ॥
आरेभे स्वयशःस्तभ, निर्माणंचायमेकतः ।
यत्कालकुटिलभूभिर्यवनेन समापितम ॥ ८ ॥
कुतुबुद्दीन नामा च, गौरीचरणसेवकः ।
पृथ्वीराजसमारब्धं स्तम्भं निर्मातुमैहत ॥ ९ ॥
ततस्तस्मिन्स्वरारूढे, नृपश्चाल्तमशाभिधः ।
पूरयामास तं स्तम्भं योऽद्याऽप्यत्र विराजते ॥ १० ॥
"कुतुब् कीलाट" इत्येतन्, नाम तस्य प्रसिद्धिभाक् ।
यद् दर्शकाः समायान्ति, नरा दिग्भ्यः पृथक् पृथक् ॥११॥
अलाउद्दीनभूपोऽत्र, पुरीं सीरीमकल्पयत् ।
गयासुद्दीन राजश्च, तुग्लकाबादमास्थितः ॥ १२ ॥
मुहम्मदश्च तत्सूनुरादिलाबाद मैहत ।
ततो दीनपनाहं च, शेरशाहो विनिर्ममे ॥ १३ ॥
फ़ीरोज़शाह भूपोऽत्र, रचयामास कोटकम् ।
यदद्याऽपि विभातीह, पुष्करिण्या विभूषितम् ॥ १४ ॥
कालमारभ्य पाण्डूनां, नगरीयं पुनः पुनः ।
वासिता स्थापिता किन्तु भ्रंशं याता मुहुर्मुहुः ॥ १५ ॥
मुग़ल्साम्राज्य-नेतॄणां, श्रेष्ठः शाहजहाँ भिधः ।
शशासेमां पुरीं दीर्घं, स्वकृतं दुर्गमास्थितः ॥ १६ ॥
अद्यत्वे चांग्लदेशीयैः स्थापिता नूतना पुरी ।

याऽतिशेते प्रभावेण, सर्वा अन्याः पुरीरिह ॥ १७ ॥
आपणैर्भूषिता अत्र, नाना व्यापार संकुलैः ।
विविधा दर्शनार्हाश्च, शोभन्ते पण्यवीथिकाः ॥ १८ ॥
प्रासादाः सन्तिनैकेऽत्र, सुधया धवलीकृताः ।
ये राकासु विशोभन्ते, रजतेनेव निर्मिताः ॥ १९ ॥
अन्यानि विविधानीह, सुस्थानानि चकासते ।
आत्मानं मन्यते धन्यं, यानि लोको विलोक्य वै ॥ २० ॥
नाना विद्यालयाः सन्ति, येषु बाला अधीयते ।
तेष्वेको वर्ण्यतेऽदीर्घं, मौडर्न–स्कूल नामकः ॥ २१ ॥
त्रिचतुर्हायना अत्र, बालका बालिकास्तथा ।
शिक्षमाणाः कला नैकाः हरन्ति हृदयं सताम् ॥ २२ ॥
लालयन्ति शशानेके सिञ्चन्ति विविधाँस्तरून् ।
क्रीडन्ति शाद्वलेष्वन्ये विहरन्त्यपरे मुदा ॥ २३ ॥
पठन्ति कविता रम्या गायन्त्युच्चैः स्वरेण ते ।
लिखन्ति विविधान्वर्णान्, काष्ठस्य फलकेषु च ॥ २४ ॥
आन्दोलयन्ते दोलासु, लीलाश्च रचयन्ति ते ।
परस्परं प्रभाषन्ते, वाचा मधुरया तथा ॥ २५ ॥
एधमानममीषां च, स्वास्थ्यं ज्ञानं बलं तथा ।
मातापितॄणां मोदस्य, कुरुते वर्धनं महत् ॥ २६ ॥
वर्षीयांसश्च छात्रा ये, शिक्षन्ते पाठ्यविस्तरम् ।
किन्तु सामोदमेवैभिः, सर्वं कार्यं समाप्यते ॥ २७ ॥
सर्वे चोत्फुल्लमनसो, हृष्टा वाग्मिमनोहराः ।
शुद्धान्तःकरणाः स्वच्छ,वसना नम्रताऽन्विताः ॥ २८ ॥
विद्यालये तडागो यस्तस्य तोये विनिर्मले ।
तरन्ति नैकया रीत्या मज्जनोन्मज्जनस्य च ॥ २९ ॥
आरोहन्ति हयाँस्तीव्रं, ह्रेषतस्तान् नुदन्ति च ।
लंघयन्तश्च गर्तानि, स्थाणून्, धावन्ति संङ्घशः ॥ ३० ॥
तक्षकर्म तथा चित्र–विद्यां संगीतमेव च ।
नृत्यं वाद्यं च शिक्षन्ते, सर्वं उद्यान कर्म च ॥ ३१ ॥
हृदो वाग्वपुषोरेवं, लभमानैर्बलं दृढम् ।
अत्रविद्यार्थिभिः सर्वैराप्यते कृतकृत्यता ॥ ३२ ॥



ले. गोविन्द राजानकः M.A.M.O.L.L.T.Shastri Pra phaker
प्रो० P.W.college Jammu

अये मान्याः सहृदयाः ! को नाम न जानाति तावद्यत् रत्नसूरेव भूमिः प्रशंसामावहति सा हि भारती पूर्वापरसमुद्रवेलावलिता निखिलेऽप्यस्मिन् जगतीतले प्रसिद्धाऽत्युच्चैन पर्वतराजिशृङ्गचयेन हिमालयाख्येण नगाधिराजेनोत्तरतः संवलिता संगोपिता । तस्यां ललामभूतेयं काश्यपी समृद्धि शालिनी प्राकृतिकसौन्दर्यसंभूषिता तीर्थादिजननी रत्नादि प्रसूरोषधिवनस्पतिपरिवलिता विविधेन नागचयेन जलप्रवाहेन सुसज्जिता पर्वतमालाभिर्हारावलीभिरिव शोभितकंठा पतञ्जलिकैय्यटजैयटमम्मटानन्दवर्धन मुक्ताकणशिवस्वामिश्रीकण्टशितिकण्ठानन्तभट्टाशिवस्वामिप्रभृतिभिर्विविधैर्विषयप्रकाशनैः प्रकाशितमहात्म्या–पाश्चात्य पातालीयशर्मण्याङ्ग्लफ्रांसीयविद्वद्वर प्रकटितमनोहरप्राकृतिकरचनावेषा भारतीमुकुटराजिरिव वरिवर्ति ।

अये कृतशास्त्रमन्थनाः पण्डित प्रकाण्डाः ! अस्मिन् खल्वार्यावर्ते भारताद्वर्षाद्बहिश्च संस्कृतपात्तपातिनो बहवो बुद्धिमन्तो जनाः किन्तु तथापि भाषाया अस्याः प्रत्ययं ह्रासमेव निरीक्षमाणेन मया संस्कृतभाषापरमपक्षपातिनां विचारशीलानां सविधे किमपि सविनयं प्रार्थ्यते आशास्यते च बुद्धिमन्तो विवेकशलिनोऽवश्यमेव दृष्टिक्षेपं करष्यन्ति ।

अस्मिन् समये यदा पाश्चात्यदेशेषु विशेषतः पोलण्डप्रदेशे प्रवर्तमाने यूरोपीय महासंग्रामे एकतो रशियन देशीयाः अन्यतो हिटलरानुवर्तिनोऽदम्याः शर्मण्या निरपराधान् पोलण्डीयान् निर्दयं निरर्गलं निःशंकं प्रहरन्ति यस्मिंश्च घोरे वैशसे दीनोद्धारपरा असहायसाहाय्यकाः धर्मरक्षायै कृतोद्यमा न्याये वर्त्मनि प्रचरन्त आंग्लाः कटिबद्धं पोलण्डीयान् महतः संकटान्मोचयितुमुद्यताः समस्तान्नेव जगतीतलजान् सज्जनान् साहाय्यकार्थं प्रार्थयन्ति तस्मिन्नेवास्मिन्नेतादृशेऽनेहासि अस्माभिरपि भारतीयैर्धनजनान्नवस्त्रादिभिर्यथोचिता यथाशक्ति सेवा विधेयैव ।

तथा यदि सर्वे देशीयाः स्वकीयामुन्नतिं कर्तुमुद्यता कथं संस्कृभाषापक्षपातिनः कथं निरपेक्षाः सुप्ता इव स्मइत्यहो महदाश्चर्यम् । यस्यांभाषायामस्माकं भारतवर्षीयाणां समस्तानिखलु धर्मकृत्यानि, यस्यां चास्माकमृषिभिर्महता परिश्रमेण सम्पादितानि

ग्रन्थरत्नानि, यस्यां चापूर्वसाहित्य, व्याकरणन्यायादीन्यनेकानि शास्त्राणि विद्यमानानि दृश्यन्ते । येयं भारती भारती कस्मिन्नपि समये सर्वदेशभाषाजननी महान्तं पूजार्हं पदमाश्रिता, यस्याश्च प्राच्यपाश्चात्य भाषाजातं समुत्पन्नं, सैवाधुना हीयमानाऽस्मत्कृत इति शोचयन्तो वयं न जानीमः कथं दुःखोपशमः स्यादिति ।

यदि खलु वयं संस्कृतभाषा निरपेक्षाः सन्तः स्वेच्छाचारं विहरामस्तर्हि त्वस्माकं सर्वं जातिभावादिकं नाशमेष्यति-ततो नूनमपमानभाजनं भविष्यामो न कथमपि स्वकीयामुन्नतिं कर्तुमर्हाः स्यामेति स्वयमेव विचारयन्तु सहृदया भारतीयाः । अस्माकं भारतीयानां तु महदित्येव अखिलजगतो गुरुस्थाने पूजनार्हमस्माकं पूर्वजानांचरित्रम् । प्रशस्यमेव सर्वथा चरित्रस्य पावित्र्यं, विचारस्य गाम्भीर्यं, हेतूनामुदारता, वर्णनस्य बुहुविधता, विस्तृतता च। यदि वयमपि पूर्वपुरुषाणामिवैश्वर्यं माप्तुंसमुत्सकाः स्वात्मानं परमां दशां "प्रापयितुं" समुद्यतास्तर्हि कथं न वय परममादर्शं परमामार्यसंस्कृतिमनुसर्तुकामा भवेमेत्यन्यदन्यदेति ॥



## सम्पादकीयः

कश्मीरेषु तीर्थस्थानानि ।

दुर्गानागमन्दिरस्याभियोगः । श्री स्वाम्यमरनाथयात्रायै समागतेषु यात्रिकसंघेषु संप्राप्तेषु च पहालग्राम-स्थाने तेषां प्रचुरसमूहेषु 'श्रावणशुक्लपूर्णिमायां अमरनाथपर्वत कन्दरे शंकरस्य दर्शनं भविता-इति मत्वा बहवो दूरदेशेभ्यः समागता जनाः पहालग्राम-मार्ताण्डादि विविध स्थानेषु श्रीनगरे चैकत्रिताः सन्ति । एतस्मिन्नेवानेहसि काचनापूर्वा शोकजनका घटना श्रीनगरे समजनि ! यया काश्मीरिकाणां पंडितानां राजकीयधर्मार्थकार्यालयाध्यक्षेण सह महान् कलहोऽभूत ! श्रीशंकराचार्यापदवी धारिणां श्री ११०८ स्वामि शिवरत्नानन्द सरस्वतीनां निर्वाणान्तरं शंकराचार्यपर्वतमन्दिरोपत्यकास्थदुर्गानागमन्दिरतत्सम्बद्धि समस्तसंपत्त्यधिकारकृते संजातः कलहः संघभङ्गात्मकः ! धर्मार्थकार्यालयाध्यक्षैः सर्वाधिकारा मन्दिरभूमिग्रहवेश्मादिसम्पत्तिसमृद्धयः

स्वायत्तीकृताः ! परं काश्मीरिकैः पण्डितैः सम्मिलित्वा सर्वमेव बलात्स्वाधीशतां नीतम् ! धर्मार्थकार्यालयाधीनं मन्दिरादिवस्तुजातमाहोस्वित्काश्मीरिकाणां पण्डितानां तेषां सभायाश्चास्मिन्नधिकार इत्यधिकृत्य २० दिनपर्यन्तमभूद्द्वयोर्दलयोर्मिथो महान्कलहः श्रीनगर्यां च नातिन्यूनो विद्रोहकारी कोलाहलः । दिवंगतैः श्रीस्वामिपादैः ट्रस्ट् (Trust) रूपेण संस्थैका पूर्वं स्थापिता । यस्या अधिकारे सर्वैव संपत्तिः कृता । परन्तु धर्मार्थकार्यालयाध्यक्षनिश्चयोऽन्यदेवाभूत् । उभयपक्षकर्मचारिभिर्बलात्स्वाधिकारसम्पादनाय यतद्भिः परिणामरूपेण राज्यकर्मचारिभिर्जनताया लाठीचार्ज कारावासदंडादयो लोकनेतॄणां जनप्रतिनिधीनां बन्धनादिकं च कृतम् । दैवयोगात् पाञ्चालदेशवासिन उभयपक्षसम्मानिताः श्रीराजानरेन्द्रनाथकौलवर्याः श्रीनगर अस्मिन्विषमे दिष्टे वर्तमानाः युवकसभया (पंडितसभासद्भिश्च) समस्याया अस्या निर्णयाय नियतीकृताः । सत्याग्रहादिकं च पण्डितैः परित्यज्य राजकीयन्यायालये अभियोगः प्रस्तावितः । आशासे च यत् न्यायालयेऽप्यतिदीर्घं कालमनीत्वैव सम्यक् न्यायः स्यात् येन काश्मीरिकानां पंण्डितानां हार्दिकीच्छा दुर्गानागमन्दिरसंबन्धिनी पूरिता स्यात् । राजा नरेन्द्रनाथकौलस्य हस्ते समर्पिताया अस्याः संस्थायाः शोभनः परिणामो भवेत् । येन धर्मार्थकार्यालयस्य युवकसभायाश्च धार्मिकेष्वेतादृशेषु विषयेषु न कदापि परस्परं संघर्षो भवत्, प्रत्युत सुहृन्मित्रहितेच्छुसदृशोव्यवहारो भवेत् । चेद् धर्मार्थकार्यालयस्य युवकसभाया श्च समान एव उद्देश्यात्मको विषयो हिन्दुधर्मसंरक्षणाय एक एक यत्नो नीती रीतिश्च तर्हि किमर्थं परस्परं कलहो विवादो वेति न जानीमहे ।



## शर्मण्य पोलंडयो महत् युद्धम् ।

प्रचलति साम्प्रतं पाश्चात्यदेशेषु निर्दयानां शर्मण्यानां पोलण्डवासिभिः सह महति युद्धे फ्रांसदेशवासिनोऽस्माद्धितैषिण आंग्लाश्च न्यायसंरक्षणाय सतां रक्षायै असतां क्रूराणां च दमनाय कटिबद्धा यतन्ते ।

श्रीश कृपया तेषां जयः स्यात्, दुष्टदमश्च यथा नै केवलं

हिटलरस्यैव शिक्षाप्रदोभवेत्, अपितु समस्मिन्नपि भूमंडलेऽस्मिन् शान्तिप्रदः सौख्यावहः सदुदर्कावहश्च भूयादिति हार्दिकी अस्माकं भारतवासिनां कृतज्ञानामुत्कटेच्छा वरिवर्ति ! पोलण्डवासिभिश्च यद्यद्दुःखमद्ययावदनुभूतं यच्चावशिष्टं तदर्थं तेषां साहसवृद्धिर्धनं-जनादि साहाय्यादिभिः सर्वैरेव भारतीयैः कर्तव्यमिति मत्वा सम्पादनीयेति—

कुलभूषणः



❀ ओ३म् ❀

वर्षम् १०
सं० १, २

Vol. 10
No. 1, 2

कश्मीरमण्डलान्तर्वर्तिश्रीनगरस्थाया:

# संस्कृत-साहित्य-परिषद-

त्रैमासिकी

पत्रिका

श्री:

QUARTERLY JOURNAL OF THE

# Sanskrit Sahitya Parishad

SRINAGAR (Kashmir)



वार्षिकं मूल्यम् १)

आषाढ, आश्विन
१९९८ वि०

# विषयसूची ।



सूचना—सर्वे लेखाः प्रायो लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाशिताः । अतस्तेषामुत्तरदायिनस्त एव न तु सम्पादकाः ।

## ※सम्पादकसमितिः※


पं० कुलभूषणः डी. पी. एच् (लण्डन) साहित्यालङ्कारः (काशी)
पं० गोविन्दराजदानः शास्त्री, एम ए. एम. ओ. एल्.
पं० जगद्धरः "जाडू" शास्त्री, एम ए. एम. ओ. एल्.
पं० शिवनाथः शास्त्री साहित्य-भूषणः, साहित्यमणिः




उन्मिष्याज्जनताहितार्थपरमा श्री-सूक्तभाजां रुचिः,
सद्धर्मे विनये तमोऽपहनने विद्याप्रचारे शुभे ।
न्याय्याचारविचारसाररुचिरा नीतिः सदा वर्धतां,
श्रौती चापि सरस्वती वितनुतां वृद्धिं समाजेऽमलाम् ॥

[ विश्वबन्धोः ]

# संस्कृतभाषा-प्रचारः

## संस्कृत-प्रचार-स्वरूप-प्रदर्शनो नाम द्वितीयः खण्डः

[ नान्तरीयपूर्वचैत्राङ्कीयसंदर्भादुपरि । ]

[निबन्धारः—आचार्य-श्रीविश्वबन्धुशास्त्रिणः, श्रीविश्वेश्वरानन्द-वैदिकानुसन्धानसंस्थानाऽध्यक्षाः]

११, एषु प्राच्यानुसंधानालयेषु संग्राह्या ग्रन्थाश्च द्विविधा भवन्ति मुद्रिताश्चाऽमुद्रिताश्च । सौभाग्यमिदं भवति खलु प्रभारत्या यदेतदीयाः परःसहस्रा मुद्रिता ग्रन्था उपलभ्यन्ते । परमेतत्तु नैव विस्मर्य्येत यत् संख्यया ततोऽप्यनेकगुणिता अद्याप्य-मुद्रिता ग्रन्था भवन्ति । एवं तावदानुसंधानिकैर्मुख्य एवाय-मात्मीयो धर्मः क्रियेत यथा प्रयत्नसर्वस्वमास्थाय दूराद्वाऽदूराद्वा यतोऽपि तदुपलब्धिः संभाव्येताऽमुद्रिता ग्रन्था मार्गं मार्गं संगृह्येरन्निति । यस्य यस्य च विदुषः स्वीये सद्मन्यप्येते ग्रन्थाः स्युस्तेन तेनापि केनचन नेदीयसाऽनुसन्धानालयेनैव ते संग्राह्येरन् । न हि वैयक्तिकेषु गृहेषु तेषां ग्रन्थानामुपयोगविशेषः

संभवेत् । किञ्च, कालेन जर्जरायमाणाश्च कृमिभिर्वा भुज्यमानाश्च ते व्यर्थमेवैतेऽस्मान् बन्दीकारं निगृह्णन्तीतीव कृत्वा प्राक्तनानामृषिशतानां कोपाभिशापावपि स्वबन्धकानामुपरि पातयेयुः । अथ सन्त्यन्ये केचित् प्रायश्चित्तिनश्च जघन्यजीविनश्च ये स्वयमकृतविद्याश्च कस्याप्यनुसन्धानकृत्यस्यानीशानाश्च सन्तस्तं स्वपूर्वपुरुषीयविज्ञानोत्कर्षपताकायमानमिव सन्तमपि स्वीयममुद्रितग्रन्थराशिं कस्यांचन सुप्रतिष्ठायामपि संस्थायां श्रद्धया समुपयोगार्थं नैव निधापयेयुः, किन्तु ततोऽपि वृत्त्युपायमेव पश्यन्तस्तत्-संग्रहणाभिरुचीन् सततस्तत्कृते प्रचुरप्रचुरां धनमात्रां प्रदायिनः क्रेतॄन् प्रतिदिशं मार्गयेरन्। तस्मात् प्राचीनानामृषिवराणामस्मासु मा भूतां कोपाभिशापौ मा च वयं भूम प्रायश्चित्तीया इत्येवं ध्यायं ध्यायं सर्वेणाप्यमुद्रितग्रन्थदायाद्यवता जनेन यत्रैव तदुपयोगः संभवी तत्रैव शुद्धया धार्मिक्या वृत्त्या तत्संग्रहं कारयित्वाऽऽर्षाद् ऋणादिवात्मा मोचयितव्यः ।

१२. अथैवं पुरातनग्रन्थसामग्र्याऽऽपूर्यमाणानामनुसन्धानसंस्थानानां तत्तदनुसन्धेयविषये विशिष्ट-सौकर्यापेक्षयेवाऽन्योन्यतः क्षेत्रविभागोऽपि क्रियेत येनाऽपार्थः सम्भेदस्तत्प्रयोजितः सम्मर्दश्च निवर्त्तेत, सर्वलाभकरः सहयोगश्च संभवेत्। अनुसन्धेया विषया हि संख्यातिगा भवन्ति । तेषामेकैकस्यापि प्रभूतधनैकसाध्यत्वाद् मा भूत् क्वापि किमप्यर्थापव्ययं पिष्टपेषणमिति संस्थानान्तरीयं कार्यस्वरूपं परिचायं परिचायं यथासंभवं साह्यं च प्रापं प्रापं सर्वासु संस्थासु स्वोपात्तः कार्यकलापो वितायेत ।

१३. अथैतानि खलु सर्वानुसन्धानालयोपयोगार्थं कानिचिदेव सामान्यसूत्राण्युद्दिश्येरन् । तद् यथा—

(क) प्रातिस्विकस्य ग्रन्थराशेर्मुद्रितामुद्रितविवेकतश्चैकैकग्रन्थशश्च तत्तद्विषय-कर्तृनामादिसंकेततश्च पृथग् विवरणतालिका

निर्मायं निर्मायमुपयोगसौकर्यमनुरुध्याऽकारादिवर्णानुक्रमेण व्यवस्थापं व्यवस्थापं विन्यस्येरन्।

(ख) ये येऽमुद्रिता वाऽसाधुमुद्रिता वा ग्रन्थाः स्युस्तेषां चिरन्तनाऽवाधिताऽभ्यासपरिपाकसापेक्षसंसाधनः सत्पाठविनिर्णयात्मकः पर्यालोचनात्मकप्रक्रियाविशेषानुसारी शोधः क्रियेत। एवं सम्पाद्यमानाश्च ग्रन्था उपयोक्तृपरिज्ञानौपयिकविविधसंकेतसूच्यादिभिरप्यवश्यं सनाथ्येरन्।

(ग) ते चैते सुसम्पन्नाः सुसंस्कृताश्च ग्रन्थाः साध्वाकृतिभिः सीसकाक्षरैर्मुद्राप्य प्राकाश्यं नीयेरन्।

(घ) तस्मिंस्तस्मिन् प्रधानभूते च विषये समुचितानुसन्धेयपदार्थसमर्पकत्वेनोपयोक्तव्यानां ग्रन्थानामवान्तरसंकेत-तालिकाश्च पृथग् विरच्येरन्।

(ङ) प्रतिविषयं प्रामुख्येनाऽऽधारयिष्यमाणानां ग्रन्थानां शब्दानुक्रमकोषाश्च प्रतिपाद्याऽनुक्रमकोषाश्च संकलयेरन्।

(च) उपसंनिपतन्तीं प्रातिस्विकीं साधनसामग्रीमनुपात्य संगृह्यमाणानां विषयाणामेकैकमुद्देशमुद्देशं निबन्धग्रन्थाः सम्पाद्येरन्। समयेन च प्रतिविषयाऽभिसम्बद्धसंसिद्धनिबन्धसारसमर्पणपराः सर्वाङ्गीणाध्ययनसचिवाश्च विश्वकोषाः सम्पादं सम्पादं प्रकाश्येरन्।

(छ) यथासम्भवं प्रत्येकानुसंधानसंस्थानीया मुखपत्रिकाऽपि प्रकाश्येत यद्द्वारा प्रवर्तितानांच प्रवर्त्तयिष्यमाणानां चाऽनुसन्धानविशेषाणां प्रदेशान्तरीयासु गोष्ठीसु चर्चा प्रवर्त्तं प्रवर्त्तं परामर्शविनिमयः सुलभः सम्पाद्येत।

(ज) अथ महत्त्वयुक्तानभिनवान् विषयानप्यादाय संस्कृतसंजीवनैकहेतवो नवनवा गद्यपद्यमया ग्रन्था अपि लेखं लेखं प्रकाश्येरन्।

१४. एवं तावत् संस्कृतप्रचारस्य सिध्यतः सतः स्वरूपपरिणामः स्यात्। साधारणं संस्कृतज्ञानं सर्वसाधारणं भवेच्च व्युत्पत्तिविशेषानुप्राण्यमाना विश्वतोमुखानुसंधानप्रवृत्तिरहरहः प्रवर्धतां चेत्यत्र निष्कर्षो भवतीति द्वितीयः खण्डः।

# अथ सिद्ध्युपाय-प्रदर्शनो नाम
## तृतीयः खण्डः

### १. छात्रवृत्तयः

सौभाग्यं खल्वेतद् भवति संस्कृतविद्याया यदेनां प्रत्यस्मद्देशीयाः स्वभावत एव श्रद्धावन्तः सन्तो यथासंभवं किञ्चित् किञ्चिदस्या अर्थेऽर्थं विनियुञ्जते। साध्वी नन्वेषा तदीया भवति प्रवृत्तिः। विशेषतश्च ये नाम तत्तदुपजीव्यव्यवसायसंलग्नाः स्वयं संस्कृताध्ययन-प्रचारणयोः कृते समयं प्रदातुं न क्षमेरन्, तैस्तावदवश्यमेतदर्थं सर्वार्थप्रधानसाधनभूतस्य स्वस्य कियतश्चित् सुनिश्चितस्य भागस्य यथाभिरुचि समर्पणं कर्त्तव्यम्। यथा चैवं धर्मभावेन विनियुज्य-मानस्यार्थस्य सदुपयोगः स्यात् तथोपकल्पमुपकल्पं व्यवस्थेयम्। एवंस्थिते संस्कृताध्ययनप्रवृत्ता योग्ययोग्याश्छात्राः सर्वप्रथमं समुत्साहनीया येन भोजनादिविषये ते नैश्चिन्त्यं भजमानाः सम्यक् तत्तदध्येयविषयपारंगता भवेयुः।

### २. विद्वद्वृत्तयः

अथ ये संस्कृताध्यापका भवन्ति तेषामपि समुचितं नैश्चिन्त्यं सम्पादनीयम्। यथासम्भवं तदीया वृत्तिरियती विधेया ययोप-जीव्यमानया तेऽपहतदीनभावाः स्वं नियोगं यथायोगं चेतः-प्रसादपूर्वकमनुपालयेयुः। यावती मात्राऽपि भवेत् सा प्रतिमासारम्भे नियमेन वितरणीया। मध्ये मध्येऽवकाशदिवसाः कल्पनीयाः। नैमित्तिकाऽऽवश्यककृत्यसम्पादनार्थं रुग्णावस्थायां चान्तरं देयम्। एवं प्रवर्ध्यमानोत्साहाश्च येऽध्यापकवराः स्वतःसिध्यमानायाः

संस्कृतच्छात्रसंख्यायाः परिवृद्धिमुद्दिश्य प्रेरणादिस्वरूपे प्रयत्नविशेषे चित्तमपि दधीरंस्तत्र साफल्यं च प्राप्नुवीरंस्ते विद्यालयादिसंस्थानामुत्सवाऽवसरविशेषानुपलक्ष्य प्रकामं पुरस्क्रियेरन् । अनयैव दिशा ये नाम पण्डितवराः सद्गृहस्थानपि प्रत्यहं किञ्चित् किञ्चित् संस्कृताभ्यासे प्रवर्त्तयेयुस्तेषां स्वशिष्यैश्चाऽन्यैश्च यथावत् समादरः क्रियेत येन ततोऽपि भूयस्ते तत्र चित्तं संलागं संलागं संतन्तन्यमानं संस्कृताभ्युदयं साधीयः साधयेयुः ।

## ३. विद्यासंस्थानवृत्तयः

संस्कृताध्यापनमधिकृत्य द्विविधाः किलाद्यत्वे संस्था भवन्ति । यत्र संस्कृतमेव मुख्यो विषयो भवति यत्र च तदवान्तरविषयाणामन्यतमो भवतीति । उभयत्र तावत् संस्कृतमध्येतॄणां छात्राणां संख्या वावृध्यतां संस्कृताध्यापकाश्च संस्थासंचालकाश्च तत्र विशेषतो मनोयोगं दादद्यन्तामितीवोद्दिश्योद्दिश्य विद्याप्रचारार्थमर्थप्रदाननिरतैर्बह्वर्थवरैः समये समये प्रदीयमानस्याऽर्थस्य विनियोगविशेषः क्रियेत । एवं खलु विविधानां सतीनामपि बह्वीनां संस्थानां संस्कृतप्रचारपुष्टिमनु पारस्परिको गुणमात्राधायकत्वात् स्वागमयितव्यः प्रतिस्पर्ध इवोत्पाद्येत ।

## ४. विशेषतत्त्वानुसंधानम्

तत्तच्छास्त्रीयतत्त्वानुसंधाननियुक्ता व्यक्तयश्च संस्थाश्च तत्तदपेक्षितसौकर्यसाहाय्योपस्थापनेनाङ्गीकृतकार्यक्षमतां नीयेरन् । अन्यतो विशिष्टानुसंधाननियोगानां बहुजनसाध्यत्वाद् नैसर्गिकं बहुधनसाध्यत्वमन्यतश्च तत्फलभूतानां ग्रन्थानां साधारणजनताऽनुपादेयत्वादविक्रय्यत्वम् । तदेवंविधेऽतिखेदकरे व्यतिकरेऽनुसंधानकार्यसाधनसम्पत्त्यभावान्मा विघानीति संस्कृताभ्युन्नयं कामयमानैर्नितरां विचारणीयम् ।

## ५. पुस्तकप्रबन्धः

आनुसंधानिकं च कार्यजातं तत्तदनुसंधेयविषयकाणां ग्रन्थानां च सापेक्षाध्ययनमुपलक्ष्याहरहरवलोकनीयानां महोपकारकराणां

ग्रन्थान्तराणां च राशिं विना संप्रवर्त्तयितुं नैवालमिति यथावत् पुस्तकसंग्रहः सर्वत्राऽनुसन्धानशालासु चाऽनुसन्धाननिरतव्यक्तीनां स्वस्वगृहेषु च प्रकाममपेक्ष्येत। अस्याः खल्वपेक्षायाः पूर्त्तावपि मघवद्भिः समुचितधनदानेन साह्यं वितन्येत। बौद्धशासनसनाथ्यमानेषु देशेष्वद्याप्यस्त्याचारो यथा श्रद्धालवः सदुपासकास्तांस्तान् प्रियाप्रियोभयविधान् पुरुषायुषपर्वभूतान् विशिष्टानवसरानुद्दिश्य योग्येभ्यो विद्वद्भ्यः पर्याप्तमर्थं प्रदायं प्रदायममुद्रितानां प्राचीनानां च नवीनानां च ग्रन्थरत्नानां प्रकाशनं कारयन्ति मुद्रितांश्च ग्रन्थान् पात्रेभ्यः समर्पयन्ति। एषाऽतीव गुणवती प्रथाऽन्यैश्चापि सर्वैः सरस्वतीसेवापरैः सततमनुक्रियेत। अथ प्रतिप्रदेशं कस्मिंश्चित् केन्द्रभूते पत्तने जनसम्मर्दविमुक्तेऽनुकूले स्थाने तत्तत्सुप्रतिष्ठिताऽनुसन्धानमण्डलाधिष्ठिताः पुस्तकालयाः प्रतिष्ठाप्येरन्। ततश्च यथामर्यादं पुस्तकोपयोगं प्रकुर्वतां सर्वेषामपि विदुषां निर्बाधं साहाय्यं प्रसिध्येत्।

## ६. सरस्वती-समाज-प्रतिष्ठापनम्

पत्तने पत्तने च प्रभारतीचरणाब्जषट्पदतां बिभ्राणैस्तत्तद्विद्यास्थानविकासनिरतैश्च सामान्यसंस्कृतविद्याभ्यासपरैश्च संभूय भगवत्याः सरस्वत्याः समुपासनार्थं सरस्वतीसमाजे तिसर्वसाधारणसमाख्यानां संस्थानां संघटनं क्रियेत। तासां संस्थानां च पक्षे पक्षे वा मासे मासे वाऽधिवेशनानि क्रियेरन्। तासु च विशिष्टमहानुभावसाभापत्येनाऽऽयोज्यमानासु सभासु प्रत्यवसरं यथानियोगं वेदवेदान्तप्रमुखांस्तांस्तान् पुराणान् नवीनांश्च विषयानादायमादायं गद्यपद्यमया निबन्धाश्च पठ्येरन्, व्याख्यानानि च क्रियेरन्, गीतिकाश्च गीयेरन्, मध्ये मध्ये आमोदप्रमोदार्थं नर्मालापाश्च श्राव्येरन्। सरलान् कानपि विषयानुद्दिश्य छात्राणां मतिप्रत्युत्पत्त्यर्थं च सामान्यव्युत्पत्त्यर्थं च समये समये प्रतिस्पर्धाश्च कार्येरन्। प्रभारतीचूडालङ्काररूपाणां तेषां तेषां पूर्वेषां महानुभावानां पुण्य-

स्मृतिसंजीवनार्थं तदभिसम्बद्धा दिवसविशेषा विशेषतः सभाज्येरन् । प्रतिवत्सरं च महता समारोहेण क्रियमाणायां सभायां तेन तेन प्रकारेण प्रभारत्याः सेवायां विशिष्टमग्रेसरत्वमुपेयुषां विदुषां च छात्राणां च पुरस्कारपारितोषिकपदकविरुदादिभिः सम्यक् सत्कारः क्रियेत येन तेषां ततः प्रवर्धमानां सुकीर्तिसन्ततिं वीक्ष्य ते पूर्वतोऽपि भूयांसं विशेषं सम्प्राप्नुवीरन्नन्ये च सभ्यास्तदुपजनितोत्साह-वृद्धयो भारतीवृद्धितत्पराः संजायेरन् । यथा च समग्रोऽयं निर्दिष्ट-चरः कार्यकलापः क्रियताप्यंशेनोचितधनलाभाभावान्नैव कदाचनापि विहन्येत तथा धनाढ्यैः सामाजिकवरैः स्वतःसिध्यन्तीमिवाऽऽन्तरीं प्रेरणामुद्भावमुद्भावं सुप्रबन्धो विधेयो विधेय इति तृतीयः खण्डो निबन्धश्च समाप्तः ।

---

# चन्द्रोपरागः

( ले०—पण्डिता सौ० क्षमादेवी राव, बम्बई )

[ पद्ययुगलमेतच्चन्द्रोपरागवर्णनव्याजेन श्रीमतः सुभासचन्द्र-बोसमहाशयस्य सर्वशोचनीयमाकस्मिकमदर्शनमभिलक्ष्य प्रस्तू-यते । अर्थश्लेषालङ्कारश्चोदाहृतः ]

स्वजन्मभूमेरुपचायनाय
श्रिया विराजन्नुदयं प्रपन्नः ।
कलामृतैर्लोकमनन्दयद्यः
पराम्बरं नैव निषेवमाणः ॥ १ ॥

तमग्रसिष्ट प्रतिपक्षराहुः
सुभासचन्द्रं बत भाग्यदोषात् ।
तथापि लोकोत्तरतेजसासौ
पुरा चकास्त्येव सुमण्डले स्वे ॥ २ ॥

# सम्पादकीयम्

## असाधारणं सरस्वती-सम्मेलनम्

अखिलभारत-स्त्रीसम्मेलनप्रधानायाः श्रीमत्याः सौ० रामेश्वरीजी नेहरू इत्याख्याया अध्यक्षतायां संस्कृतसाहित्य-परिषदोऽस्या विशेषाधिवेशनमाश्विनस्य चतुर्थे प्रविष्टे श्रीनगरस्थ-श्रीप्रतापकालेजमण्डपे महता समारोहेण समभूत् । यत्र पण्डितानां कालेजछात्राणां पुरातत्त्वकार्यविदां नागरिकसभ्यानां विद्वद्वराणां स्त्रीपुरुषाणां साधूनाञ्च संस्कृतभाषाश्रवणकुतूहलानां हिन्दुमुसलिमाध्यापकानां छात्राणां च समुपस्थितिर्दर्शनरमणीयासीत् । प्रायशः ४, ५, शतपुरुषाणां समूह आसीत् । प्रथमं परिषन्मन्त्रिभिः प्रधानमहोदयाज्ञानुपदमेवाधिवेशनकार्यप्रणाल्यास्तथा निखिलभारतसंस्कृतसाहित्याधिवेशनप्रधानायाः मोहमयीवास्तव्य-साहित्यचन्द्रिका "सौ० क्षमादेवीराव" इत्याख्यायाः परिचयो दत्तः ।

सौ० क्षमादेव्या भाषाधिक्य-प्राचीनसभ्यता-भाषामहत्त्व-भाषाज्ञान-सरलरीति-निदर्शनपूर्वं स्वकलितललितसरलपदविन्यासरुचिरैः मनोहरैर्भावपूर्णैर्वाक्यैरज्ञजनज्ञानकरैः 'संस्कृतभाषावश्यकता' शीर्षकं संस्कृतव्याख्यानं कृतम् । येन समागताः श्रोतृ-चकोराः साहित्यचन्द्रिकावाक्यामृतपानाच्चक्षुःश्रवस इव हर्षप्रकर्षभरभरितास्तालिकाशब्दमुखरितमण्डपास्तां साधुवादैस्तुष्टुवुः । तदनन्तरे मन्त्रिभिः समागतानां केषाञ्चित् संस्कृतभाषानभिज्ञानां सन्तोषाय क्षमादेव्या व्याख्यानं हिन्दीभाषायामनूदितम् ।

ततश्च परिषन्मन्त्रिभिः 'हिन्दीभाषाया देवनागराक्षरस्वात्मीकरणाय' शतशः धन्यवादान् दत्त्वा वस्तुतस्तज्जीवनार्थं जम्बूकश्मीरराज्यपुरस्तात् निम्नप्रकारेण प्रस्तावः पुरस्कृतः ।

स च प्रस्तावः स्वा० विज्ञानानन्दमहोदयैः सुष्ठुप्रकारेण व्याख्यायानुमोदितः। पं० पृथिवीनाथ भट्ट एम. ए., एच. एचु.,-'पुष्प' इत्यनेन स्वव्याख्याने पुनरनुमोदितः। सामयिकपरिषदध्यक्ष-महाभागया जनसमक्षं स्वीकरणाय स्थापित एव परःशतैः समागतैरूर्ध्वबाहुभिरङ्गीकृत्य सर्वसम्मत्या स्वीकृतिरस्य प्रस्तावस्य सुसंपादिता।

महाभागया श्रीरामेश्वर्या साहित्यचन्द्रिकां समागतजनवर्गं च स्वव्याख्यानान्ते धन्यवादैः संभाव्य सभाविसर्जनं कृतमिति।

---

## स्वीकृतः प्रस्तावः

एस. पी. कालेज हाल
१६-६-४१

प्राचीनकालमें भारतवर्षकी भाषा संस्कृत थी जिसका अपभ्रंश आजकलकी प्राकृत भाषा हिन्दी है, जो प्रायशः ४/५ भाग हिन्दुस्तानमें समझी जाती है। हिन्दी हिन्दुस्तानकी मातृभाषाके समान है इसलिये हर एक हिन्दुस्तानीको हिन्दी सीखनी आवश्यक है जिससे हिन्दी राष्ट्रभाषा बन सके।

हर एक प्रांत तथा हिन्दुस्तानी रियासतमें जहांपर देवनागरी लिपि प्रचलित नहीं है वहां पर इस को प्रचलित करना आवश्यक है। इसलिये संस्कृतसाहित्यपरिषत् श्रीनगर का यह असाधारण अधिवेशन जम्मू-काश्मीर-राज्य को हिन्दी तथा उर्दूको एक ही दर्जा देने पर, तथा हिन्दु-मुस्लिम-सभ्यताको एक ही दृष्टिकोण से देखने पर जो काम कि इस सरकार ने दोनों लिपियों को अपना कर किया है, हार्दिक धन्यवाद देता है, और आशा करता है कि राज्य भरके कार्यालयों तथा न्यायालयोंमें शीघ्र ही हिन्दी-भाषा भी प्रचलित की जावेगी।

प्रस्तावक—डा० कुलभूषण
अनुमोदक—स्वामी विज्ञानानन्द
पुनरनुमोदक—पं० पृथिवीनाथ पुष्प एम० ए०

सभापति—
श्रीरामेश्वरी नेहरू

## उर्दूहिन्दी-समस्या—

संस्कृतसम्मेलनेऽस्मिन् हिन्दीभाषार्थे कश्मीरराजस्य यो यत्नः पूर्वस्मिन् वर्षे दृष्टिगोचरोऽभूत, तदर्थं राज्येऽस्मिन् मुसलमानैः महान् कोलाहलः कृतः। यद्यपि राज्यस्याज्ञा उर्दूहिन्दी द्वे भाषे समां पदवीं प्राप्येतामिति तथापि मुसलमानानां विरोध आसीत्। तेषां मते काश्मीरराज्यस्य राजभाषा उर्दू एव न तु हिन्दी, अस्या लिपिर् अर्बी-अक्षराणि न तु देवनागरी। काश्मीरदेशे तेषां बहु जन-संख्या अतो राजभाषा तेषामधीना, परं हैदराबादप्रदेशे हिन्दूनां बाहुल्यं तत्र कथं न हिन्दी-भाषा माध्यमत्वेन शिक्षाप्रणाल्यां स्वीकृता भवेत्। यतस्तत्र तु तेषां राज्यम्। सत्यं, यद्येवं तर्हि अत्र हिन्दुराज्यम्। समस्याया अस्यास्तु केवलमिदमेवोत्तरं यद् आधुनिके भारतवर्षे हिन्दु-मुसलिमजात्योर्द्वयोर्निवासो विद्यते भविष्यति च। अतो द्वयोः सन्तोषाय राज्येन यत्नः कर्तव्यः। यत् सम्पादितं काश्मीरदेशे तदेव शोभनम्। स एव प्रतिकारो रोगस्यास्य। यद्यपि हिन्दुभिः प्रायशः हिन्दीभाषैव स्वार्थे व्यवहर्तव्या तथापि भारतवर्षस्य कठिना समस्यापि तैः सुगमतां नेतव्या।

## अखिलभारतीयशिक्षा-सम्मेलनम्—

आश्विनमासे विक्रमाब्देऽस्मिन सितम्बरमासस्य २५-२६ तारिकयोः श्रीनगर्यामखिलभारतवर्षस्य १७तमं शिक्षा-सम्मेलनमभूत्। सम्मेलनस्यास्य सभापतिमहोदया भारत-विख्यातश्रीपण्डितगङ्गानाथझा इत्याख्यानां सुपुत्राः श्रीपण्डित-अमरनाथझामहानुभावा इलाहाबादविश्वविद्यालयस्याध्यक्षा आसन्। श्रीप्रतापकालेजभूमौ विशालमण्डपे भारतीयभिन्नभिन्नप्रान्तेभ्यः शिक्षाविभागस्य विख्यातस्त्रीपुरुषाणां समूह आसीत्। आवङ्गप्रदेशात् सिन्धुप्रान्तपर्यन्तम्, आकश्मीराद् मद्रासप्रान्त-पर्यन्तं शिक्षाध्यक्षाणां समारोहः प्रायशः सप्ताहं यावत् श्रीनगरं शोभयामास। पं० अमरनाथझा, डा० ज़ाकिरहुसेनश्च संयुक्तप्रान्तात्, डाक्टर श्रीमती जे. एच. कज़न्स ट्रावन्कोरात्, मिस्टर सरैजंट-

महोदया भारतशिक्षाध्यक्षाः, प्रिंसिपल सोंधी, पं० दीवानचन्द्र शर्मा, डाक्टररघुवीरादयः पञ्चनददेशात्, शिक्षाविभागस्याध्यक्षा अलवर-प्रान्तात्, प्रिंसिपलसूरीकिचलूसैदानमहोदयाः जम्बू-काश्मीरात्, अखिलभारतहिन्दीप्रचारिणीसभाप्रधानाः श्रीराम-नारायणमिश्रादयः बहवः पुरुषा विख्याताः स्त्रीशिक्षाध्यक्षाः स्त्रियश्च सभामलङ्कुर्वन्ति स्म। प्रतिदिनं सभायां द्वित्रसहस्र-जनसंख्या भवति स्म, विभागेष्वपि सम्मेलनस्य शतशः स्त्रीपुरुषा एकत्रिता अभवन्। स्त्रीशिक्षाविभागः, आयुर्वेदविभागः, शारीरिक-शिक्षाविभागः, धार्मिकशिक्षाविभागः, परस्परमन्तर्जातीयप्रेम-वर्धनविभागः, अन्तर्जातीयशान्तिविभागः इत्यादयो बहवः विभागा आसन्।

समस्तभाषणेषु प्रधानमहोदयानां पं० अमरनाथझा इत्यभिधा-नानामभिभाषणमतिसुन्दरं शिक्षादायकं सारगर्भितं हृदयानन्दकरमा-सीत्। बहूनां महाभागानां भाषणानि शिक्षादायकानि आसन्। स्वीकृतप्रस्तावानां सूची दैनिक-साप्ताहिकसमाचारपत्रेषु तत्समय एव प्रकाशिताभूत्। भारतवर्षस्य शिक्षाप्रणालिर्भाविनि काले कथं प्रवर्तनीया इत्यस्य प्रश्नस्योत्तरं प्रस्तावेषु दत्तं विद्यते। भारतवर्षे शिक्षा सर्वसाधारणार्थम् आवश्यकी तथा च निश्शुल्का स्यादित्यासीत् केषाञ्चिन्मतम्।

## शिक्षाया आवश्यकता :—

मिस्टरसरैर्जैंटमहोदयेन भारतीयराज्यस्य शिक्षाऽध्यक्षेण वर्णितं यद् भारते केवलं प्रतिशतं दश जनाः प्रारम्भिकशिक्षां प्राप्तास्तथा च स्वनामलेखनयोग्या विद्यन्ते। अन्येभ्योऽपि शिक्षा दातव्या। इङ्गलैण्डप्रदेशे नवतिः प्रतिशतं शिक्षिताः सन्ति। शेषेषु प्रदेशेषु प्रतिशतं दश प्रारम्भिकशिक्षाशिक्षिताः। सर्वेभ्यः विद्यादानाय प्रचुरं धनमपेक्ष्यते। धनसंग्रहोपायश्च भारते शिल्पशिक्षा-प्रचारोऽस्ति। शिल्पशिक्षा च ३०—३५ प्रतिशतं, त्वन्येषां ६०—६५ प्रतिशतं च स्यात्।

## निश्शुल्क-शिक्षा:—

'अलवरराज्यस्य शिक्षाध्यक्षमहानुभावेन सर्वेभ्यो निश्शुल्क-शिक्षा ( अध्यापकानां सम्मानञ्च ) प्रस्ताविता।

भारतवर्षस्य शिक्षाप्रणाली सर्वसाधारणार्थे महार्घा न भवितुमर्हति। सर्वसाधारणेभ्य: प्रारम्भिक-शिक्षा आवश्यकी निश्शुल्का च भवेत्। उच्चशिक्षार्थे विशेष: प्रबन्ध: कर्तव्य:। येन उच्चशिक्षार्थिनां विज्ञानप्राप्ति: स्यात्।

## शिक्षोपाया:—

भारते वर्षे साम्प्रतमतिस्वल्पसंख्याका: मानवा शिक्षिता: सन्ति। राष्ट्रियशिक्षणालयेषु गुरुकुलर्षिकुलेत्यादिष्वपि शिक्षालाभ: स्वल्प-संख्यायामेव विद्यते। यद्यपि शिक्षा तत्र स्वल्पधनेन प्राप्येत तथापि स्वल्पसंख्यैव भारतीयानां तया प्रणाल्या लाभं प्राप्नुयात्। एवं मुसलिमपाठशालासु स्वतन्त्रप्रबन्धकर्त्रीषु स्वल्पैव संख्या लभ्यते। उपायास्तर्हि सर्वेभ्य: शिक्षाप्रदानाय के ?। धनमपेक्ष्यते प्रचुरं राज्या-धिकारिणां मतेन, लोकमतं त्वत्रानिश्चितमेव, अस्माकं मते तु शिक्षादानं राष्ट्रकार्यं, राष्ट्रेण सुगम: सुलभो लोकप्रियश्च प्रबन्धो यावन्न क्रियते, तावन्न शिक्षासमस्या पार्येत। यत्र राज्योपेक्षा, अथवाऽनिवार्यै: कारणै: पक्षपातेन वा एकजातेरनुरोधस्तत्र स्वजात्यर्थं, स्वयं लोकै: स्वाधीनकृतशिक्षाप्रबन्धै: प्रतिकार आवश्यक: कर्तव्य:। यथा हिन्दीभाषामाध्यमेन पाञ्चालदेशे सिन्धुप्रदेशे च शिक्षा निरुद्धा विद्यते, तत्र सर्वेषां हिन्दूनां ( आर्याणां ) स्वभाषायां स्वधर्म-कर्मशिक्षादानं धर्म:। देवनागरीलिपिश्च सर्वसाधारणेभ्य: स्वतन्त्र-पाठशालाद्वारेण शिक्षणीयेति।

## हिन्दीसम्मेलनम्—

हिन्दीसम्मेलनस्यासाधारणमधिवेशनं शिक्षासम्मेलनदिवसेष्वेव संजातम्। यस्य सभापत्यासनं पं० अमरनाथझावर्यै: स्वीकृतम्। 'हेडो-मेमोरियल-स्कूल शेखबाग' भूमौ सार्धद्वयहोरापर्यन्तं

भारतविख्यातहिन्दीस्नेहिस्त्रीपुरुषाणां सम्मेलनं समजनि । प्रधानमहोदयैः 'झा' वर्यैः, पं० रामनारायणमिश्रैः हिन्दीप्रचारणी-सभाप्रधानैः, महाराष्ट्रप्रदेशीयैः हिन्दीप्रचारकैः, लवपुरीयैः डाक्टररघुवीरवर्यैः, जम्बूप्रान्तनिवासिनीभिः श्रीमतीभिः शान्ताकुमारीभिः 'भारती' पत्रस्य सम्पादिकाभिः तथा चान्यैः महाजनैः हिन्दीभाषाया आवश्यकता स्वव्याख्यानेषु प्रदर्शिता। हिन्दीभाषैव राष्ट्रभाषा भवितुमर्हति न चान्या कापि । सर्वत्र संसारे लोकभाषा देशभाषैव राष्ट्रभाषास्ति न च विदेशभाषा। यथा ईरानदेशे यद्यपि मुसलिमराज्यं तथापि फार्सीभाषा प्रचलिता न तु अर्बी, तथैव तुर्की एव तुर्कदेशस्य भाषा न च अर्बी, चीन-देशस्य चीनी एव भाषा न चान्या काचित् । देशभाषाया देशधर्मेण सम्बन्धो न विद्यते। हिन्दीभाषा ८० प्रतिशतं भारतीयानां मातृभाषा स्वाभाविकी, अवशिष्टः २० प्रतिशतं द्वितीयां भाषामिमाम-वगम्य शिक्षितुमर्हति । वङ्गदेशे वङ्गभाषालेखकौ कवी चास्मिन् कालेऽपि प्रसिद्धौ मुसलिममतावलम्बिनौ द्वौ विद्येते । भारतीय-भाषाणां संस्कृतमेव माता परं कालेऽस्मिन् हिन्दीभाषैव राष्ट्रभाषा-पदवीं प्राप्नुयाद् येन सर्वजनानां भारतनिवासिनामुपकारः स्यात् । श्रीमती शान्ताकुमारी जम्बूप्रान्ताद् 'भारती' नाम्नीं पत्रिकां सम्पाद-यति। हिन्दीप्रचाराय सर्वत्र नगरेषु ग्रामेषु च व्याख्यानानि ददाति ।कुमार्या उत्साहो देशसेवा धर्मपरायणता चातीव श्लाघनीया।

कुलभूषणः

———

# संस्कृत-प्रचारस्योपायाः

( ले०—श्रीमती सौ० क्षमाराव, साहित्यचन्द्रिका, बम्बई )

अयि प्रेष्ठाः सभाध्यक्षमहोदयाः पण्डितश्रेष्ठाः सभास्तारश्च !

मासद्वयात्प्राक् श्रीकुलभूषणमहाशयैः सस्नेहं प्रार्थिताऽभवं यत्संस्कृतपरिषद्यस्यां गैर्वाणभाषायां किंचिदपि वक्तव्यमिति । तेषां निमन्त्रणेन परं विस्मितापि संस्कृतबद्धादराहं तेन प्रमुदिताऽऽसमिति वचनमनृतं न स्यात् । तथापि वस्त्वेकमेव मां किंचिदान्दोलयत् । तच्चैतत् । नन्दनसदृशेषु कश्मीरेषु ये पुरातनकालात्प्रभृति जगन्नाथादिभिः कविरत्नैर्मण्डिता अभवन् । ये चेदानीमपि पण्डित-प्रकाण्डैः संभृताः सन्ति तेषु देशेषु विदुषोऽनेकान् विहाय मादृशी अश्रुतपूर्वा किं प्रब्रूयादिति । एवं चिन्तयन्ती साशङ्का सुहृन्मणिभिः श्रीकुलभूषणार्यैः सान्वर्थनामभिराश्वासिताऽभवं यथा नूनं भवत्याः संस्कृतेन व्यवहारो बहूनानन्दयिष्यतीति । इदं खलु तेषां सौजन्यमेव । यतो न मे वक्तृत्वं न वा वैदुष्यं गैर्वाण्यास्तु सर्वतः प्रसारे तीव्रा ममासक्तिर्वरीवर्ति । मदीयभाषणं बाल-जल्पवत् पुनः पुनः श्रुतमेव प्रतिभायात् तथापि प्रस्तोष्यमाण-विषयमेव मनसि निधाय जनोऽयमुदारभावेन श्रीमद्भिर्द्रष्टव्यः ।

अपि च सभेयं जगतः सर्वभाषाणां मूलभूतायाः सर्वदेशीय-भाषाणां मातृस्थानमापन्नायाः सुरवाण्या दुहितृभूतकाश्मीर-वाक्पोषिणी । इत्यतोऽपि कारणादत्र संस्कृतगिरामाघोषणमस्थाने न खलु स्यादिति सुरभाषायाः परमवात्सल्येन च प्रेर्यमाणाहं भवता-मग्रे मच्चेतसि निरन्तरवर्तिनं विषयमधिकृत्य किंचिद्वक्तुं प्रवृत्तास्मि । स च विषयः सर्वैः सुरवाचः परिशीलनं तस्याः प्रसारणं च ।

अयि माननीया विद्वद्वराः ! सुविदितमेव खलु भवतां गीर्वाणवा-ण्याः सुविश्रुतं प्राचीनमपूर्वगौरवं तस्या निखिलशास्त्र-

भाण्डारसंपत्तिश्च । तदस्यां महिमा विस्तरेण कीर्तयितुं नावश्यकः प्राज्ञानां पुरस्तात् । आहिमाचलादाकन्याकुमारिअस्याः सनातनी विभूतिः पुरातनकालाद्देदीप्यमाना निखिलं भारतवर्षं भासुरयति । तद्विभूतेः कतिचित् कणान् संग्रहीतुकामा युरोपीयपण्डिता अपि बद्धादरा भूत्वा नानाविधसंशोधनाय तत्साहित्यपयोनिधौ निमग्ना बभूवुः । सकलसंस्कृतप्राकृतसंस्कृतीनां केन्द्रस्थानमिदं भारतवर्षमासीदिति पाश्चात्यपण्डितैर्दीर्घकालादेवाङ्गीकृतम् । संस्कृतवाङ्मयविस्तारस्येयत्ता न शक्यते परिमातुम् । 'अनन्ता वै वेदाः' इति प्राचीनोक्तिर्नातिशयोक्तिकोटिमवगाहेत । संस्कृतं च वैदिकी भाषा । सुप्रसिद्धस्य ग्रीसदेशस्य संस्कृतिः सकलवाङ्मयं चेत्येतदुभयं मिलितमपि वैदिकवाङ्मयग्रन्थरत्नभाण्डारस्य शततमामपि कलां नार्हति । यावज्जीवं परिशीलनेनापि तद्वाङ्मयं नान्तं गमयितुं पारयेत् । तथाहि चतुःषष्टिकला गीर्वाणवाण्यां समुपनिबद्धाः सन्ति । यथा—वाद्यं, नृत्यं, नाट्यम्, आलेख्यं, दशनवसनाङ्गरागाः, मणिभूमिकायोजनं, गन्धयुक्तिः, इन्द्रजालं, प्रहेलिकाप्रतिमाला, वास्तुविद्या, धातुवादः, केशमार्जनकौशलं, देशभाषाज्ञानं, वस्त्रगोपनानीत्यादयो बह्व्यः कलाः सुललिताः साङ्गोपाङ्गतया वर्णिताः ।

वैमानिकी कलापि साम्प्रतमभिनवेति मन्यते, साप्यासीत् प्रागिति रामायणादिग्रन्थेषु पुष्पकविमानविद्याधरविमानादीनामुपवर्णनं सूचयति । प्राचीनतमायाम् ऋक्संहितायामपि अश्विनीदेवताकेषु मन्त्रेषु विमानविषयकः प्रस्तावो दृश्यते ।

अपरं च संस्कृतवाणी व्यावहारिकभाषा पूर्वमासीदिति साग्रहमैतिहासिकाः प्राहुः । तदेतदसहमानास्तु बहवः प्रत्यवतिष्ठन्ते यदेषा लोकसामान्यस्य व्यवहारसाधनीभूता न कदाप्यासीदिति । उदाहरन्ति च तत्समर्थनाय गौतमबुद्धस्याचरितम् । स खलु लोकानां संस्कृतानभिज्ञतामनुसंधाय तदात्वे सुप्रचारां 'पाली'समाख्यां भाषां धर्मोपदेशसाधनतया स्वीचकार । स च समयः सार्धद्विसहस्रवत्सरेभ्यः प्राचीनः । तदानीमेव लोकव्यवहाराद्बहिष्कृता गीर्वाणवाणी

कथमर्वाचीनकालेषु व्यावहारिकभाषा स्यादिति। इदं किलाविचाररमणीयम्। 'पाली' नाम भाषा संस्कृतस्यैवापभ्रंशः। या देववाणी आविद्वत्पामरं व्यवहारसिद्धा बभूव सैव स्वभावजन्यैः कारणैरागतप्रतिबन्धा पामरेषु म्लानिं गताभूत्। गौतमबुद्धेनापि सर्वजनसौकर्याय सा भाषा समाश्रिताऽभूत्। तस्मात्तात्कालिकपालीभाषावृत्तान्तः संस्कृतस्य लोकव्यवहारबाह्यतां साधयितुं नोपपद्यते। सूक्ष्मार्थसंशोधनपटवः पाश्चात्त्या अपि विद्वांसः सामान्यलोकैरप्यनयैव देववाण्या प्राग् व्यवह्रियमाणस्थितिगतत्वमभ्युपगच्छन्ति। क्रिस्तशकस्य चतुर्थसप्तमशताब्द्योरन्तराले भरतखण्डस्य विद्याऽभ्युदयेन समाकृष्टा भरतखण्डं प्रविष्टाः प्राज्ञयात्रिका राष्ट्रमेतदखिलं पर्यट्य सारभूतानि बहूनि संगृह्य स्वदेशं प्रतिनिवृत्ताः किल। त एवामी समुद्घोषयन्ति स्वप्रणीतदेशभ्रमणवृत्तान्तेषु यत्संस्कृतमेव सर्वत्र व्यवहारभाषासीदिति। इतरैश्च बहुभिः प्रमाणैः संसिध्यत्येव संस्कृतभाषाया व्यवहारसाधनत्वं लोकेषु।

तत्तादृशी गीर्वाणवाणी निखिलभाषाजननी प्राचीनैश्च व्यास-वाल्मीकि-कालिदास-भवभूति-भारविप्रभृतिभिः कवीन्द्रैर्गीयमाना समृद्धिशिखरस्य परां कोटिं वर्षाणामनेकशतकेभ्यः प्रागेव प्राप्तवती। कालविपर्ययात्तु सा भारते स्वविभूतिशिखरान्न चचाल दीर्घकालम्। अन्ये नवनवाः कवीन्द्राः पण्डितराजादयो विरेजिरे। तत्र विशेषतः सुगृहीतनामा पण्डितराजो जगन्नाथः स्वकवितामाधुर्येण यवनभूपतेरपि हृदयभावमर्जयन् संस्कृतस्य परमाभ्युदयमुदञ्चयामास। शहाजहानाधिपतेः पश्चाद्गामिनां भूपतीनां साम्राज्ये सुरभाषादिवाकरः प्रचण्डभानुरपि यवनदर्पकेतुनाऽऽछन्नोऽभूत्। ततश्चार्यधर्माणां सर्वतो हानिरङ्कुरितुमारेभे। अत एव निखिलधर्मग्रन्थानां मूलभूता देववाण्यत्युच्चशिखरात् परिभ्रष्टा व्यक्तिविशेषान् शरणीकृत्य स्वकीयनैसर्गिकाऽमरत्वादेव कथंचिज्जीवनमात्रं धारयामास।

समयेऽस्मिन् समुत्थितो महाराष्ट्रे कश्चित्प्राज्ञो रमणीयः सनातनधर्मोद्धारबद्धकटिः संस्कृतविद्यासमुज्जीवनधुरीणो, मुकुटमणिर् महाराष्ट्राणां, भूषणं भटानां, निधिर्नीतीनां, कुलभुवनं कौशलानां, कल्पद्रुमायमाणः पण्डितानां, शिव इव धृताऽवतारः शिवाजीवीरः ।

महावीरेण तेन प्रतिष्ठापिते महाराष्ट्रसाम्राज्ये किंचिदुच्छ्वासितेव देववाणी प्रमोदते स्म । ततश्च कालविपर्ययात्पुनरपि मूर्च्छां प्रपन्नेव सीदन्ती विदुषां चेतांसि पर्याकुलीकरोति । मूर्च्छामरणयोर्विशेषमजानन्तस्तु पामरास्तामेनां मृतामेव जल्पन्तीत्यहो विडम्बना ।

अथाऽर्वागित्थं मालिन्यमुपगताया गीर्वाणवाण्याः समुज्ज्वलीकरणहेतुभूता विदेशीयवैज्ञानिकप्रवराः संशोधनकर्मणि प्रवृत्ताः । नूनमेषां पाश्चात्यपण्डितानां सर्वथा वयमृणिनः संवृत्ताः स्मः । प्राचीनग्रन्थसंशोधने त एवास्माकं मार्गदर्शिनो बभूवुः । तैरेव किल भारतीयास्तमश्छन्नदृष्टय इति वयं ज्ञापिता गाढनिद्रायाः प्रबोधिताश्च । पाश्चात्यैः पण्डितैः संशोधनपरायणैर्भारतीया वर्षशतात्प्राग् जागर्तिमापादिताः स्वयं च ग्रन्थसंशोधने कृतोद्यमा बभूवुः । एत आङ्गलविद्यासम्पन्ना भारतीया नवीनरीत्या प्राप्तसंस्कृतशिक्षणा गीर्वाणवाण्यां महतीं व्युत्पत्तिं दर्शयामासुः । महाराष्ट्रे स्मरणीयचरितास्तैलङ्ग-भाण्डारकर-शङ्करपण्डित-लोकमान्यतिलकादयः प्राचीनग्रन्थसंशोधनकर्तारस्तथा च मैसूरप्रान्ते श्रीशामशास्त्रिसुब्रह्मण्यपण्डिताऽऽदयस्तथा च मैसूरदेशाऽभिजनाः साम्प्रतं मुम्बापुरीमधिवसन्तः श्रीनागप्पाशास्त्रिणः संस्कृतकाव्यप्रणेतारो, मद्रकोशलवङ्गपञ्चनददेशेषु च सुप्रसिद्धाः प्रबन्धकर्तारः पशःशताः संस्कृतोज्जीवनजन्यस्य यशसो भागिनो भवन्ति । कालविपर्ययात्तु भूयःसाम्प्रतिकवातावरणवशादाधुनिकेषु भारतीयेषु परभाषाऽध्ययनप्रवृत्तेषु संस्कृतस्याऽवज्ञा दरीदृश्यते । तदेतदतिशोचनीयम् ।

विदेशीयविश्वविद्यालयेषु केम्ब्रिजॉक्सफोर्डादिषु संस्कृते लब्धप्रावीण्यानामप्याधुनिकभारतीयानां स्वदेशं प्रतिनिवृत्य भारतीयविश्वविद्यालयेषु संस्कृताऽध्यापकत्वमाश्रितानां गीर्वाणवाण्यामल्पीयानेवाऽऽदरो दृश्यते। अतो युवानः संस्कृताध्ययने यदि पराङ्मुखाः स्युस्तदा किमद्भुतम्। भूयिष्ठानां विद्यार्थिनामिदानीमाङ्गलशालासु फ्रेञ्च-फारसी-जर्मनादिभाषाध्ययने परा प्रवृत्तिर्दरीदृश्यते। परीक्षोत्तरणमेवाऽऽधुनिकानां विद्यार्थिनां परमं ध्येयम्। न तु संस्कृतिप्राप्तिः। बहवः सुखाचः काठिन्यमुपक्षिपन्तस्तां तिरस्कुर्वन्तश्च, सेयमिदानींतने कालेऽत्यन्तनिरुपयोगिनी, निष्प्रयोजना चेति घोषयन्ति। अपि च मृतेयं भाषा तिष्ठतु क्वापि कोणे। अस्याः परिशीलनेन साम्प्रतं नवनवाऽद्भुतशिल्पयन्त्रादिविद्याप्रसारसमुल्लसिते समये को वा पुरुषार्थोऽधिगम्येतेति भूयिष्ठा भारतीयाः पुनःपुनः वदन्ति। परमार्थतस्तावदेवं प्रजल्पन्त एव नरा विचारजीवितहीनत्वाज्जीवन्तोऽपि न जीवन्तीति। अहो माननीया विद्वद्वराः! अमरभाषा कथं मरणधर्मिणी स्यात्। यदेषाऽद्यापि देशभाषाः सर्वा अपि जीवयतीति जानन्त्येव भवन्तः। भारतस्य भूयिष्ठा भाषाः काश्मीरीवङ्गमहाराष्ट्रीप्रभृतयो नवविंशत्यः शब्दालङ्कारैः स्वमातुरङ्कादुपाहृतैर्मण्डिताः सन्ति। सा मातामही गैर्वाणी यदि सत्यमेव मृता स्यात्तदा तत्तनुजाः पौत्र्यश्च कथं जीवेयुः। सा खलु शाश्वततारुण्येन निरुपमसौन्दर्येण च नित्यं रसिकानां हृदयमुल्लासयन्ती आचन्द्रार्कं स्थास्यति। वयमेव शुद्धवाग्वीर्यहीनाः क्लीबाश्च मृतकल्पाश्च यत् संस्कृतस्य महत्त्वमेते वयं न पश्यामः। सोऽयं न हि तस्या दोषः। आह चात्र भगवान् यास्को यथा "नैष स्थाणोरपराधो यदेनमन्धो न पश्यतीति"।

अथ संस्कृताऽध्ययनस्य काठिन्यवार्तामधिकृत्य किंचिद्विचारयामः, इदं हि प्रथममवबोद्धव्यं, यन्न कापि भाषा कठिना सम्पद्येत, यदि बाल्यादेव सा पठिता स्यात्। सुरभाषेयं सुरसा सुललिता सुमधुरा

च समुचितप्रणाल्या परिचयविषयीकृता चेत्तत्काठिन्यविभीषिका झटित्यपसरति।

अपरं च क्लेशकारणं चिरविलम्बितः प्रारम्भः। प्रायशः सम्प्रति त्रयोदशवर्षानन्तरं बालाः संस्कृतमाङ्गलशालासु पाठ्यन्ते। तदपि सप्ताहे त्रिचतुर्वारं घटिकाद्वयपर्यन्तमेव। या भाषा सामान्यव्यवहारेषु न कदाप्यद्य श्रुतिगोचरास्ति सा कथं बुद्धिमतामपि च्छात्राणामेवं शिक्षणेन वशवर्तिनी स्यात्। अतिबालोऽपि विद्यार्थी संधि-समास-सुबन्त-तिङन्तादिनियमभारैराङ्गलभाषाविरचितैरारम्भादेव परिक्लिश्यते। अतः केचित् षण्मासान्ते, अन्ये वर्षान्ते, इतरे वर्षद्वयान्तेऽप्यर्धपठितामिमां गिरं काठिन्यदोषमुद्भाव्य निराशाः परित्यजन्ति। अतो यथेयं सामान्यधियामपि सुविदिता स्यात्तथा साधयितुं पण्डिता एव प्रभवन्ति। संस्कृतं संस्कृतेनैव शिक्षणीयमित्येव पन्थाः साधीयान्। तादृशो मार्गः कोऽपि प्रकल्पनीयः। बाल्यात्प्रभृति बालका देशभाषया सह संस्कृतं पाठनीयाः। येन द्वादशवर्षाभ्यन्तर एव ते निसर्गादेव संस्कृतं वक्तुं लिखितुं च शक्नुयुः। एषा रीतिर्न केवलं संस्कृतपाठशालासु परं सर्वप्रान्तीयशालास्वपि प्रचारमर्हति। मातृभाषाया व्याकरणमनधीत्य यथा वक्तारो ब्रुवन्ति मातृभाषां तद्वदियमपि वक्तुं योग्या। केवलमस्याः पुनः पुनः श्रवणं सामान्यलोकैरपि यथा कृतं भवेत्तथा प्रयतितव्यम्। कुलाङ्गनाभिः कुलपतिभिश्च संस्कृताध्ययने परीक्षाविषयबुद्ध्या न किन्तु कर्तव्यमिति बुद्ध्या स्नेहेनाभ्यासः कार्यः। एवं दम्पतीसमूहः सर्वोऽपि गीर्वाणवाणीपरिचितः स्यात्। तेषां शिशवश्च तैर्गीर्वाणभाषयैव लालनीया येन तेषां मातृभाषैव सुरभारती भवेत्। इदं तु राष्ट्रियमन्त्रिणां राष्ट्रनायकानां च कृपाकटाक्षमपेक्षते। दुर्दैवात्तु यादृशः प्रयत्नो हिन्दीभाषाप्रचारस्य तैराश्रितस्तादृशः संस्कृतभाषाया भागधेयं नाद्यापि स्पृशति। तथापि संस्कृताभिमानिभिः स्वयं विधेयाः प्रयत्नाः। प्रतिप्रान्तं नगरे नगरे ग्रामे ग्रामे स्वल्पस्वल्पानि संस्कृतबालमन्दिराणि स्थापनीयानि येषु चतुर्वर्षीया अपि शिशवो होराद्वय-

  

पर्यन्तं खेलन्तो हसन्तश्च वात्सल्येन बालशिक्षाममरकोशपाठसंहितां लभेरन्। अथ कालेन मातृभाषेव तेषां संस्कृतमपि न चिरात्सुलभं भविष्यति। ईदृश्या संस्कृतप्रणाल्या इतो विंशतिवत्सरैरेव भारतीया बालकाः सर्वे संस्कृतिनो भवेयुः। आधुनिककालिदासादिमहाकवयो नवीनपतञ्जलिप्रभृतयस्तत्त्वज्ञानिनश्च ते सम्पद्येरन्। इदमशक्यमिति सर्वथा न मन्तव्यम्। कालस्तु दीर्घो भवेत्। सिद्धिस्तावत्करलग्ना भविष्यतीत्यत्र न संदेहः।

अत आर्याः ? सविनयं वः प्रार्थये यदस्माकं सर्वार्यभाषाणां मातृभूता गीर्वाणवाणी रमणीयेऽस्मिन् देशे प्रतिगेहं प्रचारमानीयताम्। अहो भारतस्य भूयिष्ठाः सम्पदो विनष्टाः। एकमेव धनमस्माकमवशिष्टमिदानीम्। तच्च संस्कृतमेव। तद्धनमखिलेऽपि जगति सुज्ञैरभ्यर्च्यते। तत्तद्देशेषु भारतस्योपरि यदादरलेशो विद्यते तत्कारणं संस्कृतमेव। धन्याहमात्मानं मंस्ये यदि मदीयवाचां स्वल्पमपि भवतां हृदये स्थानं लभेत। इतः परं भवद्भिः प्राज्ञैर्नगरेऽस्मिन् संस्कृतसंघनिर्माणेन महत् कार्यं कृतं खलु। तथा च श्रीकुलभूषणमहोदयैः स्थापिता त्रैमासिकी 'श्रीः' नामपत्रिका संस्कृतोज्जीवनं प्रति महतीं सेवामुपास्ते। पत्रिकेयं कल्याणपरम्परायाः कारणीभविष्यतीति न कोऽपि संदेहः। अत्रस्थाश्च श्रीमधुसूदनकौलशिवनाथशास्त्रिमहाभागादयो विद्वदग्रेसरा ग्रन्थसंशोधनकार्यैर्लोकान् कियद् उपकुर्वन्तीति भवतां विदितमेव। कश्मीरदेशीयानामादर्शभूता निजयशसामरकीर्तयो भविष्यन्ति ते।

संस्कृतवाङ्मयविस्तारस्य सर्वश्रेष्ठ उपायो महोत्साहिनामभिनवग्रन्थकाराणां सोत्साहसमृद्धये तत्तच्छ्रमसाफल्यायार्थलाभद्वारोन्मुद्रणाय च यथार्थं तन्निर्मितानां प्रबन्धानां विश्वविद्यालयेषु पाठशालासु वा विनिवेशोऽवश्यमनुष्ठेयः। तथा कृते शिक्षाया गैर्वाणीवैदुष्यस्य च सुविस्तारः स्यात्। राजसाहाय्येन भविष्यन्ति संस्कृतोन्नतय इति न मनागपि संशयः। भारतीयराज्यकाले संस्कृतविद्ययैव राजकार्यं भविष्यति। यत्र राजसाह्यं तत्र सर्वं समुदय-

शीलं भवति। भाषाया अस्याः काठिन्येन प्रचारोऽसंभवीति वृथा-वादः। मण्डनपण्डितस्य गृहे शुकसारिकाः शास्त्रार्थमकुर्वन्निति सत्यार्थोऽयं तिर्यग्योनिषु श्रूयते। अन्यभाषास्विदानीमप्यनुभूयते तर्हि किं शुकसारिकाभ्योऽपि गतप्राया मनुष्याः। भोजराजकाले निरक्षरा अपि संस्कृतेन व्यवाहरन्। बहून्युदाहरणानि विस्तार-भयान्न दीयन्ते यत्र शूद्रादिभिरपि पण्डिता जिताः। एवं निःसंशयं सर्वव्यवहारसमर्था गीर्वाणवाणी यदा व्यवहारे पदं लभेत तदा भारतस्य भाग्योदयः स्यादिति शम्।

---

# शोकावेदनम्

(ले०—गोविन्दराजदानशास्त्री विद्याभूषणः प्रोफेसर प्रिन्सआफ़ वेल्ज कालेज जम्मू)

अहो बतास्तङ्गत एष सूर्यः
श्रीदेवराजो विबुधां वरेण्यः।
कश्मीरक्षोणीन्द्रगुरुः स गङ्गा-
धरात्मजो गोकुलचन्द्रपुत्रः ॥१॥

दानैकवीरस्तु महीसुराणां
गुरुर्गरीयान् स हि त्यागमूर्तिः
सर्वप्रजामङ्गलमाचिकीर्षु—
र्धर्मं धरायां सततं वितन्वन् ॥२॥

दयार्द्रचित्तः किल कल्पवृक्षो-
ऽकस्माद्वियुक्तोऽसमये बतास्मत्।
रोरुद्यमानान् निखिलान् जनान् यो
त्यक्त्वा गतोऽयं न पुनर्निवृत्त्यै ॥३॥

तेजो गतं बलमपेतमुदारशक्ति-
र्नष्टा मतिर्विगलिता मृतमेव सर्वम्।
श्रीदेवराजविरहात् तु समे हि लोकाः
खिद्यन्ति हा बत विधे? खलु कष्टमेतत् ॥४॥

नानाशास्त्रकलाकलापनिरतो विद्यावदातो जनै—
वर्न्द्यः पुण्यनिधिस्त्वनल्पसुखदः कारुण्यरत्नाकरः ।
सत्कीर्त्या धवलीचकार धरणीमानन्दयन्नोजसा
हा कष्टं स दिवङ्गतस्त्वसमये श्रीदेवराजः कथम् ॥५॥

'विद्यारत्न' इति प्रथामुपगतो योऽयं 'स्मृतेर्भास्करो'
यद्विद्यानृपनीतिशास्त्रनिचयप्रावीण्यसम्पच्छ्रियम् ।
दृष्ट्वा जार्जनृपो 'महा' त्वथ 'महोपाध्याय' शब्दैरलं-
सञ्चस्कार तु यं स गच्छति दिवं श्रीदेवराजः कथम् ॥६॥

निःसीमं नयपाटवं निरुपमा धीशक्तिरव्याहता
निष्कामाचरणं निरालसमहो निर्व्याजधर्मस्थितिः ।
निस्त्रैगुण्यरतिर्गुणा इति तु यमाभूषयाञ्चक्रिरे
हा कष्टं स दिवङ्गतस्त्वसमये श्रीदेवराजः कथम् ॥७॥

यद्यप्यत्र कृतादराः कृतधियः पत्राधिपाः पण्डिता
नास्माभिः प्रतिबोधनीयमधिकं वाच्यं तु किञ्चित्परम् ।
सन्तापं जनयत्यहर्निशमयं श्रीमद्वियोगादरो
दौर्भाग्येन महीयसा परमहो ते विप्रलब्धा वयम् ॥८॥

---

## वर्ण-संस्कारः

(ले०—गोविन्दराजदानशास्त्री *M.A.M.O.L.L.T* प्रभाकरः, विद्याभूषणः)

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥

भारतेऽस्मिन् वर्षे आ वैदिकादनेहसः परम्परागतं वर्णचतुष्टयं कर्मविभागविशेषसंसूचकं सनातनं सदैव प्रचलितं दरीदृश्यते। आर्यावर्तीया हि लोकास्तत्तत्कर्मविधानपरास्तेनैव नाम्ना तयैव जात्या तेनैवोपाधिविशेषेणोपसंस्कृतास्तत्तज्जातिविशेषमाप्नुवन्तः सर्वत्र तेनैव नामविशेषेण, जातिविशेषेण, वर्णविशेषेण वा व्यवह्रियन्ते प्रथां गच्छन्ति लोके च ख्याता भवन्तीति सर्वेषां राद्धान्तः । किन्तु कर्मणैव वर्णविशेषत्वं भवतीति सर्वेषां नास्त्यत्रैकमत्यम् । ते तु

"चित्रं कर्म यथानेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत् स्यात्संस्कारैर्विधिपूर्वकैः ॥"

चित्रं कर्म प्रतिमाऽऽलेख्यादि यथा अनेकैरङ्गैर्हस्तपादमुखनासिकादिभिः शनैः क्रमशः उन्मील्यते सम्पूर्णतामावहति एवं ब्राह्मण्यमपि स्वयमेव आविर्भवतीति वदन्ति। सनातनमते तु—

'जन्मनैव महाभागो ब्राह्मणो नाम जायते'

इति कथनाद् ब्राह्मणाद् ब्राह्मण एव जायते, क्षत्रियात् क्षत्रिय एव, वैश्याद् वैश्य एव। एवं शूद्राच् शूद्रो जायते न त्वन्यः। अस्ति हि पौराणिकी कथा यद्विश्वामित्रः सर्वमित्रः किल घोरं तपस्तेपे। तपसः प्रभावेण स महागायत्रीमन्त्रर्षिभूतो ब्रह्मर्षित्वमवाप, न तु ब्राह्मणशब्देन कदापि विप्रवर्येण वसिष्ठेनान्येन वार्षिणा ब्राह्मणेन वा व्यवाह्रियत।

कुकर्मनिरतो हि ब्राह्मणो दुराचारपरोऽधोगतिं प्रत्यहमनुप्राप्तः सन् दशविधेषु ब्राह्मणविशेषेष्वस्मिंल्लोकेऽस्मिन्नेव जन्मनि हीनब्राह्मणतामुपगतो ब्राह्मणशब्देनैव व्यवह्रियते न त्वन्येन केनचित्। तादृशो हि।

'यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः'।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥'
'विप्रा लोभभयग्रस्ता वेदविक्रयजीविनः।
धनार्जनार्थमभ्यस्ता विद्यामदविमोहिताः।
त्यक्तस्वजातिकर्माणः प्रायशः परवञ्चकाः।'

भवन्ति, अन्ते च अधमानधमांल्लोकान् गच्छन्तीति सर्वे समामनन्ति। एवमेव पुण्यहीना अधर्मपरा नरा दुराचाररताः

……………'सत्यवार्तापराङ्मुखाः।
परस्त्रीसक्तमनसः परहिंसापरायणाः।
देहात्मदृष्टयो मूढा नास्तिकाः पशुबुद्धयः
मातापितृकृतद्वेषाः स्त्रीदेवाः कामकिङ्कराः।

क्षत्रियाश्च तथा वैश्याः स्वधर्मत्यागशीलिनः ।
तावच्छूद्राश्च ये केचिद् ब्राह्मणाचारतत्पराः ॥
'स्त्रियश्च प्रायशो भ्रष्टा भर्त्रवज्ञाननिर्भयाः ।
श्वसुरद्रोहकारिण्यः ॥

अधमांल्लोकान् प्रेत्य गच्छन्ति। ब्राह्मणो हि वर्णानां गुरुः । स तु गारुडोक्तेन लक्षणेन लक्षितो भवति । 'अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत्' ॥ इत्येतत्तस्य सामान्यलक्षणम् । एवमेव 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्'—'यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः । अध्यापनञ्चाध्ययनं षट् कर्माणि द्विजोत्तमे' ॥ वामनपुराणे--षट्कर्मनिरतो भूत्वा अहङ्कारविवर्जितः। लाभालाभौ परित्यज्य भिक्षाहारो जितेन्द्रियः । ममकर्म समायुक्तः पैशुन्येन विवर्जितः । शास्त्रानुसारी मध्यस्थो न वृद्धशिशुचेतनः । एतद्वै ब्राह्मणः कर्म एकचित्तो जितेन्द्रियः। इष्टापूर्त्तं च कुरुते स मामेति वसुन्धरे ।' किञ्च विष्णुपुराणे-दानं दद्याद्यजेद्देवान् यज्ञैः स्वाध्यायतत्परः । नित्योदकी भवेद्विप्रः कुर्याच्चाग्निपरिग्रहम् । वृत्त्यर्थं याजयेच्चान्यानन्यानध्यापयेत्तथा । कुर्यात्प्रतिग्रहादानं शुक्लार्थान्न्यायतो द्विजः । सर्वलोकहितं कुर्यान्नाहितं कस्यचिद् द्विजः । मैत्री समस्तसत्त्वेषु ब्राह्मणस्योत्तमं धनम्—इति । तेष्वपि विशेषो भवति यथा—'सन्ध्या स्नानं जपं होमं देवतानित्यपूजनम् । अतिथिं वैश्वदेवञ्च देवब्राह्मण उच्यते । शाके पत्रे फले मूले वनवासे सदा रतः । निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते । वेदान्तं पठते नित्यं सर्वसङ्गं परित्यजेत् । सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते' ॥ एवमेव क्षत्रियादीनामपि यथा--

'दद्याद्राजा न याचेत यजेत न च याजयेत् । नाध्यापयेदधीयेत प्रजाश्च परिपालयेत् । दानमध्ययनं यज्ञो राज्ञां क्षेमोऽभिधीयते । तस्माद्राज्ञा महाराज योद्धव्यं धर्मशीलिना । प्रजाः स्वेषु च धर्मेषु स्थापयेत महामतिः । धर्म्याण्येव हि कर्माणि कारयेत् सततं

प्रजाः'। इति नारदः। 'कृषिगोरक्षवाणिज्यं वैश्यकर्मस्वभावजम्। परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्'। 'विप्राणामचनं नित्यं शूद्रधर्मो विधीयते। तद्द्वेषी तद्धनग्राही शूद्रश्चाण्डालतां व्रजेत्'। इति ब्राह्मणत्वादिजातिविशेषः। जातिश्च नित्यानेकसमवेता भवति। ब्राह्मणत्वादिजातिः संस्कारेण संसिध्यति। संस्कारो हि नाम 'आत्मशरीरान्तरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः। स च द्विविधः श्रौतः स्मार्तश्च। स्मार्तो हि ब्राह्मो गर्भाधानादिर्भवति। श्रौतस्तु सौम्यो दैव इत्यादिभिर्नामविशेषैरुपलक्षितः पाकहविर्यज्ञादिरस्ति। स च चतुर्विधो भवति तद्यथा—हुतोऽहुतः प्रहुतः प्राशित इति। तत्र हुतो हुतानामुपहारोऽहुतानां पिण्डपितृयज्ञः। प्रहुतानां मधुपर्को ब्रह्मोदनश्च। प्राशितानां दर्भमासप्रकृतयः। तथा च 'जपो हुतोऽहुतो होमः प्रहुतो भौतिको बलिः। हुतं भवेद् द्विजाग्र्यर्चा प्राशितं पितृतर्पणम्' इति॥ वस्तुतस्तु 'अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणमर्थवत्। स्मरणाच्च प्रयोगार्थं प्रयोगाच्च फलोदयः' भवति। यतो हि मन्त्रैरेव स्मृत्वा कृतं कर्म अभ्युदयकारि भवति, इत्यवधार्यते बुधैः। तथा च गर्भाधानादयोऽपि संस्कारविशेषाः श्रुतिप्रतिपाद्याः स्मृतिभिः 'गार्भैर्होमैर्जातकर्म' इत्यादिवचनैः सम्यगुपवर्णिता भवन्ति। तथाहि—'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंषतु। आसिञ्चतु प्रजापतिर्धाता गर्भं ददातु ते॥ गर्भं धेहि सिनीवालि गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ' इति भगवती श्रुतिः। 'शुक्रशोणितसंयोगादावर्तते गर्भो हृदि व्यवस्थां नयति हृदयेन्तराग्निः, अग्निस्थाने पित्तं, पित्तस्थाने वायुर्वायुतो हृदयं प्राजापत्यात् क्रमात्' इति हि गर्भोपनिषत्। तस्माद् गर्भाधानादिसंस्कारस्य श्रौतत्वमेव। ते च--

आधानपुंससीमन्तजातनामान्नचौलकाः।
मौञ्जीव्रतानि गोदानसमावर्तविवाहकाः।
अन्त्यश्चैतानि कर्माणि प्रोच्यन्ते षोडशैव तु॥

मनुरपि—'वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् । कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' । एवं सीमन्तोन्नयनादीनामपि श्रौतत्वमेव । तथा च लौगाक्षिः—'तृतीये गर्भमासे सीमन्तं कारयते शुक्लपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय, इति । आश्वलायनगृह्यपरिशिष्टे च--'सीमन्तोन्नयनं प्रथमे गर्भे ।' सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कारः—इति श्रुतिः' । श्रुतिरपि-'यं सीमन्तं कङ्कतस्ते चकार यद्वा क्षुर परिवर्ज्य वपांस्ते । स्त्रीषु रूपमश्विनौ तन्निधत्तं पौंस्येनैनं संसृजतं वीर्येण' इत्यादि । स्मृतिरपि सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्' इति । जातनामकरणादीनामपि श्रौतत्वं स्मार्तत्वञ्च । तद्यथा श्रुतिः-'अङ्गादङ्गात् संभवसि हृदयादभिजायसे । आत्मा वै पुत्रनामासि स जीव शरदां शतं पश्य शरदः शतम्' । 'एकादशे द्वादशे वाहनि पिता नाम कुर्यात्' । 'पुत्रे जाते नाम धीयते घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वा नाम कुर्यात्' इति, 'चतुरक्षरं नामधेयं ब्रह्मवर्चसकामस्य द्व्यक्षरं प्रतिष्ठाकामस्य' । स्मृतिरपि 'नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत् । पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते । माङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् । वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ शर्मवद् ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् । वैश्यस्य धनसंयुक्तं शूद्रस्य प्रेष्यसंयुतम्" इति ।

अथान्नप्राशनम्--'षष्ठे मासेऽन्नप्राशनं दन्तेषु वा जातेषु' इति लौगाक्षिः । शाङ्खायनगृह्यमपि--षष्ठे मासेऽन्नप्राशनम्' । 'दधिमधुघृतमिश्रमन्नं प्राशयेत् सर्वकामः' इति पवनं वीर्यम् । अत्र मार्कण्डेयः-'प्रथमं यत् स्पृशेद् बालस्ततो भाण्डं स्वयं तदा । जीविका तस्य बालस्य तेनैव तु भविष्यति'-इति बालाग्रतोऽथ विन्यस्य शिलाभाण्डानि सर्वशः । अस्त्राणि सर्वशास्त्राणि ततः पश्यति लक्षणम्' ॥

श्रुतिस्तु--आयुर्धा देव जरसं वृणानो घृतं वसानो घृतपृष्ठो अग्ने ।
घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमम् ॥

चूडाकरणम्—तथा च लौगाक्षिः–'तृतीयस्य वर्षस्य भूयिष्ठगतेषु चूडाः कारयते । दक्षिणतः कशिपुत्रसिष्ठानामुभयतोऽत्रेकश्यपानाम् । मुण्डा भृगवः पञ्च चूडा अङ्गिरसोर्वाजिमेके मङ्गलार्थं शिखिनोऽन्ये । यथाकुलधर्मं वा' । श्रुतिस्तु--'अयमागात् सविता क्षुरेणोष्णेन वायो उदकेन एहि । आदित्या रुद्रा वसवः सचेतसः सोमस्य राज्ञो वपत प्रचेतसः' इति ॥ स्मृतिस्तु--चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्' इति ॥

विद्यारम्भः—'प्राप्ते तु पञ्चमे वर्षे प्रसुप्ते च जनार्दने । षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाष्टमीम् । रिक्तां पञ्चदशीं चैव सौरभौमदिनं तथा, एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत् । प्राङ्मुखो गुरुरासीनः पश्चिमाभिमुखः शिशुः । अध्यापयेत् प्रथमं द्विजाशीर्भिः सुपूरितम् ॥ श्रुतिश्च- स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा' इति । 'लक्ष्मी मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा मतिः । सरस्वती सूत्रकारी वाग्वादिनी पूर्वं स्थितम्' । अतोऽनन्तरमुपनयनम्—तद्यथा--लौगाक्षिः--'सप्तमे वर्षे ब्राह्मणस्योपायनम् । नवमे राजन्यस्य । एकादशे वैश्यस्य । आ षोडशाद् ब्राह्मणस्यानतिक्रमः । आ द्वाविंशाद् राजन्यस्य आ चतुर्विंशाद् वैश्यस्य ।

मनुरपि--गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

तथा चापस्तम्बः--

सप्तमे ब्रह्मवर्चसकामः । अष्टमे चायुष्कामः । नवमे तेजस्कामः दशमेऽन्नादिकामः। एकादशे इन्द्रियकामः । द्वादशे पशुकामः । त्रयोदशे मेधाकामः । चतुर्दशे पुष्टिकामः । पञ्चदशे भ्रातृव्यमवर्तमिति ।

औपनायनिकः कालः परः षोडशवार्षिकः ।
द्वाविंशतिपरोऽन्यस्य स्याच्चतुर्विंशतिर्विशः ॥

'वसन्ते ब्राह्मणमुपनयेत्। ग्रीष्मे राजन्यं शरदि वैश्यम्' यथामङ्गलं वा सर्वेषाम्' इति ।

[ क्रमशः ]

---

# सूर्य आत्मा

निबन्धा—श्रीदीनानाथशर्मा शास्त्री सारस्वतः
( स० ध० कालेजोपाध्यायः, मुलतान सिटी )

**'दिवाऽऽदित्यः सत्त्वानि गोपायति' आपस्तम्बधर्मसूत्रे १।३१।२१**

**'प्राणः प्रजानामुदयत्येष सूर्यः' प्रश्नोपनिषदि १।८**

गताङ्के सौरमन्त्रमहत्तादर्शनेन सूर्यमाहात्म्यं प्रकटितमस्माभिः सङ्केतेन । अत्र च निबन्धे तत्स्पष्टता विधीयते । अस्मदीयः प्राचीनो धर्म्मः सूर्य्योपासक इति प्रसिद्धं प्रत्यक्षञ्च । धर्म्मेऽत्र मुख्या सन्ध्या; सन्ध्यायां च मुख्योपासना सूर्य्यस्य । यस्यां दिशि सूर्य्यस्तस्यामेव दिशि मुखं कृत्वा सन्ध्याविधानं भवति। सूर्य्योपस्थानस्य मन्त्राः सावित्रमन्त्रजपश्च सन्ध्यायां मुख्यतां गाहन्ते। अस्मदीयधर्मस्य अस्यां सूर्य्योपासनायां भिन्नधर्म्मार्णो जना उपहसन्ति स्म। परं विज्ञानानुभवप्रवीणानामस्माकं प्राचामनुभवः कथङ्कारं व्यभिचरेत्? अद्य सर्व्वे एव वैज्ञानिका अस्मिन् विषये नतमूर्द्धानो जाताः ।

अद्यत्वे सूर्य्योपासना सूर्य्यनमस्काराश्च स्वास्थ्यादि-विविधलाभप्रदा मन्यन्ते विज्ञानसंसारेण । तथा च-- १. सूर्य्यनमस्कारविशेषैर् ( यत्र दश आसनानि विधेयानि भवन्ति ) जठरे, यकृति, अन्त्रेषु च पाचनशक्तिर्वर्द्धते, मलावरोधः समूलं नश्यति। २. मज्ज+तन्तूनां शक्तिर्व्वर्द्धते। मस्तिष्क-पृष्ठवंशादयो बलवन्तो

+ मज्जन्-शब्दः, नलोपः । अत्र दीर्घप्राप्तिर्न ।

भवन्ति। निर्विरागता, विस्मृतिः, चित्तचाञ्चल्यं, मानसिकविकाराश्च क्रमशः क्षीयन्ते। ३. हृदयस्य दार्ढ्यं भवति, तदीयविकारा रुधिरविकाराश्च अवरुध्यन्ते। ४. फुफ्फुसौ बलवन्तौ जायेते। तयोर्विपुलप्राणवायोः संचारो भवति; तेन क्षयशङ्का न तिष्ठति।

५. रक्तं शुध्यति। रुधिराभिसरणे सुधारो भवति। शारीरिकमारोग्यं मुख्यतया प्रबलरक्ताभिसरणे एवाऽऽयतते। ६. मांसग्रन्थयः सुदृढा भवन्ति; तत्र नवीनं बलमुद्भवति। कण्ठस्य ग्रीवायाश्च प्रसरणाकुञ्चनाभ्यां कण्ठग्रन्थौ सामर्थ्यं वर्द्धते। मांसग्रन्थिवृद्ध्याशङ्का न तिष्ठति। ग्रन्थीनामुचितकार्य्यकरणे एव जनस्य सामर्थ्यं सौन्दर्य्यं च निर्बिभर्ति। ७. त्वचः कार्ये कान्तौ च सुधारो भवति, यतः स्वेदद्वारा शरीरस्याऽनेकेऽशुद्धा अनावश्यकाश्च पदार्था बहिष्क्रियन्ते, सूर्यकिरणानां च ओजस्विपदार्थाः शरीरे त्वचश्छिद्रद्वारा आकृष्यन्ते। त्वचो नैर्म्मल्यमारोग्यं कान्तियुक्तत्वं चावश्यकम्; सा संसारस्य व्यवहारस्य च चित्ताकर्षिका वार्त्ता। ८. ग्रीवा-कण्ठ-स्कन्ध-मेरुदण्ड-मणिबन्धा(प्रकोष्ठ)ऽङ्गुलि-पृष्ठ-कटि-जठराऽन्त्र-जङ्घा-जानुप्रभृत्यवयवा बलवन्तो भवन्ति। पृष्ठस्य बलीयस्त्वे मूत्रविकारो न जायते। ९. केशानामकाले पालित्यं व्यपगच्छति। ग्रीवाया आकुञ्चनप्रसारणाभ्यां शिरसो रुधिराभिसरणं शोभनतया जायते। तेन केशानां पोषणं सम्यग् जायते, शिरसि खल्वाटता न जायते। १०. सन्तानोत्पादकशक्तिर्विकसति। ११. व्यर्थमेदः क्षीयते, विशेषत उदर-श्रोणी-जङ्घा-ग्रीवा-चिबुकेषु व्यर्थप्रवृद्धा†मेदो नैयून्यं प्राप्नोति। १२. मूत्ररोगचिकित्सा जायते। ग्रीवाया अग्रे पृष्ठे नमनेन कण्ठमणेर्व्यर्थौन्नत्यं क्षीयते। १३. स्वेदस्य दुर्गन्धो न्यूनीभवति। १४. पादयोर्धनुर्वद्*वक्रता न्यूना भवति। बद्धकोष्ठता विनश्यति। १५. शरीरं सुन्दरं, स्नायवः सुदृढाः सुघटिताश्च भवन्ति। इन्द्रियाण्यपि शक्तिशालीनि भूत्वा कार्यक्षमाणि जायन्ते। १६. यौवनोत्साहस्थैर्यस्य उत्तमो मार्गः सूर्य्यनमस्कारोऽस्ति।

† मेदः क्लीबे। *धनुर्वद्। अत्र धनुश्शब्दः।

१७. मानसिकमात्मिकं च सामर्थ्यं परिवर्द्धते; तेन आस्तिक्यं दृढीभवति, चित्तचाञ्चल्यं नश्यति, एकाग्रता वर्द्धते। आशावाद आत्मविश्वासः स्मरणशक्तिश्च वर्द्धते। १८. मनुष्यः पापतो दूरे तिष्ठति, यतो हि पापम् अशक्ते रोगस्य विकृतेर्वा परिणामः। १९. कासप्रतिश्यायादयः सामान्यविकारा दूरे भवन्ति। २०. सूर्यनमस्कारेण आरोग्यं, सामर्थ्यं, कार्य्यक्षमता, दीर्घमायुश्च अवश्यं प्राप्स्यन्ति। इत्यादि।

रविवारावकाश ईशवीयैरन्यैश्च क्रियते; तेषां न ज्ञायते तत्स्वीकृतौ किं कारणं स्यात्। परमस्मद्धर्म्मेण स्वोपास्यदेवस्यैव वारकारणात् तत्प्रसन्नतोपलक्षये सोऽवकाशः क्रियते। दिनानां वृद्ध्यवकाशा ईशवीयैरन्यैश्च क्रियन्ते; न ज्ञायते तेषां तत्र किमभिप्रेतं स्यात्। परमस्मद्धर्मेण यत् ते स्वीकृताः, तत्र कारणं सूर्य्यस्य दिनेऽधिकमभिवृद्ध्यारम्भमूलकहर्षः। अत एव मेघाच्छन्नदिनस्य यत्र सूर्य्यो न दृश्यते यद्यपि ईशवीयादयः 'फ़ाईन डे' (सुदिनम्) इति सञ्ज्ञां कुर्व्वन्ति परमस्मत्प्राचीनधर्मस्तन्नामकरणं 'दुर्दिनम्' इति निधत्ते। अत एव दुर्दिन-दिनेषु सूर्य्यपिधानसातत्यदुःखप्रकाशनार्थं मासद्वितयमवकाशः क्रियते वर्षतौ।

सूर्य्यस्य उत्तरायणत्वे तस्य दिनेऽधिकस्थितिर्भवति। सङ्क्रान्त्यनुसारं गणनायां तद्दिनं माघसङ्क्रान्तिर्भवति। तत्र सूर्य्याभ्युदयवशादेव प्राचीनधर्म्मिभिस्तत् पुण्याहं मन्यते। तस्मिँश्च सुदिनाहेऽवकाशोपि क्रियते दानादिकमपि च। तत्रैतदेव रहस्यम्। अत एव राहुकेतुकर्तृकसूर्य्यग्रहणे तस्मिन् दिने प्राचीनधर्म्मिभिः स्वकीयाऽपवित्रता मन्यते, तदुत्तरं च स्नायते। सूर्यस्य मेषसङ्क्रमणे तस्य आभ्युदयिकदिनत्वात् तस्मिन् दिनेऽपि तत्प्रसन्नतोपलक्षये प्राचीनैरवकाशः क्रियते।

प्राचीनो धर्म्मः 'तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्' इति सवितृ (सूर्य्य) मन्त्रस्य सर्व्वविधेषु कर्म्मसु जपनं कारयति--इति गतनिबन्धे दर्शितमस्माभिः; तत्कारणं सूर्योपासना। अत एव ज्यौतिषे प्रथमा सङ्ख्यापि सूर्य्यस्य गण्यते।

अस्मद्धर्म्मो नेत्ररोगदूरीकरणार्थं नेत्रोपनिषत्-प्रयोगमाचष्टे। नेत्रोपनिषदि च सूर्य्यस्यैव तु उपासना। सन्देहसन्दोहैकधना जना अत्र उपहसन्ति स्म। परं वैज्ञानिकसंसारोऽत्र वक्ति--सूर्य्याभिमुखं मुखं कृत्वा नेत्रे संवृत्य उपवेष्टव्यम्। स्वशिरो नेत्रे च दक्षिणतो वामतश्च विधूनयन्तस्तिष्ठत। यथा खलु सर्प्पः स्वफणां विधूनयति। नेत्रे शिरसा सहैव विधूननीये। अयं प्रयोगः १० 'मिनटात्' ३० 'मिनट' पर्य्यन्तं कर्त्तव्यः। पुनश्छायायामागन्तव्यम्। स्वनेत्रे च तथैव संवृते + एव निधेये। ते च स्वहस्ताभ्यां शनैः शनैः पञ्च-मिनटार्थं पिधातव्ये। तदा ज्योतिः किञ्चिदधिकतां स्प्रक्ष्यति। सूर्य्यं विवृताऽक्षिभ्यां न पश्यत। [ अत एव तु अस्माकं सन्ध्या सूर्य्यसमक्षं नेत्रे पिधाय क्रियते ] प्रातः सूर्य्याभिमुखमवस्थितिर-धिकलाभदायिका। तदीया रश्मयो यथा लाभदायका न तथा तदूष्मा — इत्यादि।

वैज्ञानिकसंसारः प्रकृत्यधीनः। स सूर्य्यमूर्त्या याँल्लाभान्✱ विचिन्तयति; तदभिमानिदेवप्रसन्नतया तत्र परिणामं ज्ञातुं न समर्थोऽस्ति। तथापि अद्यत्वे तत्रापि तदीयं प्रणिधानं प्राप्तमिति वक्ष्यते। एवं सूर्य्यविचारे बहूनां वैज्ञानिकानां विविधानि मतानि। लण्डनस्य 'कैम्ब्रिजविश्वविद्यालये' सूर्य्यविषये एकं व्याख्यानं जात-मासीद् गतवर्षेषु। तत् समाचारपत्रेषु प्रकाशितम्। तदीयं सारं वयं पाठकान् प्रति उपहरामः। तथाहि—

"अद्यावधि × सूर्य्यविषयका द्विविधा विचाराः संसारेऽवर्त्तिषत। प्राची सभ्यता सूर्य्यं देवतां मेने; पश्चिमीया च सभ्यता तम् अग्नि-गोलकं मेने। वयं सूर्य्यस्य कार्य्याणि अल्पतया परिचिन्मः †। संसारो वेत्ति स्म यत् सूर्य्य ऊष्माणां प्रकाशं च ददाति; अथ च वनस्पतयः क्षुपा ‡ओषधयोऽन्नं वा सूर्य्यद्वारैव उत्पाद्यन्ते,

---

+ संवृते एव। द्विवचनान्तत्वेन प्रगृह्यता। ततोऽसन्धिः। ✱ याँल्लाभान्। अत्र प्रथमे लकारेऽनुनासिकः। × अद्यावधि। सामान्ये नपुंसकम्। † परिचिन्मः। उलोपः। ‡ ओषधिशब्द ओकारादिः। नतु औकारादि।

पुष्यन्ति, फलन्ति च। एतदतिरिक्तं चन्द्रस्तारागणाश्च सूर्य्यद्वारा प्रकाशन्ते—एतावदेव जगति प्रसिद्धमासीत्।

किञ्चित्समयोत्तरं डाक्टरैः सूर्य्यस्य सहायतया रोगिणः *उल्लाघयितुमारब्धाः। पाचनशक्तिविकृतौ ते विंशतिकलापर्य्यन्तं रोगिणं सूर्य्यस्य घर्म्मे शाययन्ति स्म; तदीयोदरोपरि च किरणान् अक्षेपयन्। घर्म्मे स्थापितं च जलं रोगिणमपीप्यन् †। प्रयोगेणाऽनेन पाचनशैथिल्यं दूरीभवितुमारब्धम्।

डाक्टरैश्शारीरिकाऽवयवानां दौर्ब्बल्यमपि सूर्य्यस्य साहाय्येन दूरीकर्तुं प्रारब्धम्। निर्बलस्याऽङ्गस्य घर्म्मे करणेन शक्तिवर्द्धनमारभ्यत। निर्ब्बला रुग्णा नग्ना भूत्वा रश्मिस्नानमकुर्वन, स्वास्थ्यं च × अबिभरुः। डाक्टरैः सूर्य्यघर्म्मे स्थापयित्वा कतिचिद् विकृतमस्तिष्का अपि उल्लाघिताः। वातज-(गठिया)-अर्दितक (लकवा) प्रभृतिरोगे सूर्य्यस्नानं लाभदायकं सिद्धम् [मयूरभट्टकवेः सूर्य्यस्तुतिनमस्कारसेवनैः कुष्ठरोगो दूरीभूतः--इति पुरातनी प्रसिद्धिः]। डाक्टरै राजयक्ष्मरुग्णाः सम्यक् सूर्य्यस्नानं = कारिताः। राजयक्ष्मणः समस्तकीटाः सूर्य्येण ज्वालिताः, रुग्णाश्च स्वस्था अभूवन्।

डाक्टराः सूर्य्यमेतदर्थमेव स्वकीयमौषधालयं मेनिरे, यतस्तैरेतत् पठितमासीद् यत्-प्राचीना हिन्दवः सूर्य्यघर्मे स्थित्वा तम् असपर्य्यन् ‡ तेन ते केवलं नीरोगा एव न, प्रत्युत दीर्घजीविनोपि बभूवुः। इत्थं सूर्य्ये रोगनाशनीं शक्तिं प्रमाय डाक्टरास्तस्माद् रोगदूरीकरणं व्यमृशन्। तत्र तेषां साफल्यमपि जातम्। वेदानामनुवादो य आङ्गलभाषायां सम्पन्नः; तेनापि सूर्य्यविषये प्रकाशस्तैः प्राप्तः। वेदे सूर्य्यः 'सूर्य आत्मा जगतस्तस्थुषश्च'(ऋ० १।११५।१; यजुः० ७।४२;

---

* उल्लाघयितुम्--स्वस्थीकर्तुम्। †पाययतेर्लुङि। × अबिभरुः, बिभर्तेर्लङि झौ। = रुग्णाः सूर्य्यस्नानं कारिताः। अत्र प्रयोज्यकर्म्मणि निष्ठा। ‡ असपर्य्यन्--अपूजयन्।

अथर्व० १३।२।३५) इति संसारस्य आत्मा वर्णितः [नमोऽर्थ-परिवर्तनकारिभ्यः ! ]। एतदपि तत्र लिखितं यद्--ये सूर्य्यप्रकाशे किञ्चित्कालं कार्य्यं कुर्व्वते; ते नीरोगा दीर्घजीविनश्च तिष्ठन्ति। वेदे एकत्र एतदपि लिखितं यद्--हिरण्मयरश्मिमालोपेतः सूर्यः पृथिव्याकाशयोर्मध्ये सञ्चरन् याति, अन्धकारेण सहैव रोगानपि नाशयति। एतेन सिद्धं यद्—वेदस्यैव सङ्केतेन डाक्तरैः सूर्य्यद्वारा रोगनाशकोपायाः प्राप्ताः, साफल्यं च लब्धम्।

एवं सूर्य्यसम्बन्ध्युक्तज्ञानातिरिक्तं संसारः सूर्य्यविषयेऽन्यत् किमपि ज्ञातुं न प्रबभूव। हर्षस्य विषयो यद्---योरुपीयविज्ञानेन सूर्य्यस्य विषये ईदृग्-गवेषणा अकारि, या संसारकृते नवीना। तदीया गवेषणाऽत्र व्याख्यायते। उदयमानस्य सूर्य्यस्याभिमुखमक्षिणी निमील्य मुखं च विवृत्य पञ्चकलापर्य्यन्तं स्थितिः स्वास्थ्य-वर्द्धिकेति डाक्तराणां मतम्।

सूर्य्य एकोऽग्निगोलकः किञ्चित्समयपर्य्यन्तं स शीतलो भविष्यति, इदं कथनं मूर्खतैकफलकम्। वस्तुतः सूर्य्य एका प्रहेलिका। विज्ञानेन निरचायि* यद्--असौ समस्ततत्त्वानां सागरः। सूर्य्ये केवलमन्धकारस्य रोगनाशनस्य च किरणा न, प्रत्युताऽन्यदपि किञ्चिद् विद्यते जगदविज्ञातम्। विज्ञानेन सूर्य्ये चत्वारो नवीनगुणा अनुसंहिताः। जीवनशक्तिप्रदायिनो मारण-शक्तिमन्तश्चापि किरणाः सूर्ये विद्यमानाः। एतदतिरिक्तं सुप्रकृते-र्दुष्प्रकृतेश्चापि किरणाः सूर्य्यात् प्राप्यन्ते। विज्ञानेन विज्ञातं यत्—सर्व्वः संसारः किरणमयः। मनुष्योऽपि कतिपयकिरणानां समुच्चय-मात्रम्। एतावदेव न, किन्तु समस्तो भूगोलः किरणानां लहरीषु नरीनृत्यते। समस्ता सृष्टिः किरणैर्निर्म्मिता, किरणेषु च तिष्ठति। अस्माकं पृथ्वी, अस्माकं चन्द्रोऽस्माकं तारकाश्च सूर्य्यस्य किरणेषु कृतस्थितयः।

* निरचायि। निरुपसृष्टाच्चिनोतेः कर्मणि लुङ्।

सूर्य्यस्य साहाय्येन विज्ञानेन द्वौ आविष्कारौ विषयेऽस्मिन् कृतौ। एकमीदृग् यन्त्रं निर्म्मितं यद्--मृत्युयन्त्रनाम्ना कथयितुमर्हम्। तस्मिन् सूर्य्यस्य मारकाःकिरणाः सङ्गृह्यन्ते। 'बेतार का तार' नामकयन्त्रस्य आविष्कारकेण मिस्टरमारकोनीनामकेन 'मृत्युकिरण'स्य आविष्कारःकृतः। मृत्युकिरणपतनादेव शीघ्रं धावन् मरुत्तरस्तिष्ठति। यस्मिन् वस्तुनि मृत्युकिरणः क्षिप्यते; स तद् दग्ध्वा भस्मसात् करोति। मृत्युकिरणद्वारा अनेकवायुयानानि अनाश्यन्त, शतशो ग्रामा दग्धाः सहस्रशो जना हताः। मृत्युकिरणे सर्व्वसंहारकशक्तिः। भविष्यन्महायुद्धेषु मृत्युकिरणेन युद्धं भवेत्। यदि किमपि ईदृग् यन्त्रं निर्म्मीयेत यत्—सूर्य्यस्य मारकशक्तेरेककोटितमभागे केवलं त्रिंशतिभागान् समाकर्षेत्; तर्हि एकेनैव दिनेन समस्तसंसारस्य महाप्रलयःकर्तुं शक्यः।

वर्त्तमानानि मारकयन्त्राणि सूर्य्याद् मृत्युतत्त्वमत्यन्ताल्पमात्रायां संगृह्णन्ति। परन्तु आशास्यते यद्—भविष्यत्कालस्य मृत्युयन्त्राणि अधिकमृत्युतत्त्वमाक्रष्टुं शक्नुयुः। तदा असि—भुशुण्डी-शतघ्नी-गुडकविषाक्तवायुप्रभृतिसमस्तमारकपदार्थानां बहिष्कारः सम्भवेत्। उक्तयन्त्रं विद्युद्वर्त्तिका-(बैट्री) सदृशाऽऽकारम्। 'बटन' नमनेन मृत्युकिरण उत्पद्यते। यत्र स किरणःपतति; तत्रैव सर्व्वनाश उपतिष्ठते। अतो मृत्युशक्तेः सम्पादने विज्ञानं सूर्य्यस्य अधमर्णम्।

सूर्य्यस्य जीवनशक्त्या यद् यन्त्रं निर्म्मास्यते; तन्नाम भविष्यति 'अमर-किरणः' इति। 'अमर-किरण'स्य यन्त्रं मिस्टरक्काटलनामक एको वैज्ञानिको निर्म्मिमीते। तदीया घोषणेयम्, यद्—अमर-किरणद्वारा फलिनो वृक्षाः सहस्राणि वर्षाणि फलं दातारः स्युः। अमर-किरणद्वारा मनुष्यो लक्षवर्षाणि नवयुवकः स्थास्यति। मृत्यू* रोगाश्च तदभिमुखतोऽपसरिष्यन्ति। उक्तवैज्ञानिकेन कथितं यद्—मत्स्यान् मक्षिकाश्च हत्वा पुनस्तदुज्जीवनं कर्तुं सक्षमा

*मृत्यू रोगाश्च। 'रो रि' 'ढ्रलोपे'।

अभूम 'अमर-किरण' द्वारा। अस्माकं कार्य्यं प्रवर्त्तमानम्। एतदमर-यन्त्रस्य लक्ष्यं सौरजीवनकिरणानां सम्पादनमेव।

अमेरिकाया एकेन विज्ञानाध्यापकेन सूर्य्यस्य साहाय्येन एकमीदृशं यन्त्रं निर्म्मितम्, यदीयाऽऽकारः सूचीसदृशः। तद्द्वारा छल-कपट-मिथ्याप्रतारणाऽन्यायाऽत्याचारपाखण्डादिदुःखप्रदरोगाणां चिकित्सा क्रियते। अमेरिकाया न्यायाधीशैस्तु तस्याः सूचिकाया उपयोगोऽपि प्रारब्धः। अपराधिनो हस्ते यदा तत्सूचिकावेधनं (इन्जैक्शन) क्रियते; तदैव स सत्यं वदति। असत्यच्छलकपटप्रतारणस्य यदैव सङ्कल्पं करोत्यपराधी, तदैव तदीयजिह्वा स्वयं संव्रियते। वाक्कीलाः, प्रतिनिधयः, साक्षिणः, दायलाः (दलाल) च तया सूचिकया क्षुभ्यन्ति। यतस्तदीयमिथ्यात्वस्य नाऽधुना स्थितःऽऽवश्यकता। अद्यापि अयमाविष्कारः पूर्णतां न प्राप्तः। पूर्णत्वे सति अध्यापका अपि इमां सूचिकामुपयोक्ष्यन्ते। व्यभिचारिण्यः स्त्रियोऽस्याः सूचिकाया जुगुप्सिष्यन्ते।

अमेरिकायामेकः पतिः स्वस्त्रियं पप्रच्छ यत्--त्वं केन केनाऽसि उपयुक्तेति ?। सा उवाच--भवदतिरिक्तं कमपि अहं न वेद्मि। पत्युर्मित्त्रमासीद् एको न्यायाधीशः; स तस्मात् सत्यकिरणयन्त्रमानैषीत्। भुजे यदैव तत्सूचिकया वेधः कृतः; तदैव सा स्त्री वर्णयामास यत् सा अद्यावधि सप्तभिरुपपतिभी + रेमे। अष्टमेन सह वार्त्तालाप प्रारब्धोऽस्ति। पतिरपृच्छद् यत्--त्वया स्वमुखतो द्वेधा वर्णनं कुतः कृतम् ? साऽब्रवीद् यत् सत्यकिरणसूचिकायाः प्रागहं प्रत्यायं यत्--सर्व्वत्र मिथ्यैव मिथ्या। सत्यनामकः कोपि पदार्थो नास्ति क्वापि। सत्यमहं कविकल्पनाममंसि। स्त्रीणामस्माकमनृतेन सह महान् स्नेहः। परन्तु सत्यसूचिकावेधने एवाऽहं प्रत्येमि यद्--असत्यं किमपि न वस्तु। अहमिदं न प्रत्याय यत्--सत्यं कथं न वदितव्यम्। कल्प्यताम्--मदीयसत्यं श्रुत्वा श्रीमान् अप्रसन्नोऽजनि, मां च अदण्डयत। तदुत्तरं मया स्वकृताय क्षमायाच्ञा*

+ उपपतिभी रेमे 'ढ्रलोपे' दीर्घः। *याच्ञा। नङ्, श्चुत्वम्। याञ्चा-इति तु न युक्तम्।

  

कृता । भविष्यत्कृते च तदभावप्रतिज्ञा कृता । मम सुधारो भविष्यति। श्रीमति च प्रेम उत्पत्स्यते । तात्पर्य्यमिदं यत्-असत्यसूचिकया सत्यस्य तीव्रप्रकाशः प्रक्षेप्सीयते, असत्यान्धकारश्च नश्यति ।

सत्यस्य स प्रकाशः केवलं सूर्य्यविज्ञानेन प्राप्तः । अद्यापि एतदाद्याविष्कारे त्रुटिरस्ति । आशास्यते यत्-कालान्तरे अयमाविष्कारो व्यापको भवेत् । तदा सत्ययुगमागन्ता । तस्मिन् सत्ययुगे जनोऽमरतां स्पर्द्धयति, एकमात्रं सत्यं च वदिष्यति । इदमस्माकमालपितं सूर्य्यस्य कृपायां निर्भरम् । यदि सूर्य्योऽनुग्रहीष्यति †; तर्हि इदं सत्ययुगमपि द्रष्टुं ‡ शक्यम् ।

परुद् ( गतवर्षे ) उत्तरीयाऽमेरिकाया ग्रेनलेण्डनामकस्थाने माणिक्यखनेः ( दफ़ीना ) खननं प्रारब्धम्, खनने सति माणिक्यजातं तु न लब्धम्, किन्तु एको देवालयो लब्धः । तस्मिन् सूर्य्यस्य एका मूर्त्तिरस्ति, या भासुरप्रस्तरैर्निर्म्मिता । सूर्य्यसमक्षमेको हिन्दुर्दण्डवत् प्रणामं करोति । समीपे एवाऽग्नौ धूम उत्तिष्ठति, येन प्रतीयते यदत्र किमपि सुगन्धितवस्तु निक्षिप्तम् । इतस्ततः पुष्पाण्यपि स्थापितानि । एतत् सर्व्वं दृश्यं प्रस्तरैर्निर्म्मितम् ।

एतद्विचित्रसूर्यमन्दिरस्य प्राप्त्या ज्ञातं यत् कस्मिंश्चिद् युगे हिन्दूनां चक्रवर्त्तिराज्यम् अमेरिकापर्य्यन्तं प्रसृतमासीत । एतदतिरिक्तमिदपि प्रतीतं यद्—हिन्दूनां विश्वास आसीद् यत्-सूर्य्यः प्रसन्न×क्रुद्धश्चापि भवति। यदि ईदृशो विचारो नाऽभविष्यत्, तर्हि एको हिन्दुस्तस्य पूजां कथमकरिष्यत् , प्रणामं वा कथमकरिष्यत् ? । विषयममुमादाय विज्ञानसंसारे क्रान्तिरुत्पन्ना । मिस्टरजार्जनामकेन केनचिद् विज्ञानाध्यापकेन एतत् परीक्षितं यत्-सूर्य्ये पाशक्तिर्व्वर्त्तते नो वा ? । वयं सूर्य्ये समस्ततत्त्वानां तु सत्ताममन्यामहि; परमेतन्नावाकल्पयाम यत्--सूर्य्ये प्रसन्नताऽप्रसन्नतयोस्तत्त्वमपि ज्ञातमासीत् । अमेरिकाप्राप्तसूर्य्यमन्दिरेण अस्माकं हिन्दूनां सूर्य्यपूजायां निश्चयो जातः । मि० जार्जेन क्षिन्तितं यद्-

† अनुग्रहीष्यति । अत्र न सम्प्रसारणप्राप्तिः ।

‡ दृष्टुं । 'सृजिदृशोः' इति अम् ।

हिन्दूनां सूर्य्योपासना किं मूर्खतापूर्णा आसीद्, वास्तविकता-पूर्णा वा ?।

एतदीया रोचकपरीक्षाऽजनि। मईमास आसीत्। पूर्णमध्याह्ने मि० जार्ज × केवलं पादयामं ( पायजामा) धृत्वा नग्नशरीरो घर्म्मे स्थितः। पञ्च 'मिनट' पर्य्यन्तं सूर्य्यसमक्षे स्थित्वा स प्रकोष्ठं प्राप्तः। एकयन्त्रद्वारा च स्वशरीरतापमानं ददर्श त्रिडिग्री-पर्य्यन्तं ज्वरो जात आसीत्। अन्यदा तेन पुष्पफलानामुपहारः सज्जीकृतः, अग्नौ च धूपो ज्वालितः। ततः स पूर्णमध्याह्ने नग्नशरीरो घर्म्मं प्राप्तः। तेन सूर्य्याभिमुखं पुष्पाणि अर्पितानि, फलानि च। ततो हस्तौ संयोज्य प्रणाम× कृतः। यदाऽसौ स्वप्रकोष्ठं प्राप्तः; तर्हि घटिकायन्त्रेण प्रतीतं यदद्य स एकादशमिनटपर्य्यन्तं सूर्य्यसम्मुखे स्थितः। शीतोष्णता-मापकयन्त्रेण सोऽजानाद् यद्-अद्य पारद उष्णतास्थाने नास्ति, किन्तु शीतलत्वाभिमुखोऽस्ति।

एतेन सिद्धं यत् सूर्य्ये प्रसन्नताऽप्रन्नतयोस्तत्त्वमपि विद्यमानम्। वैज्ञानिकानां 'सूर्य्यः केवलमाग्नेयगोलक एव जड-पदार्थश्च' इति प्राक्तनसिद्धान्तोऽदूरदर्शितापूर्णः सिद्धः।

सूर्य्यं सर्व्वतत्त्वसञ्चालकमनुभवशीलं च मत्वा अद्य यूरोपदेशः प्रसन्नः। इदानीं यूरोपीयविज्ञानजगति सूर्य्योपासना-प्रभावो जातः। तैश्च तद्गुणा इत्थं विभाविता यत् प्रत्येकपदार्थे सूर्य्यस्य कतिपयकिरणाः सन्ति। पय×पायकवत् सूर्य्ये विपरीत-तत्त्वान्यपि सन्ति। मृत्योः स सागरः, जीवनस्यापि स सागरः। सूर्य्ये कृपाया अकृपायाश्च शक्तिरस्ति। सूर्य्यद्वारा जीवात्मनां+ गमनागमनं भवति। सुप्रकृतिदुष्प्रकृत्योः प्रेरकोपि सूर्य्यः। अत एव प्रसिद्धगायत्रीमन्त्रेपि 'धियो यो नः प्रचोदयात्' (यजुः ३।३५ ) स बुद्धिप्रेरको मतः।

कियती लज्जाया वार्त्ता यद् यूरोपदेशः सूर्योपासनायां प्रवर्द्ध-मानोऽस्ति, आर्य्यावर्त्तश्च सतीमपि स्वधर्म्मे सूर्य्योपासनां विस्मरन्

+ जीवात्मनाम्। अत्र दीर्घप्राप्तिर्न।

वर्त्तते। प्रत्युत सूर्य्योपासनाप्रदर्शकवेदमन्त्राणामर्थेषु परिवर्त्तनानि क्रियन्ते बत !!! आशासे, अत्र तद्विस्मरणे निमित्तीभूतानां जनानामपि प्रणिधानं प्राप्स्यतीति।

---

## श्रीगान्धी

( ले०--कविराजरमाकान्तभारद्वाजः, शास्त्री आ० वि० जम्मू )

पञ्चत्रिंशत्कोट्यधिकानां भारताभिजनानां पारतन्त्र्यापदुद्धरणैकधृतव्रतं 'कांग्रेस' महासभासूत्रधारं को नाम न वेत्ति महात्मोपपदसमलङ्कृतनामधेयं श्रीमोहनदास-कर्मचन्द-गान्धिनम् ? न केवलं भारते, अपि तु निखिलेऽपि भूमण्डले तदीयमभिधानं सादरं सोल्लासञ्च संस्मर्य्यते, भारते तु मन्ये जन्तवो जडाश्चापि तन्माहात्म्यस्तवे विन्दन्ति परां काष्ठामाह्लादस्य; का कथा चेतनावतो मानववृन्दस्य ? राजनीतिकसभासमारोहेषु अपरिसंख्येयजनसम्मर्दाकुलितेषु सामोदकलकण्ठसहस्रैरारब्धे किल तस्य जयघोषे प्रावृड्घनगर्जितेनेव किलामन्दानन्दसन्ततिवश्यतामातनोति जनता। दिगम्बरे लघीयसि च श्रीगान्धिनो वपुषि कोऽप्यपारः करुणाम्भोनिधिः समन्वेतीति महदाश्चर्यम्। कथं नाम प्रभवेदियं वराकी काष्ठमयी लेखनी तादृङ्महाभागस्यापारं गुणगरिमाणमागणयितुम्।

परं संस्कृतपण्डितेषु प्रायेण गान्धिनमधिकृत्य विलोक्यते किमप्यनल्पमज्ञानम्। तद्विषये दृक्पथमवतरति तेषु क्वापि घृणाग्निपरिप्लुष्टा अवहेलामयी प्रवृत्तिः। केचित्तु सुरभारतीनिष्णाताः "अयं गान्धी वर्णाश्रमधर्मोद्ध्वंसपरायणः ख्रिष्टीयमतप्रचारकः श्रौतस्मार्तधर्ममूलोच्छेदबद्धपरिकरो महादुर्मतिः' इति जल्पन्तोऽस्माभिः सन्ति श्रुतचराः। अतस्तेषां पण्डितपदमलङ्कुर्वतामप्यस्मिन्विषयेऽज्ञानतिमिराच्छन्नधियां तादृशमज्ञानमन्यथाज्ञानञ्च यथा निरस्तं स्यादित्युद्दिश्य अद्यात्र किमपि विवक्षामः।

परायत्तो हि जनः सर्वासां किल भवत्यास्पदमापदाम्। विदितैव विपश्चितां "यज्जीवति तन्मरणं, यन्मरणं सोऽस्य विश्रामः" इतीयं नयपारदृश्वनां सूक्तिः पराधीनपरकेति। दास्यपङ्ककलङ्कितात्मनो हि जीवनवृत्त्यै दुर्निवारं स्वोदरपूरणमात्रमपि तावद्दुष्करं; का कथा धर्माचरणस्य। 'नास्ति धर्मो हि दासानाम' (slave people have no religion) इत्युद्घुष्यते पाश्चात्यविपश्चिद्भिः। साम्प्रतमनुभूयमाना सनातनवैदिकधर्मदुरवस्था किलास्मत्पारतन्त्र्यहेतुकैवेति नात्र कस्यापि विमतेरवकाशः। इतीत्थमिमां सकलसद्गुणजननीं भारतभुवं कलुषयति महाभयानके पारवश्यकलिमले, यो वै मनस्वी समस्तमपि लौकिकाभ्युदयमवगणय्य निराकृत्य चातुलसम्पदाशामनादृत्य सुलभामपि परमैश्वर्य्यपरम्परां समवजित्य विलासलालसामहर्निशं जन्मभुवो दुरन्तपारतन्त्र्यनिगडानघाताय कृतश्रमः, स किं धर्मस्य विनाशको रक्षको वेति नितरामल्पधीरप्यलं सुखेन विवेक्तुम्। निगमागमोपबृंहितः संन्यासधर्मो ननु यादृश्या त्रिकालदुरवापया निष्ठया परिपाल्यते श्रीगान्धिना, समुदाहरन्तु नाम तद्विरोधिनस्तादृशं कंचिदपरं जनम्। नयन्तु नाम प्राकाश्यं तादृशमद्भुतं लोकोत्तरञ्च जनहितामृतसावितान्तःकरणं सर्वजनसंस्तुतमरिभिरपि कृतादरम्।

'सर्वेऽपि मुसलिमक्रिश्चियनप्रभृतयो धर्माः सत्यमूलकाः लोकहितैकोद्देश्याः सन्मार्गमेवोपदिशन्ति, इत्यादरणीयास्सर्वेऽपि ते' इति सम्मतमस्य श्रीगान्धिनः। 'परधर्मगर्हणपूर्वकं केवलं स्वधर्मस्यैवोपादेयतामुपदिशतां धर्मवणिजामुपदेशः किल हेयः' इति च सम्मनुते श्रीगान्धी। इतीदमेव चेत्तदीयस्य वर्णाश्रमविरोधस्य प्रमाणम्, तर्हि मौनमेवात्र साधीयो विपश्चिताम्। अन्यधर्मनिन्दा किल कस्यापि परमदारुणस्यानर्थसङ्घातस्य हेतुरिति तावदपरोक्षं विश्वेतिहासविदुषाम्। धर्मकृतो विरोध एव साम्प्रतं स्वराज्यलाभे बलिष्ठान्तरायभूत इति किन्नोपकृतं स्यात्तं विरोधं परिहरता ?

अथ अस्पृश्यत्वेन परिगणितानां शूद्राणामन्त्यजानाञ्च

स्पृश्यतामुपदिशत्ययं श्रीगान्धी। तदिदमेव वर्णाश्रमधर्मध्वंसकारणतां गच्छतीति परित्यक्तस्ववर्णधर्मैरुद्गीयते निस्त्रपैर्गान्धिविरोधिभिः। एतैरेव द्विजातिपदवीमलङ्कुर्वाणैस्सप्तकोट्यधिका मानवा अस्पृश्यकोटिसन्निवेशपूर्वकं दुस्तरे विपदम्बुधौ निमज्जिता इति को नाम सचक्षुष्को नाङ्गीकुर्वीत। तेषामस्पृश्यतासमर्थनपराणि तावदसंख्येयान्युपलभ्यन्ते स्मार्तवचनानि। तेन चागमप्रमाणाधारतः परिपोषमानीतेयं किलास्पृश्यतामर्यादा प्रत्यक्षां परमानिष्टजननीमस्पृश्यजनदुरवस्थां कथमुपेक्षते? ऋतेऽस्पृश्यतानिवारणात्को नामोपायः एतावत्प्रभूतसंख्यावतो जननिवहस्यानल्पकष्टपरम्परातो रक्षणाय? मुसलिमक्रिश्चियनप्रमुखेषु धर्मान्तरेषु तावदस्पृश्यजनानां प्रवेशलालसापि किल प्रोक्तकष्टमूलिकैवेति। किं साप्युपेक्षणार्हा? इत्येतादृशानामसंख्यानां प्रश्नानामुत्तरमदत्त्वैव केवलं शास्त्रवचनबलादेव कथं नाम जगतीह मान्यतां लभेत किलेयमस्पृश्यता? नूनमयं शुष्कः प्रत्यक्षविरोधदोषदूषितः प्रलापो नैव कथमप्यादरभाक्। इति सत्यपि प्रचुरवक्तव्ये विस्तरभिया विषयान्तरापातप्रसङ्गाच्च विरमामोऽस्मिन्विषये।

किञ्चाहिंसायां परा श्रद्धास्य श्रीगान्धिनः। अन्येऽपि सत्यब्रह्मचर्यादयो धर्मा अनेन प्रचार्यन्ते। महति वार्द्धक्येऽपि कथमिव भारतभुवो हिताय प्रतिक्षणं प्रयत्नवानसौ इति न परोक्षं तद्विदाम्। देशान्तरेष्वपि तदीया लोकोत्तरा वैराग्यसम्पत्सहस्रशः संस्तूयते लोकैः। जगति बलिष्ठतमो ब्रिटेनसिंहोऽपि तदीयाद्भुतगुणगौरवमाहात्म्यं स्मारं स्मारं बिभेतीव तस्मात्। यादृशी तदीया परमात्मनि निष्ठा सा प्राचीनेषु मुनिष्वपि दुर्लभासीत्। निर्भीकतायामसौ मत्तेभकुम्भोत्पाटनपटीयसो विक्रमार्जितराज्यान् केसरिणोऽपि न्यक्करोति।

सोऽयं कथमिव नाभिवन्द्यो लोकैर्विशेषतश्च भारताभिजनैरिति सूक्तिरियं नः स्मारयति--

वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः।
करणं परोपकरणं येषां केषां न ते वन्द्याः॥

# (भुवनेऽस्मिन् कवयो निरङ्कुशाः)

(ले० विद्यावारिधिः पं० शिवनाथशास्त्री, साहित्यभूषणः)

इहि विदग्धवैदग्ध्यशून्ये, अनैसर्गसत्ये केवलं प्रथमप्रमाणप्रमेये चार्वाकवाकोवाक्यविकल्पे चाक्षुष्ये भूतग्रामग्रामे भवे को हि नाम जनः पित्तोपहत इव शशिधवलं शङ्खं पीतं तिमिरावृतदृष्टिर्निसर्गबन्धनमुक्तं मन्यते स्वात्मानम्। मयेदं कृतमहमेवं करोमि करिष्यामि च इत्यहन्तालेपलिप्तो महोपनिषच्छासनापरिचितस्तत्संस्कारासंस्कृतो वा मूढं स्वात्मानं लोके विदुषां धुरीणं, लक्ष्मीवतां श्रेष्ठं, कलावतां प्रथमं, नीतिजुषां पुरोवर्तिनं जानाति स्वयं ज्ञपयति चान्यानित्यहो परा काष्ठा मिथ्यागर्वस्य विजृम्भितमज्ञानस्य च। निर्विवादसिद्धसिद्धान्तभूतमिदं यत् सरस्वतीप्रवाहे त्रुडितो न कोऽपि स्यात्पारगामी विना जन्मान्तरीयसुकृतपरिपाकफललभ्यदेशिकप्रसादम्।

लक्ष्मीप्रवाहस्यापि तथैव नान्तरीयकत्वं यत् कथंकथं न भूपतयः स्वराज्यसंस्थापनाय समराङ्गणसूत्रधाराः समभूवन्। इति ह्यैतिह्यं परमं प्रमाणम्। दारिद्र्यानलनिर्वापणार्थमागतान् धनजलचातकान् त्यक्तस्वगृहग्रामान् सेवया भटवृत्तिलग्नान् स्वमनोरथपूर्त्यै श्वमारं न मारयामासुः। स्वजयमरीचिकाभ्रान्ताः संख्ये कोट्यर्बुदख्यातिगां न निमज्जयामासुर्जले लक्ष्मीं, गार्हस्थ्यपोषणासमर्था लोकाचारविचारचातुरीपतिता अक्षमाः पुरुषकाः संस्कारादिभिः स्वात्मीकृतां वधूमिव जनसमक्षं पितृगृहे प्रतिप्रेषयन्तो न च लज्जन्ते प्रजाप्रसूं समुद्रसन्ततिं तत्रैव प्रत्यर्पयितुम्। पारतन्त्र्यगुणाबद्धो मनुष्यो राजा धनी विद्वान्वा पदमेकमपि न स्वच्छन्दचारी इति भूमिवाहः।

अन्तरिक्षवाहे च कालपारतन्त्र्यात्सूर्यादयो द्युचरास्तेजस्विनोऽपि भ्रमामा यावद्द्रव्यजातं प्रकाशनसमर्था मनागपि 'भीषाऽस्माद्वातः पवते' इत्यादिश्रुतिप्रतिपादितनीत्या न निरङ्कुशाः। ब्रह्मलोकपर्यन्तस्थितिभाजोऽपि कालचक्रविधेया ईश्वराः पराज्ञाबद्धाञ्जलिपुटाः स्वनेम्यन्तरे स्थितिमन्तः पदमेकं स्वेच्छया विचलितुमसम-

र्थः। अपि च परायत्तत्वसद्भाव एव भवस्तेनेश्वरास्तित्ववादोऽपि वादर्दुर्निवारो वावदूकवाक्कीलनकरः।

यथा हि लोके तावद्राज्यप्रणाली ग्रामाध्यक्षतो राजपर्यन्तमधिकारपरम्परया उत्तरोत्तराधिकारप्रबला पूर्णमस्वायत्ता वरीवर्ति नास्त्यत्रापह्नवः। राज्ञतश्च चक्रवर्तिप्रभृति ततश्चोत्तरोत्तरवृद्ध्या उपर्युपरि लोकेशपर्यन्तं यथापूर्वमकल्पयत्तथैव नीतिः। एवं ह विचारविचक्षणाः ज्ञानविज्ञानशिक्षादीक्षाबद्धकङ्कणा विशिष्टज्ञानप्रकाशविनष्टतमःपटलाः स्वयं परिशीलयित्वा लोकमप्यागमसिद्धसिद्धान्तेन विदितवेदितव्यं चक्रुर्यन्न लोकचतुर्दशके विनैकं परब्रह्म पूर्णस्वातन्त्र्यं कस्यापि भौतिकस्य।

किंच साहित्यमर्मविदां वरिष्ठैः काश्मीरैः भोजराजकालमलङ्कुर्वद्भिः श्रीमम्मटभट्टाचार्यपादैः—"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्। नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥" इतिमङ्गलकारिकयैव ब्रह्मनिर्मितिपारतन्त्र्यविनाकृत वैलक्षण्यं कविकर्मणि सस्फुटं वर्णितम्। साहित्यरसास्वादव्यसनलोलुपैः सुवासनावासितान्तःकरणैः प्राज्ञैर्दृश्यते च, यत्कवयो नियतिनियोगाच्छ्रावणविकासां लीलानृत्यमनोरमां मालतीं मेघतडित्सौदामिनीधाम्नि माधवे एवानियमितया स्वशक्त्या प्रभवन्ति विकासयितुम्। किंवा नाम दुःशकं कवीनां समये। तथा च कविसमयः—

स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलः सीधुगण्डूषसेका-
त्पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम्।
मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवाता-
च्चूतो गीतान्नमेरुर्विकसति च पुरोनर्तनात्कर्णिकारः॥

सुखदुःखात्मकं नियतिनियमितं कविः सुखात्मकमेव वर्णयितुं क्षमः। अपरं च घृणादिजुगुप्सितं वस्तु स्वकल्पितरूपकोपमादिभिः 'मांसपिण्डौ कनककलशौ, श्लेष्मागारं चन्द्रं, क्लिन्न-

प्रदेशं करिवरकरस्पर्धि' इति केवलाह्लादजनकमेव निरूप्य सम्पादयन्ति । साहित्यसागरपर्यालोचका एव साहित्य-मणीनवाप्तुकामाः प्रभवन्ति गूढमपि प्रकाशयितुं साहित्यचन्द्रिका-क्षमया । अतो यद्यस्ति लोके कोऽपि स्ववश्यः स्वतन्त्रश्च स केवलं कविरेव । यतः कविप्रौढोक्तिसिद्धवस्तुनि प्रसृतिः स्वातन्त्र्यस्य करामलकायते ।

नास्ति खलु कविसूक्तिवैचित्र्योद्भवमेव स्वातन्त्र्यं, अपि तु देशकालमर्यादाधर्मसंस्कृत्यादिदुष्टमविदग्धवाक्स्खलितमपि कीर्ति-कारणम् । तत्तद्दोषजातमवालोच्यापि तत्समुद्बोधने अन्येषां वाक्स्तम्भात् । अतः के नाम वयमक्षुण्णमार्गपथिकाः । परं स्वनेम्यन्तरे गच्छन्पान्थस्तु यत्र यत्र उपत्यकां, वृक्षं, लोष्ठं, पाषाणं, निम्नोन्नतं वा क्षतकरं क्षितिस्थानं मार्गे पश्यति, सर्वं तदवधार्य पत्रेषु सन्निबद्धं वा कृत्वा सर्वानुपान्थसमवबोधनाय पुरातत्त्वोद्धारणविकासं करोत्येव । युक्तं चैतदद्यतननीतिभाजां प्रत्नतत्त्वविशारदानां, यद्वर्तमाननीतिरीतिचातुरीचणास्ते शास्त्र-साहित्यं पर्यालोचयन्तो यत्र यत्र वालंकारिकाभिर्बद्धां नियतिकृतनियमरहितां स्वातन्त्र्यप्रतिभां ते प्रतिभावयेयुः, यथावदन्यसाहित्यिकसमवबोधाय च प्रकाशयेयुर्नियतमन्यथा साहित्यविकासस्य सङ्कोचसंभवः । नैष दोषो न वाक्चापल्यं न विशृङ्खलता न चाभिमानभूमिः प्रत्युत सुरसरस्वतीसमुद्धरणैकहेतु-रिति पुरातत्त्वसंरक्षकाग्रगण्यानां राद्धान्त इति विद्वांसो विदाङ्कुर्वन्तु ।

प्रकृते च कविस्वातन्त्र्ये सिंहावलोकनेन दिङ्मात्रमिदम् । तथाहि—'बाणोच्छिष्टं जगत्सर्वम्' इत्यादि सुभाषितोक्त्या कवि-प्रथमकक्ष्यावर्तमानाः सप्तमशतकपूर्वार्धकालीना हर्षवर्धनस्य कान्यकुब्जाधिपतेः सभाशिरोमणयो बाणभट्टपादाः कवीनां स्वातन्त्र्यं स्वकृतकादम्बरीपूर्वभागे यत्र तत्र स्फुटं निरूपयाञ्चक्रुः ।

  

तत एव कतिपयानंशान् सर्वसाधारणासाधारणजनजिज्ञासया सुरभारतीविधेयोऽयं जनः संक्षेपेणैवोपहारीकरोति । कविना शुकनासोपदेशप्रघट्टके गुर्वादरं बहूपदिश्यापि आचार्यगृहनिर्गमनकाले कथमाचार्यगृहाद्राजगृहमानीत इत्यपृष्ट्वैव विस्मारितसाधुचरितश्चन्द्रापीडः । तथा राजगृहमुपगतं तं राजभवनस्थकिन्नरयुगलकपरिचयवन्तं च पुनर्मृगयाप्रघट्टके किरातजनपदे विश्रामार्थं संस्थाप्य 'अपूर्वदर्शनतया समुपजातकुतूहलः' इत्यादिना शैलशिखरादवतीर्णे किन्नरयुगले पूर्वपरिचयरहितमिव कृतग्रहणोत्सुकं किं वा निबद्धम् । पुण्डरीकोत्पत्तिव्याख्यानावसरे तदुत्पत्तिं निगदताऽपूर्वयाऽऽगमविरुद्धया च युक्त्या श्वेतकेतु-श्रीलक्ष्मीभ्यां पुण्डरीकोत्पत्तिरुपवर्णितेति किम् । एवं कपिञ्जलपरिदेवनप्रघट्टके 'हा सरस्वति विधवासि' इत्यत्र सरस्वतीविषये विधवाशब्दप्रयोगाद् द्विजन्मजन्मानादृता रीतिः किमनुसृता । महाश्वेता-चन्द्रापीडयोः कादम्बरीश्रीमण्डपे गतयोस्तमालिकया शुकस्य संकरीकरणप्रयोगः स्मृतिविरुद्धोऽपूर्वोऽलौकिकश्च इत्यपि कथं समुपवर्णितः । तत्रैव 'दैवतैरपि विलुप्यमानसौभाग्यामिव सर्वशः' इत्यत्राप्रयुक्तदोषदुष्टमपि किं स्वीकृतम् ।

इत्थं दिङ्मात्रेणैव केषुचिदंशेषु महाकवेरस्य स्वातन्त्र्यं चित्रितं, सूक्ष्मदर्शिभिरपरं पुनरुद्धारनयेन अन्यत्रत्यं स्वाच्छन्द्यं कृपया यथावसरं प्रकाशनीयं यथा सर्वं सम्यगवबोद्धुं शक्नुयुरितरे । अत्र लेखकस्य लेखनीसंचालने कवीनां पूर्णस्वातन्त्र्यप्रस्तावनिरूपणं प्रयोजनमेवासीत् । तेन पूर्वैः "भुवनेऽस्मिन् कवयो निरङ्कुशाः" इति यत्सुभाषितं, तत्सर्वथा संगतमेवेति शम् ।

———

# हृदयच्छेदः ( खण्डकाव्यम् )

( ले०--श्रीश्रुतिकान्तशास्त्री साहित्याचार्यः, एम्. ए. एम्. ओ. एल्. गुजरातनगरम् )

( प्रकाशितपूर्वादग्रे )

[ १ ]

स्वप्नेऽपि विस्मृत्य न तावदेतत्,
स्वान्ते ममार्द्राङ्गिनि ! जातु जातम् ।
हस्ताच्च्युतैवं सहसाऽसि यत् त्वं ;
हस्तौ प्रमृद्नंश्च निशामयेऽहम् ॥

[ २ ]

यदद्भुतं सम्प्रति सम्मुखं मे,
कथं तदेतद् वद वेदये त्वाम् !
न ते सनाभ्यप्रमुखान् मुखेन्दोः,
कुहू[1]स्तथाऽन्धीकुरुते यथा माम् ॥

[ ३ ]

अदृष्टपूर्वेऽत्र विषाददर्शे[2],
मनस्तमस्काण्ड-गुरुप्रकर्षे[3] ।
ख[4]वृन्दमाहृत्य हृदन्तरीक्षे,
त्वदाननेन्दुं सुहृ[5]दन्तरीक्षे[6] ॥

[ ४ ]

त्वच्चित्ररूपस्य[7] दिदृक्षयाऽहं ।
ताम्यद्धृषीकाऽसुशरीरवर्गः[8] ।
धयन् दृशा त्वामह चित्ररूपां[9]
रूप्यप्रभे ! नाऽऽत्मधियं दधामि ॥

---

१-नष्टचन्द्रकला अमावस्या कुहूः । २-शोकरूपामावस्यायाम् । ३-'विषाददर्शे' इत्यस्य विशेषणम् । ४-इन्द्रियजालम् । ५-सुहृद् + अन्तः-इतिच्छेदः । 'सुहृद् !' इति सम्बुद्धौ वैकल्पिकप्लुतत्वाभावः । ६-अन्तः + ईक्षे इतिच्छेदः । अन्तरात्मनि पश्यामीत्यर्थः । ७-चित्ररूपम् = सुन्दरशरीरम् । ८-म्लायदिन्द्रियप्राणदेहः । ९-आलिखिताम् ।

[ ५ ]

तव स्तवस्तुत्यगुणे ! गणेऽस्मत्-
सुसंस्तुतानां मम गातुमिष्टः ।
निचाय्य तत्राऽस्य रुचेरभावं,
भवामि वाचंयम एव हन्त ॥

[ ६ ]

बन्धुभ्रुवाणामिह बन्धुराऽऽस्ये[१], !
रसो न, बालाः खलु सन्ति बालाः ।
कृत्वा कथां कस्य पुरस्तवाऽथो,
भारं हृदस्तन्नु[२] तनू-करोमि[३] ॥

[ ७ ]

अन्योन्यमन्ये बहुधाऽऽलपन्तु,
स्वैरं विहारं परिशीलयन्तु ।
नक्तन्दिवञ्चाऽविरतं हसन्तु,
ध्रियेय[४] ते ध्यानपरः परन्तु ॥

[ ८ ]

कामं परीवारजनोऽस्तु भूयान्,
रत्यन्विता मे त्वयका[५]ऽभवद् भूः ।
अक्षान्तरव्रातवृते[६]ऽपि गात्रे,
सम्भासमानं जगदेकदृष्ट्या ॥

[ ९ ]

त्वया सनाथान्मम जीवनाथे !
गृहान्न निर्गन्तुमभून्मनो मे ।
वसन्तलक्ष्म्याऽनुगृहीतचूतान्,
मधुव्रतस्येव मधून्मदस्य ॥

---

१–सुमुखि ! २–'तत् नु' इतिच्छेद । ३–लघूकरोमि । ४–जीवेयम् ।
५–त्वया । ६–अन्येन्द्रियसंघातसंयुक्ते ।

[ १० ]

त्वया वियोगेऽपरभोगयोगे,
गौराङ्गि! गेहं न जिगाहिषेऽहम् ।
रङ्गोच्छ्वसी[1] वा[2] विनिवृत्तगीतिं[3],
रङ्गालयं रङ्गविलोकनोत्के! ॥

[ ११ ]

प्रविश्य वेश्मन्ययि रम्यवेशे!
यदा न पश्यामि पुरस्स्थितां त्वाम् ।
तदोदयन्ते दयिते! मदीये
चिरन्तनाश्चतेसि सुप्तभावाः ॥

[ १२ ]

क्वचिद् गृहान्तः परिहासगुप्ता,
भविष्यतीति स्फुरतीव चित्ते ।
प्रिये! प्रमादीव च मार्गयंस्त्वां,
प्रकोष्ठमेकैकमहं विलोके ॥ युग्मम् ॥

[ १३ ]

प्रवञ्च्य चौर्येण[4] गृहेचराणां,
विलोचने चारुविलोचने! हा!
शमाय तापस्य हृदो मुहूर्तं,
हृदा[5] ह्यु पासे शयिताऽऽसिते[6] ते ॥

१४

कार्याद् यदा क्लान्त उपैमि सद्म,
त्वया विना तत्र लभे न शर्म ।
विष्वक् परीवारपरीवृतोऽपि,
त्वद्दर्शनं वश्मि[7] तदा कुतोऽपि ॥

---

१–रङ्गेण उच्छ्वसितीति तथोक्तः । २–इव । ३–समाप्तगीतिकम् । ४–चौरकर्मणा, चौरवदित्यर्थः । ५–अवधार्येत्यर्थः । ६–शयनाऽऽसनस्थाने । ७–इच्छामि

[ १५ ]

एकेन पर्यङ्कसुसज्जनेऽपी-
तरेण शीताम्भ-उदञ्चनेऽपि ।
अन्येन बर्होत्कर-वीजनेऽपि,
प्रिये ! न ते भक्ति[१]-रसो लवेऽपि[२] ॥

[ १६ ]

उपानहोर्द्वारमुपाश्रितस्य
पदोः प्रघाणा[३]ऽन्तरमागतस्य ।
श्रुत्वा ध्वनिं नन्दयितुं विहस्य,
प्रत्युद्व्रजेत् का भवतीं निरस्य ॥

[ १७ ]

स्तोकाय तोषाय ममैतदेव,
स्वप्नेऽपि यत् त्वं निशि मामुपैषि ।
अह्नाय[४] किन्त्वह्नि तिरोभवन्ती,
मत्प्राणवृन्तं भिदुरं करोषि ॥

[ १८ ]

वामे ! विधिर्वामवि[५]धिर्ध्रुवं मे,
स्वप्नेऽपि विघ्नान्न निवर्तते यः ।
कर्माऽऽहतान् घ्नन् पुनरेष दग्धो
वेद प्रमोदं कमहं न वेद ॥

[ १९ ]

शतं मनीषास्त्वयि हृद्यहृद्या,
निधाय मध्ये-हृदयं शयेऽहम् ।
निमीलया[६] खेदमवाप्य भूयो,
वितन्यते भामिनि ! रङ्गभङ्गः॥

---

१–सेवा । २–पद्येऽत्र अन्त्यानुप्रासवद् आद्यानुप्रासोऽपि दर्शनीयः । ३–'प्रघाणप्रघणाऽलिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । ४–सपदि । ५–विपरीतगतिः । ६–निद्रया ।

[ २० ]

सुदुर्वचा सा मनसो विचित्रा
जगत्करी मे स्वपतस्तु शक्तिः।
निमेषमात्रं यदि जाग्रतः स्यात्
त्वदेकसर्गः सुतनु! क्रियेत ॥

[ २१ ]

अष्टापदं[1] शीलयतः[2] कदाचित्,
पश्यामि, नस्तत्र रुचिं स्मरामि।
यत्र प्रिये! ज्ञास्यति कस्त्वदन्यः,
पराजयो मे त्वदभूद् वरेण्यः॥

[ २२ ]

वृद्धा-नवोढा-तरुणीमुखाभ्यो,
गोष्ठ्यां रहः-केलिकथाः श्रुता याः।
रते रतोन्मादिनि! इन्दुकान्ते!
सङ्क्रान्तिमासां मयि ते स्मरामि॥

[ २३ ]

प्रभातयानेन गृहानुपेतो,[3]
बुभूषुरस्मीति निरीक्ष्य पत्रम्।
समुत्सुकायास्तव नेत्रयोर्या
गता निशा साऽद्य मदक्षिलग्ना॥

[ २४ ]

अवार्तमादाय[4] मुधा कदाचित्,
कदाचिदिष्टेतरभोजनानि।
पितुर्गृहान्मां त्वरयोपगन्तुं,
गतानि लब्ध्वा मम वाचिकानि॥

---

१–'चौपड़' इति भाषायां प्रसिद्धं क्रीडनकम्। २–जनान् इति शेषः। ३–गृहम्। ४–अस्वास्थ्यम्।

[ २५ ]

अहर्यदा त्वं शिशुभिस्समेता
वरोरु! आयाः खलु सन्निधौ मे।
प्रकामकामोत्कलिकाक[1]वर्षं,
बभूव[2] वर्षे ननु [3]तन्महन्मे ॥

[ २६ ]

गृहं जनन्या किल जायया वा,
लोके न केनाऽपि जनान्तरेण।
इति प्रवादं ह्युपदिश्यमानो[4]
निःश्वस्य तूष्णीं हृदि ते स्मरामि ॥

[ २७ ]

गृहीतवेदोऽपि गृहीतिवेदे[5],
पदे पदे ते पदमन्वपद्ये।
अटन्नटव्यामिव नष्टदृष्टिर्,
व्रजे[6] व्रजान्यद्य कुतोऽनवद्ये ॥

[ २८ ]

अजीजनत् प्राज्य[7]मदं समज्ञा[8],
त्वया विभज्यैव तु भुज्यमाना।
ममाधुना सा व्ययिताऽसुशक्तेः,
सुरेव वैरस्यपथं प्रपन्ना ॥

[ २९ ]

उपैति नामस्मरणाच्चणो यः,
सुदीर्घजीवी स जनो गणेयः।
इतिस्थितिं कुत्र सतीं प्रतीयां,
सती यदीयं, न सति प्रति त्वाम् ॥

---

१-कम् = सुखम्। २-स्वानुभवस्थलेऽपि काव्येषु बहुत्र लिट्प्रयोगदर्शनात् तथा प्रयोगः। ३-तद् अहः महद् बभूवेत्यन्वयः। ४-प्रवादोपदेशात् 'त्वया पुनरुपयन्तव्यम्' इति व्यज्यते। ५-गृहिणाम् इति वदः, इतिकर्तव्यताज्ञानम्—इति गृहीतिवेदः, तत्र। ६-अध्वनि। 'व्रजो गोष्ठाध्ववृन्देषु' इति कोशात्। ७-'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः। ८-कीर्त्तिः।

[ २० ]

सुदुर्वचा सा मनसो विचित्रा
जगत्करी मे स्वपतस्तु शक्तिः।
निमेषमात्रं यदि जाग्रतः स्यात्
त्वदेकसर्गः सुतनु! क्रियेत ॥

[ २१ ]

अष्टापदं[1] शीलयतः[2] कदाचित्,
पश्यामि, नस्तत्र रुचिं स्मरामि ।
यत्र प्रिये! ज्ञास्यति कस्त्वदन्यः,
पराजयो मे त्वदभूद् वरेण्यः॥

[ २२ ]

वृद्धा-नवोढा-तरुणीमुखाभ्यो,
गोष्ठ्यां रहः-केलिकथाः श्रुता याः ।
रते रतोन्मादिनि ! इन्दुकान्ते !
सङ्क्रान्तिमासां मयि ते स्मरामि ॥

[ २३ ]

प्रभातयानेन गृहा[3]नुपेतो,
बुभूषुरस्मीति निरीक्ष्य पत्रम् ।
समुत्सुकायास्तव नेत्रयोर्या
गता निशा साऽद्य मदद्विलग्ना ॥

[ २४ ]

अवा[4]र्तमादाय मुधा कदाचित्,
कदाचिदिष्टेतरभो जनानि ।
पितुर्गृहान्मां त्वरयोपगन्तुं,
गतानि लब्ध्वा मम वाचिकानि ॥

---

१–'चौपड़'इति भाषायां प्रसिद्धं क्रीडनकम् । २–जनान् इति शेषः ।
३–गृहम् । ४–अस्वास्थ्यम् ।

[ २५ ]

अहर्यदा त्वं शिशुभिस्समेता
वरोरु ! आयाः खलु सन्निधौ मे ।
प्रकामकामोत्कलिकाक[1]वर्षं,
बभूव[2] वर्षे ननु [3]तन्महन्मे ॥

[ २६ ]

गृहं जनन्या किल जायया वा,
लोके न केनाऽपि जनान्तरेण ।
इति प्रवादं ह्युपदिश्यमानो[4]
निःश्वस्य तूष्णीं हृदि ते स्मरामि ॥

[ २७ ]

गृहीतवेदोऽपि गृहीतिवेदे[5],
पदे पदे ते पदमन्वपद्ये ।
अटन्नटव्यामिव नष्टदृष्टिर्,
व्रजे[6] व्रजान्यद्य कुतोऽनवद्ये ॥

[ २८ ]

अजीजनत् प्राज्य[7]मदं समज्ञा[8],
त्वया विभज्यैव तु भुज्यमाना ।
ममाधुना सा व्ययिताऽसुशक्तेः,
सुरेव वैरस्यपथं प्रपन्ना ॥

[ २९ ]

उपैति नामस्मरणात्क्षणे यः,
सुदीर्घजीवी स जनो गणेयः ।
इतिस्थितिं कुत्र सतीं प्रतीयां,
सती यदीयं, न सति प्रति त्वाम् ॥

---

१-कम् = सुखम् । २-स्वानुभवस्थलेऽपि काव्येषु बहुत्र लिट्प्रयोगदर्शनात् तथा प्रयोगः । ३-तद् अहः महद् बभूवेत्यन्वयः । ४-प्रवादोपदेशात् 'त्वया पुनरुपयन्तव्यम्' इति व्यज्यते । ५-गृहिणाम् इति वदः, इतिकर्तव्यताज्ञानम्—इति गृहीतिवेदः, तत्र । ६-अध्वनि । 'व्रजो गोष्ठाध्ववृन्देषु' इति कोशात् । ७-'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । ८-कीर्त्तिः ।

[ ३० ]

सम्प्रेक्ष्य हस्ते बहुधायुषस्ते,
रेखां सुरेखाञ्चितपाणिपद्मे !
कथा कथाशेषगतेस्तवेत्थं,
द्रुतं भवित्रीति कदापि नोहे ॥
[ भूयः पुनः ]

---

## महात्म-गान्धि-अभिनन्दनम्

( ले०—पं० राघवेन्द्रशर्मा )

[ १ ]

स्वागतमस्तु महात्मन् स्वागतसंतोषिताखिलस्वात्मन् ।
पुण्यपुरेऽस्मिन् मिलितां गण्यां कांग्रेससभां गतस्यैताम् ॥

[ २ ]

मोदस्य किं नु न पदं
हर्तुं देशस्य पारतन्त्र्यं नः ।
नक्तंदिवं प्रयतते
दासस्सन्नस्मदीयदेशस्य

[ ३ ]

कलयाम यच्छ्रमेण हि
रन्तारो भारतीयसोदर्याः ।
महितं स्वराज्यम् एवं
चन्दनधवलं यशश्च लब्ध्वेति

[ ४ ]

गायन्ति यस्य सुगुणा-
न्धीरत्वादीन् अनन्यसामान्यान् ।
नानादेशेषु जनाः
महिमा स्यात् कोऽपरः प्रपञ्चेऽस्मात्

श्रीः

[ ५ ]

स स्थाने हि महात्मा
मनुते नो यः 'परो निजो वे' ति ।
हातुं देशार्थे स्वा-
त्मानं वाऽपि प्रमोदवान् यश्च ॥

[ ६ ]

विश्वस्य विदितनामा
जयतुतरां मूर्तिभूतसत्प्रेमा ।
*यस्य गुणास्त्यागाद्याः
ते सन्त्वादर्शतां भजत्स्वाद्याः

[ ७ ]

श्रीयुत-पण्डित-जवाहरलाल एवम् अबुल् कलाम् आजादवर्यः ।
यस्य भुजौ, श्री० 'सी० आर्०' हृदयं, न स्यात्स्वराज्यभारोऽस्य ॥

[ ८ ]

यं स्या म न्व्य च रा ज पु ङ्ग वंनुतस्ये न्द्र प्रभ श्रीर्मुदे
नं, व्याहा रि न घर्मि येन वंचनं देशप्रथां गायतां ।
यं स्या त्मा स म वेदयते व्यवंसितं कर्माचरन्धीरतां
तां व्यङ्क्तुं यंदहीनम् अस्य यंतनाद् दे वे शितां प्रीयताम् ॥

[ ९ ]

तथाविधस्याप्यवलेपहैन्यतो दिगन्तविश्रान्तयशोविशोभिनः ।
दद्याद्धरिः शान्तिनिकेतनस्य ते प्रमोद-शक्त्यायुरभीष्टसन्ततीः ॥

———

* 'यस्य तु सत्याऽहिंसे ते अखिलैरसदृशत्वकृतशंसे' इति पाठान्तरम् ।

[ ३० ]

सम्प्रेक्ष्य हस्ते बहुधायुषस्ते,
रेखां सुरेखाञ्चितपाणिपद्मे !
कथा कथाशेषगतेस्तवेत्थं,
द्रुतं भवित्रीति कदापि नोहे ॥
[ भूयः पुनः ]

---

## महात्म-गान्धि-अभिनन्दनम्

( ले०—पं० राघवेन्द्रशर्मा )

[ १ ]

स्वागतमस्तु महात्मन् स्वागतसंतोषिताखिलस्वात्मन् ।
पुण्यपुरेऽस्मिन् मिलितां गण्यां कांग्रेससभां गतस्यैताम् ॥

[ २ ]

मोदस्य किं नु न पदं
हर्तुं देशस्य पारतन्त्र्यं नः ।
नक्तंदिवं प्रयतते
दासस्सन्नस्मदीयदेशस्य

[ ३ ]

कलयाम यच्छ्रमेण हि
रन्तारो भारतीयसोदर्याः ।
महितं स्वराज्यम् एवं
चन्दनधवलं यशश्च लब्ध्वेति

[ ४ ]

गायन्ति यस्य सुगुणा-
न्धीरत्वादीन् अनन्यसामान्यान् ।
नानादेशेषु जनाः
महिमा स्यात् कोऽपरः प्रपञ्चेऽस्मात्

श्रीः

[ ५ ]

स स्थाने हि महात्मा
मनुते नो यः 'परो निजो वे' तिं ।
हातुं देशार्थे स्वा-
त्मानं वाऽपि प्रमोदवान् यश्च ॥

[ ६ ]

विश्वस्य विदितनामा
जयतुतरां मूर्तिभूतसत्प्रेमा ।
*यस्य गुणास्त्यागाद्याः
ते सन्त्वादर्शतां भजत्स्वाद्याः

[ ७ ]

श्रीयुत-पण्डित-जवाहरलाल एवम् अबुल् कलाम् आजादवर्यः ।
यस्य भुजौ, श्री० 'सी० आर्०' हृदयं, न स्यात्स्वराज्यभारोऽस्य ॥

[ ८ ]

यं[1] स्या म न्त्र्य च रा ज पु ङ्ग वं[1]नुतस्ये न्द्र प्रभ श्रीसुंदे[1]
नं[1], व्याहा रि न घर्मिं येन वं[2]चनं देशप्रथां गायतां[1] ।
यं[1] स्या त्मा स म वेदयते व्यवं[3]सितं कर्माचरन्धीरतां[1]
तां[2] व्यङ्क्तुं यं[2]दहीनम् अस्य यं[2]तनाद् दे[2]वे शितां प्रीयतां[3]म् ॥

[ ९ ]

तथाविधस्याप्यवलेपहैन्यतो दिगन्तविश्रान्तयशोविशोभिनः ।
दद्याद्धरिः शान्तिनिकेतनस्य ते प्रमोद-शक्त्यायुरभीष्टसन्ततीः ॥

———

* 'यस्य तु सत्याऽहिंसे ते अखिलैरसदृशत्वकृतशंसे' इति पाठान्तरम् ।

# (श्रीविश्वेश्वरानन्द–वैदिकानुसन्धान-संस्थानीयः कार्य-परिचयः)

(ले०—विद्याभास्करः पं० अमरनाथशास्त्री व्याकरणाचार्यः, लवपुरम्)

अयि सरससुरस्वतीसमाधानसमाहितचेतसः सचेतसः प्राचीन-संस्कृतिप्रेयांसो विद्वांसः! अद्य खलु याति युगे परः-सहस्राणि शिक्षणसंस्थानानि समृद्ध-स्कूल-कालिजाद्यधिष्ठानानि प्रतिपत्तनं विततानि पश्यामः। यावच्छक्यं संस्कृति-रक्षणक्षमा एव तदीयाः कार्यकलापाः सम्पद्यन्ते। अविरल-पाश्चात्त्यसंस्कृति-सलिल-प्रवाहिण्यास्तरस्विन्या वैदेशिक शिक्षण-सरणि-स्रोतस्विन्या बलवत्तरप्रतिरोधाय कामं तेषां सम्पद्यतां सूपयोगः, परमा संसृतेर्मानवजीवनजीवातुभूतायाः पाणिनि-यास्क-प्रभृतिगुम्फितशब्द-अर्थनिष्कर्षकलित-ललितसाहित्यप्रसूनानु-स्यूताया वैदिकसंस्कृति-मञ्जुल-वल्लर्याः सन्ततरक्षणोक्षणे नहि प्रतिक्षणं सक्षणं किमप्यन्यदितो वैदिकानुसंधानसंस्थानाद् निभालयामः।

पौर्वात्य-पाश्चात्त्यविविधहृद्यविद्याविद्योतमानमानसानां संस्कृति-रक्षैकमात्रजीवनमहाव्रतानाम् आचार्यश्रीविश्वबन्धुशास्त्रिमहा-नुभावानां सततश्रमवारिपरिषेकैर्योधमानमिदं संस्थानमद्य न खलु केवलं भारतीयसुधियां सम्मानभूमिरपि तु पाश्चात्त्यविपश्चितामपि विस्मयास्पदमिति सोरस्ताडं ब्रूमः। यद्यपि भारते स्वेन स्वेन वर्त्मनो-दाहार्यमनुसंधानकार्यमनुशीलयतां भाण्डारकर-सातवलेकर-आनन्दा-श्रमप्रभृतिसंस्थानविशेषाणां समादरणीयः खल्वनवद्यसमुद्यमः। तथापि पौर्वात्य-पाश्चात्त्य-साहित्यालोडनपुरस्सरं वैदिकसाहित्यम-र्मविश्लेषणप्रकार इदमीयः स्वोपज्ञ इति विश्वसिमः।

## संस्थान-संघटनसौष्ठवम्

प्रायशो भारते यत्र तत्र सांप्रदायिकसंस्थानराजिरेव राजमाना नेत्रसरणिमवतरति प्रेक्षावताम् । तेषां संस्थानानां प्रत्येकं पारस्परिकसाह्यसम्पादने सङ्कोचमञ्चति । बहुधा समेधमानवैमनस्यवह्निनाऽन्योन्यं दिधक्षति । परं संस्थानस्यास्य कमनीयं संघटनरमणीयं विधानं वीक्ष्य वीक्ष्य प्रमोदते विदुषां चेतः । न्यस्तसमस्तसाम्प्रदायिकतातरलगरलमपि भारतीय-विभिन्नमताभिमानिजनस्य हार्दसौहार्दसलिलकलिलेनेव सद्भावनेष्टकासंपुटितमिव नव्यभव्य-संस्थानभवनमिदमारचितमिव रचनाप्रावीण्यप्रवणविचक्षणेन केनचन सभाजयामः । इदमीयकार्यकारिण्यां परिषदि यद्येकतः सनातनधर्मिधौरेयाः श्रीदीवानकृष्णकिशोरमहोदया आसते, परतो डाक्टर सर-गोकुलचन्द्रनारङ्गमहानुभावा अपि वैदिकसंस्कृतिसमुन्नतिभावुका विराजन्ते । अन्यतो रायबहादुर श्री मूलराज एम. ए. महाभागाः, रायबहादुर श्रीदुर्गादास वाकील-महोदयाः, प्रो० दीवान आनन्दकुमार एम ए. महानुभावप्रभृतयो भूयांसः सनातनधर्माणः, आर्यसमाजप्रेमाणश्च सम्भूय संस्कृतिरक्षणसाधनैकमनसः संस्थानमिदं सम्भावयन्तो विलसन्ति । ब्रह्मर्षिकल्पानां महामनसां स्वनामधन्यमूर्धन्यानां श्रीमदनमोहनमालवीयमहोदयानां, महात्मनारायणस्वामिपादानां चाशीराशिविशेषैः संवर्धितमनुदिवसं समृद्धिमुखं समीयते । किं बहुना; नैकवर्त्मनामपि संस्कृतिसमुद्धारात्मके यत्नेऽस्मिन् सौमनस्यं सामञ्जस्यं, नैकसम्प्रदायदायाद्यवतामपि स्पर्धनीयमैकमत्यं कस्मैचिदचिन्त्यपूर्वाभ्युदयसूर्योदयायारुणायते खलु ।

## वैदिक–पदानुक्रमकोषः

'एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतधा बाह्वृच्यं, नवधाऽऽथर्वणः' इति व्याकरणमहाभाष्यकृतां महर्षि-

पतञ्जलिपादानां सम्मतः ११३१ शाखात्मको वेदराशिरद्य दुर्दैव-ललितललामैर्नष्टो भ्रष्टः काठिन्येन ६ शाखात्मक उपलभ्यमानो मा नामावशेषो भूदिति पवित्रोद्देश्यविशेषाङ्कुरितः 'वैदिक-पदानुक्रम-कोषात्मकः समारम्भः संस्थानस्यास्य प्रमुखं कार्यमिति नातिरोहितं समेषाम्। अद्य सङ्ग्रामज्वलनज्वालावलीढेऽस्मिञ्चतुरस्रसङ्क्रान्ततमसि खल्वनेहसि यत्र समस्तवस्तु-माहर्घ्यं निष्पत्राकुरुत आराजरङ्कं कोषस्यातिद्रव्योन्मुखं दुरूहमपि कार्यमविरलप्रवाहेण साध्यमानं नूनं मेधाविनां कमप्यमन्दानन्दसन्दोहं जनयेत्। एतदीयसामग्रीसंग्रह-शोधन-संयोजन-सम्पादनादिपूर्वकं प्रकाशन-कार्यं पूर्ववदविघ्नं प्रचलदभूत्। अद्यावधि ४२५सपादचतुःशतपृष्ठानि यावत् संहितात्मकः कोषः प्राकाश्यमानीयत। चतुर्वेद-कोषोऽप्यबाधितं समुपैति प्रकाशम्। औपनिषत्कं सम्पादनमपि प्रकाशनकोटिमानीयमानं विज्ञानां विज्ञानभूमिः स्यात्। श्रौत-धर्म-गृह्यसूत्र-शिक्षा-व्याकरण-छन्दोविचिति-निरुक्त-दर्शनादि-वेदाङ्गात्मककोष-सम्पादन-समृद्धिरपि सम्पन्नप्रायाऽनेहसा स्वल्पीयसा प्राकाश्यमापत्स्यते। इत्थं परमोदारचरितानामाचार्यमहोदयानां विज्ञानविजृम्भितं नूनं नवनवोन्मेष-वेद-विज्ञानसन्देशं भारतीयसंस्कृतिजीवनमभिलालष्यतां विदतामन्तरङ्गसौख्याय दिशेत्।

## सम्मानित-दर्शकवर्गः

एतत्संस्थानीयकार्यमालोडयितुं हायनेऽस्मिन् समये समये समागतानां साधुसम्मतिप्रदानपूर्वकं संस्थानमिदमभिनन्दयता—मनेकेषां गीर्वाणवाणीचरणरजोजुषां विदुषां, संस्कृतसमुत्थानमभिलष्यतां च कतिपये समुल्लिखेलिमा महानुभावाः—

१. सम्माननीय श्री डा० राजेन्द्रप्रसाद, भू, पू. राष्ट्रपति कांग्रेस।
२. ,, मियाँ अब्दुल हयी, शिक्षासचिव पञ्जाब।
३. ,, श्रीपुरुषोत्तमदास टंडन, स्पीकर यू. पी.
४. ,, डा० सर स० राधाकृष्णन्, वाइसचांसलर हिन्दु-विश्वविद्यालय, काशी।

 

५. सम्माननीय डा० आर० सी० मोजमदार, वाइसचांसलर ढाका विश्वविद्यालय।

६. ,, डा० श्यामाप्रसाद मुकर्जी, भू. पू. वाइसचांसलर कलकत्ता युनिवर्सिटी।

७. ,, श्रीदीवानचन्द, एम. ए. भू. पू. वाइसचांसलर आगरा युनिवर्सिटी तथा प्रधान डी. ए. वी. कालेज प्रबन्धकर्तृसभा लाहौर।

८. ,, दीवान बहादुर सर टी. विजयराघवाचार्य, के. वी. ई. चीफ मिनिष्टर उदयपुर।

९. ,, दीवान बहादुर राजा सर दयाकृष्ण कौल के. वी. ई. सी आई. ई. लाहौर।

१०. ,, रायबहादुर पं० अमरनाथ काक उपप्रधान लैजिस्लेटिव असैम्बली जम्मू।



# संस्कृत-साहित्य-परिषदो

## मासिकाधिवेशनम्

परिषदोऽस्याः श्रावणमासाधिवेशनं सप्तविंशे प्रविष्टे श्रीनगरमध्यवर्ति--श्रीसोमनाथमन्दिरस्थ-पाठशालामण्डपे समभूत् । श्रोतृणां संख्यातीव स्वल्पासीत् । प्रधानमहोदयानामनुपस्थितिरपि परमुल्लेखनीया । परिषत्कार्यभारसञ्चालनक्षमैः साहित्यालंकारपदभाग्भिः पं०कुलभूषणमहोदयैः संस्कृतज्ञमार्गगमनश्रमापनोदनार्थमेव तत्तद्गृहसमुदाय ( मुहल्ला ) मध्यवर्तिस्थानं मासिकाधिवेशनार्थं निश्चितमासीत् । परं निमन्त्रणप्रिया विद्वांसो निमन्त्रिता अपि अदक्षिणं यज्ञमिव तत्स्थानं न शोभयामासुः स्वचरणारोहणैर् इति अस्या भाषाया दुरदृष्टं विदुषां मोहनिद्रा-सिनीवाली, अतः पूर्वपूर्वतराधिवेशनदिवसेभ्यो नातिसंख्याऽऽसीदत्रत्यसंस्कृतवाङ्संरक्षणदक्षाणाम् ।

कार्यारम्भपुरःसरं परिषदुपप्रधानवर्य्यैः विद्याभूषण पं० गोविन्दराजदानशास्त्रिभिः संस्कृताचार्यैः "किं जन्मना वर्णव्यवस्था उत गुणकर्मभ्याम् " इति द्विमतविषयीभूतं विषयं स्वोक्तिप्रागल्भ्येन सुष्ठु निरूप्य व्याख्यानक्रमेण "गुणकर्मव्यवस्थयैव वर्णव्यवस्था" इति सिद्धान्तितम् । तदनु मन्त्रिमहोदयानामाज्ञया सभा विसर्जितेति ।

परिषदुपमन्त्री

## शोक-प्रस्तावः

स्वर्गीयमहामहोपाध्याय—पं० देवराजशास्त्रिविद्यारत्न-स्मृति-भास्कर-राजगुर्वित्यादिसार्थकविरुदावलिविभूषितानां धर्मदान-वीराणामाकस्मिकवियोगे कश्मीरस्थसंस्कृतसाहित्यपरिषदः पञ्चमे भाद्रपदे शोकाधिवेशनं समजनि।

यत्र परिषत्-चालकैरन्यान्यैश्च समागतैः सभासद्भिः मनसा वाचा च शोकप्रदर्शनानन्तरं पण्डितबालकृष्णशास्त्रि-राजपण्डितेन साकं शोकसहानुभूतिं दर्शयद्भिः भगवान् सवितृमण्डलवर्त्ती नारायणः प्रार्थितः। यत् स्वर्गीय-वियुक्तपण्डितप्रवराणां ज्योतिर्मार्गेण सायुज्यपदप्राप्तिस्तथा शोकाकुलस्य तत्परिवारस्य धैर्यविष्टम्भो भूयादिति।

शोकप्रस्तावस्य प्रतिलिपिः शोकाकुलस्य राजपण्डितस्य सेवाया-माश्वासनाय प्रेषणीया इति सर्वसम्मत्या सिद्धमिति।

प्रधानमन्त्री
संस्कृत-साहित्य-परिषत्, श्रीनगर (कश्मीर)

# श्रियो नियमाः

**उद्देश्यम्—**

परिषदोऽस्याः संस्कृतभाषार्यसभ्यताप्रचारात्मकं केवलमेकमेव।

**प्राप्तिशुल्कम्—**

श्रीनगराद्बहिः सपादरूप्यकम् १।)

श्रीनगरीयेभ्यः पारिषदेभ्यस्तु रूप्यकमेकम् १)

**पत्रप्रकाशनसमयः—**

त्रैमासिकमिदं पत्रं सौरीयेषु आषाढाश्विनपौषचैत्रेषु क्रमशो निर्गच्छति। पत्रप्रकाशनसमयादनन्तरमपि पत्रानुपलब्धौ सूचनया पुनरपि प्राप्यते पत्रम्। मासादनन्तरं तु न प्राप्यते।

**प्राप्तिस्थानम्—**

डा० पं० कुलभूषणः सम्पादकः 'श्रीः' श्रीकार्यालयः, सुन्वारबाग श्रीनगर(काश्मीर)।

वर्ष ६
सं० १, २

Vol. 6
No. 1, 2

❀ ओ३म् ❀

कश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

त्रैमासिकं पत्रम्

# श्रीः

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

SRINAGAR. KASHMIR.

श्रीनगर आषाढ़, आश्विन १९९४
SRINAGAR JULY, OCTOBER 1937.

वार्षिकं मूल्यम् १)

प्राप्ति स्थानम् — ... कुलभूषणः श्री कार्यालय, मुन्वारबाग, श्रीनगर काश्मीर

# विषय सूची



सर्वे लेखा लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाश्य तेषामुत्तरदायिनो लेखका एव न च सम्पादकाः ।

# काश्मीरे वासुदेवस्थानानि

(उद्धर्त्ता—पं० शिवनाथ शास्त्री साहित्यभूषणः साहित्यमणिः उपमन्त्री संस्कृतसाहित्यपरिषदः काश्मीर (श्रीनगर) स्य।

देवालये[१] देवदेवो गोपीशः कपटेश्वरे[२] ।
नारायणो नरस्थाने[३] त्रिलोक्यां[४] वामनो विभुः ॥१॥
जलमध्येऽच्छिवालेषु[५] वासुदेवोऽघनाशनः ।
गौतमस्याश्रमे[६] देवो गोपीनाथो जनार्तिहृत् ॥२॥
नरसिंहो देवहृदे[७] कृष्णः कालाञ्जने[८] विभुः ।
मधुकैटभजिन्नामा विजयेश्वरसन्निधौ[९] ॥३॥
चक्रेशः स्याच्चक्रधरे[१०] स्वयम्भूः स्यात्स्वयंभुवि[११] ।
विष्णुर्मन्दोदरग्रामे[१२] केदारे[१३] पापनाशनः ॥४॥
नरस्थाने[१४] नरो देवः सर्वपापप्रणाशनः ।
हर्षेश्वरे[१५] चक्रपाणिस्तत्रैव च गदाधरः ॥५॥
गोवर्धनधरो देवः सुरेश्वर्यां[१६] कृपानिधिः ।
त्रिपुरेशे[१७] सुरैर्जुष्टः पद्मनाभः सनातनः ॥६॥
हृषीकेशः कर्मसाक्षी शाण्डिल्याश्रम[१८] सन्निधौ ।
काण्वा[१९] श्रमे चतुर्बाहुः क्षेमर्यां[२०] क्षेमवर्धनः ॥७॥
रणस्थाने[२१] कंसरिपुर्गान्धारे[२२] सुरनायकः ।
हलायुधधरो देवो रङ्गस्थाने[२३] सुखप्रदः ॥८॥
शंखपाले[२४] हरिहरौ वशिष्ठस्याश्रमे स्थितौ ।
सर्वसौख्यप्रदः साक्षाद्गरुडे[२५] गरुडासनः ॥९॥

---

१ देवलगाम । २ कूठिहेर । ३ नारि । ४ लोकभवन । ५ अछाबल । [६ रा]मपूरि । ७ देवसर । ८ अच्छा । ९ बिजबिहाडा । १० चक्रदर । [११ ]स्वयिबुग । १२ माचहिल । १३ किल्लर । १४ ननिनारु । १५ पर्वत । [१६ ]सुरिश्वर । १७ त्रापरपुर । १८ गोशी । १९ काचल । २० मेरहामो । [२१ ]रामपुर । २२ गान्दरबल । २३ रायीथन । २४ सुरगिन द्राबा । [२५ ]गाड्डुरु । एतानि ग्रामाणां प्रचलितनामान्यधुना सन्ति ।

श्रीः

ऋष्यशृङ्गाश्रमे[१] पुण्ये ब्रह्मविष्णुमहेश्वराः ।
शैवायां[२] श्रीपतिश्चित्रकूटे[३] दाशरथिः स्वयम् ॥१०॥
ललायाख्ये[४] बलिध्वंसी चित्रार्द्रे[५] चित्रनायकः ।
उपेन्द्रः शतमूलेषु[६] वराहे[७] सूकरो हरिः ॥११॥
नारायणस्थले[८] विष्णुर्विभुर्नारायणः स्वयम् ।
बहुरूपे[९] महास्थाने बहुरूपभृदच्युतः ॥१२॥
अधोक्षजः शमालायां[११] पर्णाश्रे[११] देवकीसुतः ।
जिनाश्रमे[१२] जिनेन्द्रस्तु भीड्डारण्ये[१३] बले रिपुः ॥१३॥
क्रमसारे[१४] त्रयो देवा गोदावर्या[१५] व्यवस्थितः ।
वनमाली वनारण्ये[१६] हयग्रीवे[१७] कृपानिधिः ॥१४॥
विश्वम्भरः कुलायाख्ये[१८] मरूणायां[१९] जगत्पतिः ।
कपालमोचने[२०] तीर्थे हरिर्लोके हितावहः ॥१५॥
विशाल्यां[२१] विजयो देवः प्रद्युम्नशिखरे[२२] विभुः ।
अमरेशोऽमरेशे[२३] वै ज्येष्ठेशे[२४] सुरनायकः ॥१६॥
विश्वम्भरो लोहयाख्ये[२५]रामो रामाश्रमे[२६] स्थितः ।
गदाधरो गयास्थाने[२७] सर्वलोकाभयङ्करः ॥१७॥
कष्टस्थाने[२८] पुण्यतीर्थे देवो वै विष्टरश्रवः ।
वरप्रदे[२९] श्रीवैकुण्ठः स्थानाश्रमगिरौ[३०] हरिः ॥१८॥
बोधिसत्त्वाश्रमे[३१] बुद्धो दयाशीलसमन्वितः ।
आद्याश्रमे[३२]मत्स्यरूपः कार्कोटे[३३]कूर्मरूपधृत् ॥ १९॥
भृग्वाश्रमे[३४] पुण्यतीर्थे देवो वै भृगुनन्दनः ।
स्थाना न्येतानि पुण्यानि यः पश्यति नरो हरेः ॥ २० ॥
जहाति त्रिविधं पापं कलौ सर्पस्त्वचं यथा ।
भुक्ति-मुक्ति-प्रदं सम्यग् जन्तूनां पापनाशनम् ।

---

१ नसछिनोबाल । २ शिवग्राम । ३ दुदन्याल । ४ लोलाब । ५ मात्रगाम । ६ हतमुल । ७ नैनमेर । ८ साधुगङ्गा । ९ जिन्नपूर । १० हमल । ११ पारिमपूर । १२ बुद्धगेर । १३ बृडमर । १४ क्रमसर । १५ गुदर । १६ वटाविन । १७ जवभारु । १८ हवाल । १९ मुरन । २० शुपयान । २१ रामू । २२ शारिकापर्वत । २३ अमरनाथ । २४ जीठिहेरा । २५ नाभुगनय । २६ मरिव । २७ वाङ्गुवन । २८ कष्टवार । २९ भद्रवाह । ३० पाड्डर । ३१ ऐतगज्य । ३२ मटन । ३३ कार्कोटनाग । ३४ बुम्बजुव ।

मार्तण्डमर्कतीर्थं च सूर्यक्षेत्रं च विश्रुतम् ॥ २१ ॥

इति ॥ काश्मीरेष्वपस्थानानि —

चन्द्रभार्गा[1] समारभ्य यावन्मधुमती[2] तटम् ।
काश्मीर-मण्डलं प्रोक्तं सिद्धिदं सिद्धसेवितम् ॥१॥
त्र्यहात्सारस्वतं तोयं सप्ताहाद्यामुनं जलम् ।
सद्यः पुनाति गाङ्गेयं वैतस्त[3] स्मरणादपि ॥२॥
चक्रश्चक्र धरः शिवो दिनकरः श्री बाल खिल्येश्वरो
दुर्गा श्री विजयेशपिंगल शिवा नन्ताश्च सोमेश्वरः ।
विष्णुः कैटभजिद्विमुक्त पथ गो रुद्रः स्वयम्भूरिति
प्रख्यातं तु चतुर्दशायतनवत्क्षेत्रं महद्वैजयम्[4] ॥३॥
षष्ठिग्राम सहस्राणि षष्टिग्राम शतानि च ।
षष्ठिर्ग्रामास्त्रयो ग्रामा (६६६३) एतत्कश्मीर मण्डलम् ॥४॥
यानि तीर्थानि पाताले यानि चान्यानि भूतले ।
त्रिदिवे सन्ति यान्येव तानि कश्मीर मण्डले ॥५॥
यावन्नाका[5] वहति च नदी लहरी[6] तोयपूर्णा
यावन्नागौ विमल कमलौ[7] तिष्ठतो मत्स्ययुक्तौ ।
यावद्भास्वाँ तपति गगने नित्यशः कालशक्त्या
तावत्स्वर्गे वसति सततं श्राद्धकृत्सूर्यक्षेत्रे[8] ॥६॥
यत्स्पर्धा करणापराधवशतो वाराणसी निर्मिता
शङ्के शूलभृता क्रुधेव निशिते शूले स्वयं स्वामिना ।
आस्ते यत्र नदी (चिता? सुधा)जलमयी (चित्र?दानं) वितस्तैनसाँ
तत्ख्यातं भुवि हाट[9]केश्वरमहाक्षेत्रं क्रियान्नः शुभम् ॥७॥

इति काश्मीरतीर्थ माहात्म्यम् ।

---

१ रामबन । २ शारदा द्रावु । ३ वितस्ता (जेलम) । ४ विजयेश्वर । ५ नदी जो मार्ताण्ड क्षेत्र से बहती है । ६ नदीनाम । ७ कुण्डों के के नाम । ८ मटन । ९ मलखाह में वर्तमान है ।

# जननी ।

अनुवादकः– चन्द्रकान्त शाण्डिल्यः, शास्त्री 'मधुरः''
( श्रीराम निकेतनं मूलत्राणे )

अद्य मंगलपूर्णं दिनम् विशेषानन्दसमयः । अयं हर्षावसरः द्वितीयावसर आसीत्सरयू-जीवन काले । सा सरयूः यं हर्षावसरं लब्धवती, स पूर्व-हर्षाद-लौकिक इति । आसीत्प्रथमानन्दकालो—यदा सा बालवयसि सिन्दूरबिन्दुकयाऽलङ्कृता तथा संसारसूत्रे ग्रथिता च ।

स आनन्दकालो बालकालीन आसीद्; अधुनातनो हर्षावसरः प्रौढ़-कालीनोऽस्ति । पूर्वानन्दकालो यौवने दैवेन सम्यग्धृत. । परमद्य सा विधवा सरयूः अतिसीमानंमानन्दं प्राप्तवती तस्या एक मात्र-जीवन चन्द्रस्य 'गोपाल'-नाम्नः सुतस्य विवाहकाल एव हर्षसमयः ।

गोपालस्यायुः नववर्षोपरीति अनुमीयते । गोपाल जनकः त्रिवर्षकं गोपालम् अनाथं त्यक्त्वा दिवमगच्छत् । सा सरयूः अमुं हर्षावसरं प्रतीक्षन्ती श्वसिति । सा किङ्कुर्वन्ती ❀ पुत्रमपालयत् । गोपालः मातृ-स्नेहातिरिक्तम् इतरस्य स्नेहं नानुभवत् । गोपालः मातरं सम्यक् सेवते । सुरभीं परिचरति नित्यम् । गृहे अल्पादल्पतराणि कार्याणि सुसाधयति ।

२

तस्यैवदिने—

समन्तात् हर्षोल्लासस्य साधनानि सन्ति । सरयूः कुटुम्बपरिचर्यायां दिने गमनागमनैर्विरामं नोपलभते । आसीन्नूनं न्यूनता वाद्यस्य, दरिद्रावशात् । कश्चिद् ग्रामणीः सरयूं सम्बोधयन् प्राविशद् गृहम् ।

"क्वासि गोपाल जननी" ति ।

"उपैमि, भगवन्" इति भणन्ती कोष्ठकादागता सा । पुनरुवाच 'क्वास्ति गोपालः" इति

"नाहं जाने" इत्युत्तरं प्रादात् सा ।

"विरमतु श्रीमन्' इति काष्ठपीठिकामस्थापयत्सरयूः ।

"किं जातीयकान् न भोजयिष्यसि ?" इत्युपविशन्नुवाच सः ।

"भवानेव विमर्शतु, रजतानि न सन्ति मत्पार्श्वे; कथं जातीयकान् न भोजयिष्यामि" इति गोपालजननी अगदत् ।

---

❀ किं करोति, इति किङ्करो भृत्यः । सा किङ्कुर्वन्ती भृत्यतामाचरन्तीति भावः ।—अनुवादकः ।

"जनाः किं कथयिष्यन्ति" इति तेनावादि ।

"श्रीमानेव अधुना कथयतु, अहं किं करवाणि ?"

"अस्ति तव पार्श्वे गौरेका, तस्या मूल्यं २५) पञ्चविंशति-मितं भविष्यति" इति साभिप्रायमुवाच ग्रामणीः ।

विक्रीता धेनुस्तया । सायङ्काले अनदन् वासांसि । वासाँसि परिधाय गोपालो यात्रामकरोद्वररूपः ।

३

१ वर्षानन्तरम्—

'गोपाल ! तव श्वशुर-गृहात्तारिका ( Telegrame ) समागता । गच्छ भद्रपुरुषस्य पार्श्वे गत्वा पाठय एनाम्' इति अकथयत्सरयूः ।

'आनय अधुनैव पाठयामि" इति तारिकां नीत्वा गोपालः शीघ्रं ग्रामं प्राचलत् । बाबू चन्द्रिकाप्रसादस्य प्रासादं गत्वा मन्दमुवाच तं चन्द्रिकाप्रसादम् "श्रीमन् पठतु इमां तारिकाम्" इति ।

आनय किमत्रेति पठामि" इति तारिकां नीत्वा चन्द्रिकाप्रसादः तारिकां विलोक्य पठित्वा च गोपाल मुखं सशङ्कमलोकयत् । गोपालः चकितः चन्द्रिकाप्रसादं निशाम्य गम्भीरतां गतः । सरयूरपि तीव्रगतिना तत्रोपस्थिता प्रोवाच 'किमिति भद्रमुख !"

"तव पुत्रवधूर्मृता" इति चन्द्रिकाप्रसादोऽभणत् ।

"हन्त" इति चीत्कुर्वन्तो सरयूरमूर्छत् ।

गोपालः, मातरं पत्रं चन्द्रिकाप्रसादं च भूयो भूयो विलोक्य आश्चर्ये मग्नः विचारयति—"किमिति ।"

अनन्तरं मातरं मन्दमुत्थाय गृहमागतो गोपालः ।

४

अन्यस्मिन्नहनि—

प्रातः काले सरयू पल्यङ्के स्वपिति । निकटे तिष्ठति गोपालः । तस्याः प्रभा प्रभाते नष्टा । सरयूः गोपालमुवाच "किं नक्तं निद्राँ न लब्धवानसि ।"

"नाहं सुप्तः" इत्युक्त्वा विरम्य पुनरुवाच "रात्रौ सुप्ता त्वं 'सा मृता' इति वारं वारमुक्तवती, कासौ मृता ? मह्यं कथय" गोपालो विरराम ।

'किमपि नास्ति, गच्छ विरम त्वम्" इत्युवाच सरयूः ।

"नागता निद्रा अम्ब !" मलीनमुखो गोपाल उवाच ।

"किमर्थम्" इति प्रश्नयति सरयूः ।

"न किञ्चिद्भुक्तं, नास्ति किञ्चिद् भोक्तुम्, नात्र धेनुः, क्षुधया निद्रा दुर्लभा" इति अब्रवदसौ बालः।

तस्याः नयने अश्रु स्रावयती; सा मुखमन्यतोऽकरोत्; परं दरिद्रता-मुक्ताः गोपालः पश्यन्नुवाच 'किं रोदिषि मातः ?"

'नहि" इति साऽवदत्।

न जाने कदा सरयूः निद्रावशंवदा भूता मूर्च्छिता वा। प्रातः काले नासीत्सरयूः, अपितु तस्याः शवं पल्यङ्के ग्रातवान् गोपालः।

५

अन्यस्मिन्नहनि—

"धू—धू धग्" इति सशब्दं प्रज्वलन्ती चिता सरयूशरीरं पर—लोकं ताँ प्रापयितुं विकरोति। ये नराः समागताः ते चितायाँ सरयूशरीरं निधाय परावृत्ताः। अत्रान्तराले धावन् गोपालः सचीत्कारमुच्चैरुवाच

"जननि !"

× × × ×

निस्तब्धायाँ रजन्याम् अंगार बहुलाँ, कमपि जीवम् अधुनाऽपि मृतं प्रमाणयन्तीं चिताँ समुपगच्छति स गोपालः। जननीं वारं वारमाक्रन्दन् चिताँ परिक्रामति गोपालस्य ध्वनिं प्रत्युत्तरयन् घूको घूकरोति।

"जननि" विरम्य '......क्षुधया पीड़ितोऽहं क्व गच्छामि, ......हन्त! कथं न उत्तिष्ठसि ?... कथं न समेस्यसि मयि कथयत्यपि"

घूकः पुनरपि यथापूर्वं शब्दमकरोत्।

"जननि ! ......त्रीणि दिनानि व्यतीतानि, कथ-मधुनापि भोजनं न ददासि !... 'गच्छ, नाहं भोजनं त्वत्तो याचयिष्यामि .....स भद्रमुख एव भोजनं दास्यति... ...जननि ! कथ ब्रबीस्यपि न ......हा हन्त......क्षुध...या......" इति प्रलपन् गोपालः शीतेन क्षुधया, तृषया, चिन्तया च आक्रान्तः दण्डापित स्तत्र

+ + + +

शमशाने जनैर्दृष्टं यत्चिताया निकटे कश्चिद्बालः स्वपिति। तस्य मुखान्निसृतेन रक्तेन भूमौ स्वयमेव लिखितमस्ति यज् "जननि ?

इति

# श्री नगर-वर्णनम् ।

( ले० ब्र० सत्यदेव अष्टम-श्रेणी गु० कु० पोठोहार )

काश्मीरदेशमनुशास्ति सुरत्नगर्भं,
सद्भूपतिश्शुभकृतिर्हरिसिंहनामा ।
संसेव्यते सुकविपण्डितगायकैर्यः,
सेवानुरूपफलदो गुणिने गुणज्ञः ॥१॥
देशस्य तस्य खलु उत्तरपूर्वभागे,
सद्वप्रपूर्णसमविस्तृतभूविभागे ।
स्वर्गं हसत् प्रकृतिसुन्दरया श्रिया तत्,
श्रीसंयुतं नगरमद्भुतमाचकास्ति ॥२॥
आरात्ततो हि नगरात् खलु वैरिनागात्,
उद्भूय निर्झर जलैः परिवर्धमाना ।
तिर्यग्भुजङ्गमगमा गहनातिशीत,
सद्गन्धनिर्मलजला प्रथिता वितस्ता ॥३॥
तस्यां सुरम्य विविधान्नसुपूरितानि,
विश्रामसाधन सुविष्टर मण्डितानि ।
सौख्यार्थ वस्तु परिपूरित मध्यमानि,
पाथो वहानि गमनाय सदा विभान्ति ॥४॥
स्रोतांसि तत्र खलु पुष्पित पुष्कराणि,
नौका सुशोभिततटानि सुविस्तृतानि ।
उत्तुङ्गभङ्ग परिकम्पित नाविकानि,
लोलातिलोल जलवन्ति वहन्त्यजस्रम् ॥५॥
रेखाफला मृतफल क्रमुक प्रियालं,
वातादभूषित महो पवनानि यत्र ।
चाम्पेय जाति गणिकादि सुवासितानि,
शालानि षादसदृशानि बहूनि भान्ति ॥६॥
तद्दक्षिणाहि हिम मण्डित पर्वतेषु,
स्वास्थ्योपयोगि गुलमर्गमथोत्तराहि ।
नानामपथ्यथितरोगिमनोरथानाम्,
सम्पूरकः पहलगाव इति प्रसिद्धः ॥७॥
काश्मीरदेश्यविविधायुध मण्डितस्य,
कौशेय वस्त्रचय भूषित वन्दितस्य ।
निष्प्राण जीवगण दर्शन पण्डितस्य,
चित्रालयस्य सुषमापि नितान्तरम्या ॥८॥

# "संस्कृत शिक्षा"

लेखकः—पं० श्री सुरेशकुमारः साहित्यधुरीणः प्रधानाध्यापकः
श्री राघवेन्द्रः संस्कृत हाल नौगछिया, पो० नौगछिया,
जिला भागलपुरम् "विहारः"

अहह ? दैव ? किमिदं चेष्टितम्, प्रायो भुवने या काचित् संस्था यया कयाचित् धारणया आदौ संस्थापिता सा अन्ते ततो विपरीतमेव मार्गमारूढ़ा उन्नति स्थाने अवनतिं विदधती जगत्खेदयति विषयेऽत्र किमन्यद्दर्शयेयम् सर्वतः पूर्वं शिक्षापद्धतिरेवाश्रयणीयास्ति यतो जगति सर्वमेव ऐहलौकिकं पारलौकिकम् सद्ध्यति सेयं संस्कृत शिक्षा काले कलिकाल कवलित कलेवरा आङ्गल शिक्षाभिभूता वहीराज्यमन्दिरं रोरुद्यमाना सरसदृशां विदुषाम् अदम्येन श्रमेण पुनरपि-संस्कृत समिति स्थापनेन राजमन्दिरमुपेतेयम् भूयोपि निजात्मानं कथं कथमपि पालितं यावन्नागच्छत् तावदेव क्रूरस्य संस्कृताराते: कलिकालस्य क्रूरेण बन्धेन केषाञ्चित् विद्वच्छलावतीर्णासुरमूर्त्तीनाम् विदुषाम् मनसि इयं जागृति रुदपद्यत, यद्यथा कथंचित् परीक्षायाम् छात्राः उत्तारयितव्या इति एतदर्थं न धर्मो ध्यातव्यः।

न सत्यं मनागपि प्रेक्षणीयम् एवं कृतनिश्चयास्ते रन्थतरतान् विषयान् विचिन्त्य विलिख्य च शुकवच्छात्रान् अभ्यासयितुम् प्रा ञ्जत, ये विषयाः प्रायः प्रश्ने समागन्तुमर्हन्ति हा ? तस्येदम् फलम् प्रसृतम् येनेदानीं कृताचार्या अपि ग्रन्थाऽध्यापनेऽसमर्था इतस्ततो विद्वल्लेखमासाद्य तमेव कण्ठीकर्तुम् छात्रान् व्याहरन्ति. किं कुर्वन्तु नाम एते वराकाः, कलिकाललुप्तप्रारब्धाः बालाः, एते पश्यन्ति यत् किञ्चित् इदानीं ममोपाध्यायाः माम् वदन्ति तन्मच्छ्रेयसे एव, उचितमेवैषाम् इदम् विचारणम्। परम् किमस्माभिरपि तथैव कर्तव्यम्।

हा कीदृशीयम् फल विपरीता परीक्षा, यत्र परीक्षकाणां छात्रास्तु प्रश्नव्यतिरिक्ते ग्रन्थे ध्यानमपि न ददति, अस्तु, इतीदानीम् अध्यापकानाम् दुर्नीतिः। इतोप्यधिकम् निभालनीयमस्ति प्रश्न निरीक्षकाणाम् अनवधानत्वम्. प्रायो विरल एव वर्षे विरलम् पत्रम्, यत्र निरीक्षकाणाम् अनवधानता न तिष्ठति तथाहि तावत् विहारस्य प्रथम परीक्षायां विचिनोमि, वर्तमान वर्षे हिन्दी गद्यानुवाद विषये "अथवा" इति पदं विलिख्य कीदृशी तेषामनवधानता, व्याकरणपत्रे प्रीणाम् इति लेखनीये प्राणाम् इति लेखः किमिव तेषाम् प्रमादं द्योतयति। कुठाराघातोऽयम् प्रथम परीक्षार्थिनामुपरि, एवमेव मध्यमायां तत्तदाचार्य खण्डे च प्रश्नदातृणां निरीक्षकाणाञ्च ग्रन्थबहिर्भूत विषय प्रश्नेन दृष्टिपथमारोहति तस्मात्

परीक्षकाणाम् निरीक्षकाणाञ्च सावधानता नितरामपेक्षणीया, कम्पिकानिरीक्षणे विद्वद्भिरिदम् अवश्यं चिन्तनीयम् यद् इमम् लेखम् लेखकोऽभ्यस्य लिखितवानस्ति प्रश्नं निर्विघ्न वा, यज्ज्ञानं कम्पिकानिरीक्षणेन न दूरुहं भवति, यश्छात्रो ग्रन्थमधीत्य लिखति तत्र सत्यामपि त्रुटौ निरीक्षकाणां दयां उचितस्थले अपेक्षिता यश्चाभ्यस्य लेखं लिखति, तस्मै मन्मतेन लेखाङ्कदानम् अनुचितमेव यतोऽयमुत्तीर्णः इमामेव परिपाटीं प्रचालयेत् परिपाट्या अनया शास्त्रस्य मूलोच्छेदः सम्भवति यत्र कारणत निरीक्षकाः एव अधिगच्छन्ति इति निजमूलोच्छेदनेन न कस्यापि पाण्डित्यं परिगणितं भवति, तस्मात् तत्तच्छास्त्रमर्यादारक्षणव्रतैः विद्वद्भिः परीक्षया वृद्धिं गच्छती शास्त्रलोप परिपाटी नूनं निवारणीयेति अलम् महताम् आक्षेप प्रसगेन ।

---

# कश्मीर राजतरङ्गिणी

ले० पं० गोविन्दराजानकः M. A., M. O. L., L. T., शास्त्री, प्रभाकरः,

( पूर्वतोऽनुवर्तते )

काश्मीरिकौ तु पौराणामनुमत्या जनेश्वरम् ।
विज्ञापयामासतुस्तौ सम्राजमकभरमुभौ ॥
आवामाश्रितवन्तौ त्वां त्राहि नौ चातकाविव ।
अत्यन्तं ग्रीष्मसन्तापसन्ततौ विप्रकाङ्क्षिणौ ॥
पौरैः संप्रेषितौ दुष्टराज्ञा दुःखितैः कारणं विना ।
इच्छद्भिः स्वात्मनो मृत्युमर्द्धांगार्तैरिव प्रभो ॥
राजा, धर्मविपर्यास-शल्येनाविद्धमानसः ।
कान्दिशीकान् स कुरुते जातिभ्रष्टान् जनान् बलात् ॥
तत् प्रभो यदि त्वं कालधर्मेण वर्तसेऽनिशम् ।
काश्मीरिकान् पाहि न स्तान् प्रतापार्जितमण्डलः ॥
काश्मीरराज्यलाभाय बद्धकदयौ भवेव ते ।
दोर्दण्डविभ्रमोत्कम्पकम्पितारातिसंहते ॥
लज्जाधिकृतकौलीन्यसत्कृती रञ्जिताकृतिः ।
गभस्तिरश्मिद्योतादिदर्शनेऽपि पराङ्मुखा ॥
भोगिनीपदसंप्राप्तदासीभावा कदापि सा ।
काश्मीरिकी सुललना न कार्या शीलसंयुता ॥

श्रीः

महाभिजनजातास्तेऽपि च दासपदं नराः ।
नालम्बनीया निखिला विद्यानैपुण्यशालिनः ॥
स्वचातुर्यदरीस्वामिभूतास्तेष्वपि ये जनाः ।
मुख्यास्तेऽधिकृतां स्वामिन् प्रापणीयाः कलोद्भताः ॥
अथ ये भवतां मुख्यास्तत्रस्थास्तेऽपि धार्मिके !
अन्नोद्भवे च व्यापारे दर्शयेयुर्न स्वामिताम् ॥
पुरातनैश्च क्षोणीन्द्रैरिदं कर्तव्यताचणैः ।
स्वक्रौर्यकर्मणा ये च निष्करा दुर्जनाः कृताः ॥
निर्वर्तनीयाः सकरास्तेऽपि शाठ्यसमन्विताः ।
पराक्रमप्रापितारिस्त्री-वैधव्य कृपानिधे ।
मलीमसीवृत्तियुक्ताः परवञ्चनलालसाः ।
धूर्ताः कुकर्मणा प्राप्तजीविका दुर्नयाङ्किताः ॥
सर्वसहैन्द्रप्रजयोर्ये चापि परिपन्थिनः ।
अङ्गीकृत-पदास्तेऽपि न कार्या राज्यकर्मसु ॥
इत्येवं गदतोस्तूष्णीं स्थितयोः शान्तयोस्तयोः ।
कपोतयोरिव श्येनसंत्रासाच्छरणार्थिनोः ।
विज्ञाय मतमुत्कृष्टमवगाह्य च तत्त्वतः ।
विविच्य सार्वभौमस्तौ तथास्त्वित्यब्रवीत् तदा ॥
चत्वारिंशद्विंशतिं च सहस्राणि जनाधिपः ।
पत्तीनां सादिनां दत्त्वा कासीम प्राहिणोत्ततः ॥
विधाय हैदराचक्रादीञ् च स्वाननुयात्रिकान् ।
जेतु ततोऽथ कश्मीराञ कासीमः प्रययौ मुदा ॥
सुखस्पर्शिवायुवेगादिष्टा भावुकभाविताः ।
समुल्लंघितकान्तारदेशास्तेऽपि जवा गताः ॥
नदीमार्गगतास्तीर्त्वा प्रापुः कश्मीरमण्डलम् ।
दशत्रिंशत्सहस्राणि कृत्वा सेनां रणाय सः ॥
याकोफो निर्गतः शूरपुराच्छूरो जिगीषया ।
योसोभसैदः संप्राप्तकिंचित्सेनांशविस्तरः ॥
साकं साहाय्यकेनालंशरेणामन्दबुद्धिना ।
गत्वा केशाश्रमं भीतो जुगोपात्मानमेव च ॥
जडीबले दुःखशालां राजकीयां गृहाणि च ।
दग्ध्वा संलुण्ठ्य निर्यातो धूर्तः पर्णोत्समार्गतः ॥

गृहीत्वामन्दभागो याकोफसैन्यात्समन्ततः ।
निर्गत्यानुगतो राजा सेनया स बलान्वितः ॥
बभूवानुप्लवस्तेषां कुर्वतां दारुणं रणम् ।
विश्रृङ्खलारातिद्विपोन्मथने मृगघातिनाम् ॥
याकोफोऽथावशिष्टेन सैन्यभागेन केवलम् ।
युयुधे विजयाकांक्षी धूर्तः........॥

---

## मनुस्मृतिकालः ।

पाश्चात्यानां मतिर्मनुसमयस्य निर्णयार्थं विवधैव प्रतीयते । एलफ़िंस्टन महाशयस्तु खृष्टाब्दात् नवशतवर्षपूर्वं, हंटरः पञ्चशतपूर्वं, सर डबलिउजोंस मिश्रप्रदेशप्रथमराज्यसमकालीनो मनुरिति ते वदन्ति । प्रोफ़ेसर जी बहुलरस्य मते खृष्टाब्दात् द्विशतवर्षानन्तरं मनुकालः यवनकाम्बोज-शकशब्दानां मनुसंहितायां दृष्टत्वात् । मिश्रदेशस्य प्रथमं राज्यं तु केचित् खृष्टाब्दात् षट्सहस्रवर्षपूर्वं मन्यन्ते । इदमल्पसंख्यकानामैतिहासिकानां वर्णनेनैव ज्ञातुं शक्यते बुधैः यतो भिन्नैव मतिः सर्वेषां पाश्चात्यविदुषाम् । ज्ञातपूर्वमेवैतद् यत् प्रायशः महाभारत युद्धस्य कालो ऽस्मात् पञ्च सहस्र-वर्ष पूर्वमासीत् । यवनकाम्बोज शकजातीनां नामानि ग्रन्थेऽस्मिन् पतितानि दृश्यन्ते सत्यमिदं मन्यामहे । परन्तु एतेन निर्धारणमिदं यत् यवनादिका जातयः यूनानदेशीयाः सिकन्दरसम्राट् कालीनाः खृष्टाब्दात् त्रिशतवषपूर्व-मेव न चान्याः काश्चनेति तु प्रमाणयुक्तं न प्रतिभाति, यतः सर्वेषां मते महाभारत-ग्रन्थः सिकन्दर सम्राजो भारताक्रमणकालात् प्राचीनतरोऽस्ति । प्रायशः भारतवर्षीयाः सिन्धु नदस्य पश्चिमदेशस्य नाम 'यवन' इत्यभ्यधुः । तत्र न्युषितानां जातीनां नाम 'यवना' इति । यो महाभारतयुद्धकाल ऐति-हासिकैः त्रिशच्चतुर्दशशतवर्ष पूर्वं खृष्टाब्दादनुमितोऽस्ति सोऽपि तेषां प्रमाद एव । यतो महाभारते स्वयमेवैतादृशानि प्रमाणानि सन्ति येभ्यः कालस्या-स्य प्राचीनता प्रतीयते । मनुस्मृतेः श्लोकानां ग्रन्थेऽस्मिन् दर्शनेन संकल्पोऽयं दृढ़ी भवति । यथानुशासनपर्वे "मनुनाभिहितं शास्त्रं यच्चापि कुरूनंदन" शान्तिपर्वे "तैरेवमुक्तो भगवान् मनुः स्वायम्भुवो ऽब्रवीत्" । पर्वेऽस्मिन्नन्यत्र च "सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्" इत्यादिभिः प्रमाणैः केचनं श्लोकाः महाभारत मनुस्मृत्योः सर्वथा उभयत्र दृश्यन्ते । केचन प्रक्षिप्ताः प्रतीयन्तेऽन्ये च ग्रन्थादुद्धृताः सन्ति ।

मनुसंहितायां वर्णाश्रम-धर्माणां संग्रहोऽस्ति। महर्षिभिर्याचितः सन् भगवान्मनुः "भगवन् सर्ववर्णानां यथावदनुपूर्वशः। अन्तर प्रभवानाञ्च धर्मान्नो वक्तुमर्हसि" ॥ एतादृशैः वचनैः शास्त्रमिदमरचयत्।

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः। ऊरु तदस्य यद् वैश्यः पद्भ्यः शूद्रोऽजायत ॥ इति वेदमन्त्रमिदमनुसृत्य

सर्वस्य यस्य तु सर्गस्य गुप्त्यार्थं स महाद्युतिः। मुख बाहूरूपज्जानां पृथक् कर्माण्यकल्पयत् ॥ आरम्भ एवैतादृशानां श्लोकानामागमनात् केचन पाश्चात्याः मनुकालं महाभारत-रामायण समयानन्तरमेव मन्यन्ते। परन्तु यथानिर्दिष्टं पूर्वं तेषां मतमसमञ्जसमेव प्रतीयते। नात्र सन्देहो वर्तते यत् मनुकालः महाभारत-रामायणकालाभ्यां पूर्वतमोऽस्ति मनुस्मृतेः श्लोकानां महाकाव्योर्द्वयोरागमनात्।

इदमपि निश्चितमेव यत् मनुस्मृतौ श्लोकानामाक्षेपोऽपि दृश्यते, यतो आवश्यकेषु स्थलेषु केषुचित् परस्परविरोधो विषयाणां वर्णितोऽस्ति — मांसमदिरा प्रतिष्ठा विषयेषु यथा दृश्यते। परिज्ञाय सर्वमिदं मनुसहितायां निर्दिष्टविषयाणां गौरवं न केनचिदपि निराकर्तुं शक्यते। मनुष्याणामाजन्मतः शरीरत्यागपर्यन्तं विधिनिषेधपूर्वकाः सर्वे वर्णाश्रमधर्माः संस्कारश्च सम्यक् प्रकीर्तिताः भगवता मनुना। ब्रह्मचर्यव्रत-पूर्वकसांगोपांग सहितं वेदानामध्ययनं पूर्वस्मिन् वयसि मानुषधर्मस्य प्रथमं कर्तव्यमादिष्टम्। तथाहि

"यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥
यो द्विजोऽनधीत्य वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥"

अन्यत्र च—

"अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति" इति

वेदानधीत्य गृहधर्ममाचरेदित्यपि भगवद्वचनैः स्पष्टमवगम्यते। निगमेऽपि धर्मस्यास्याज्ञा खलु विधीयते। "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्"। द्वितीये भागे आयुषो गृहधर्मान् संस्कारांश्च सम्यक् विधाय वानप्रस्थाश्रमे आयुषस्तृतीयेंऽशें प्रविशेत्। चतुर्थे तु सन्यासधर्म आदिष्टः। चतुर्वर्णानां धर्माश्च स्पष्टतया पृथक् पृथक् निर्दिष्टाः। यथा —

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्च ब्राह्मणानामकल्पयत् ॥

इत्यादिभिर्वचनैः सर्ववर्णाश्रमाणां धर्माः निगदिताः ।

समयेऽस्मिन्नार्य जातेराचारव्यवहाराणां प्राचीन सभ्यतायाश्च परिष्कारः दरीदृश्यते । न केवलं भारतवर्षे ऽस्मिन् वर्णाश्रमधर्माणां परिस्थितिर्लक्ष्यते प्रत्युत सर्वस्मिन् संसारे पुण्यधर्मकर्मणामुद्भवः । यतो भगवत् मन्वादेशेन सर्वत्र शिक्षायाः वैदिकीयायाः ब्राह्मणैः प्रचारः कर्तव्य आसीत् ।

तथा हि—

एतद्देश-प्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवः ॥ परं कालस्यास्य विस्तरेण वर्णयितुं नास्त्यभिप्रायोऽस्माकं लेखेऽस्मिन् । अतो मनु-कालस्य संक्षिप्त वर्णनेन विरम्यते ।

—कुलभूषणः

---

# "विद्या"

प्रो० जगद्धर जाडू एम. ए. शास्त्री, एम. ओ. एल.,

ज्ञानं स्थावरजङ्गमयोरऽन्योन्याऽवच्छेदकम् । प्रकृतितत्त्वान्वेषिणां प्राच्यानां पाश्चात्यानां वा नाऽस्ति काचन विप्रतिपत्तिः पुरो दृश्यमानायाः सृष्टेः चराचरत्ववर्णने । "परमेश्वरात् प्रभृति ये केचन 'प्रमातारः' सन्ति, ते सर्वे वृक्षादिभ्यः स्थावरेभ्यः अनुद्भूतचेतनेभ्यः पशुभ्यो वा ज्ञानद्वारैव सर्वोच्चपदवीमधिगच्छन्ति"—इत्येतत् तैः सम्यक् निर्धारितं विद्यते मयापि जन्मतः प्रभृति एव तनन्धयेषु अपि ज्ञानमङ्कुरावस्थायाँ दरीदृश्यते पूर्व-संस्कारद्वारा, तथापि तैरपि बाह्यस्य सर्वस्य पदार्थव्रातस्य ज्ञानेन्द्रिय-द्वारा कर्मेन्द्रियैर्वा शनैः शनैः भान आसाद्यते । अतश्च ज्ञायते यत् खलु ज्ञानं सर्वदा सर्वथा क्रमिकं न तु क्रमरहितम् । स्तनधयो हि जातमात्रो यदैव रोदिति, तदैव असौ निजेन्द्रियद्वारा स्वात्मनो भिन्नस्य—तदा वै तद्दृष्ट्या स्वात्मनो भिन्नस्य--अभिन्नस्य वा यस्य कस्यचन वस्तुनः असंस्कृतं अविशिष्टं अनुभवं करोति । अनन्तरं निजां विवेचयित्रीं बुद्धिशक्ति-मनुसृत्य क्रमशः मन्दं मन्दं स्वीयेन यत्नेन मातृपितृभ्रातृ-स्वस्रादि बधु-वर्गस्य शिक्षणेन वा तस्य वस्तुनः तां तां विशिष्टां अनुभूतिं प्राप्नोति ।

एतादृशस्य एव क्रमिकस्य ज्ञानस्य प्रोद्बोधनाय विकासनार्थं वा विद्यायाः आश्रयः स्वीक्रियते ।

विद्यायाः द्वैविध्यम् । साधारणा विशिष्टा च—स्थूलसूक्ष्म—इति क्षेत्रद्वय दृष्ट्या ऐहिकामुष्मिक दृष्ट्या वा । विद्या शास्त्रीया व्यावहारिकी वा । शास्त्रीय विद्या प्राप्तये शास्त्राणाँ चरमाणि फलानि . युक्तियुक्त-ससन्दिग्धतया च चित्रितानि सन्ति । विद्योपार्जनाय शास्त्ररचयितॄणाँ भिन्न-मतावलंबिनामपि वचनचातुरी विवेचन—प्रणाली, विषयोद्घाटन रचना शैल्यादयः समस्ताः अभ्यसितव्याः जनैः । "बालादपि सुभाषितम्"—इति लोकोक्तेः तावत्काल पर्यन्तं सार्थकता न दृश्यते, यावन्तं कालं जिज्ञासुना मतवैपरीत्यं सम्प्रदाय-पक्षपातं वा दूरीकृत्य मनसः, सत्यार्थस्य पर्यवेक्षा न विधीयते । मतद्वेषेण हि जिज्ञासुः स्वच्छतः अन्यमतावलंबिनां प्रतिपाद्य-विषये साधिकानां बाधिकानाँ वा युक्तीनाँ सम्यक् समालोचनां कर्तुं न शक्नोति । यतोऽस्य महत्याः अनर्थपरम्परायाः सम्भवः ।

जिज्ञासुना हि ज्ञातव्यविषयं प्रति यत्किंचित् येन केनचित् पल्लवितं स्यात्, तत् सम्यक् स्वमति-वैभवेन परीक्षणीयम् । नतु स्वीय लोचने निमील्यैव पदार्थज्ञानस्य उपादानं हानं वा कर्तव्यम् ।

विश्वसृष्टौ दृश्यमानं यत् किंचित् वरीवर्ति, तत्सम्बन्धि ज्ञानं साधारणं तथा असाधारणं च । साधारणज्ञानेन खलु तस्य तादृशस्यैव वस्त्वंशस्य वेदन-संभवः यस्य आवश्यकतां सः अनुभवति । साधारणपुरुषो हि यस्य वृक्षस्य नाम्नैव परितुष्यति, वनस्पतिशास्त्रवित् तस्यैव वृक्षस्य आपादचूडं बहुविधज्ञानोपार्जनाय कटिबद्धो भवति । स तु बीजारोपणात् प्रभृति वृक्षध्वंसपर्यन्तं सर्वा एव तदीयाः विकृतीर्निभालयति । कस्य अंशस्य क उपयोगः ? कुत्र ? कीदृक् ? इति सर्वं विवेचयति सः । न केवलं वृक्षस्यैव परिचयः क्रियते तेन, परन्तु तदङ्गभूतानां स्कन्धशाखादीनां पल्लवकुसुमफलादीनामपि । स हि साकल्येन वृक्षज्ञानं विशिष्टरीत्या आप्तुं प्रयतते. तस्य खलु वृक्षज्ञानं विशिष्टज्ञानम् । अतः तल्लाभाय विशिष्टा विद्या अभ्यसनीया । पूर्वस्मिन् अपि काले भारतवर्षे संस्कृत-भाषायाः सर्वतः प्रचारे सति दार्शनिकाः स्वीये स्वीये दर्शने एव, अथवा कविपुङ्गवाः साहित्यशास्त्रवेत्तारो वा निजकृतिषु एव स्वकौशलं प्रथितवन्तः । परन्तु तादृशी प्रथा इदानीं विरलतयैव दृष्टिगोचरी भवति । पल्लवग्राहि पाण्डित्यं एव अधुना वरीवर्ति । केचन सज्जनाः अधुनापि सन्ति लोकेऽत्र, ये केषुचन विषयेषु सर्वज्ञत्वं प्रकटीकुर्वन्ति । परन्तु सम्यक विवेचनया पश्यामो वयं यत्

तस्य यस्यां कस्यांचिदपि ज्ञानशाखायां स्थूलज्ञानमेव वर्तते, न तु सर्वाङ्गीनः परिपक्वः परिचयः ।

अन्यथा च द्वैविध्यं विद्यायाः; एका खलु ऐहिकी, द्वितीया आमुष्मिकी। अर्थकरी मोक्षमार्गाधिगमयित्री द्वितीया-संसारे पुरुषः प्रवर्तते प्रथमया। अन्यया ततो निवृत्तिं भजते ऽसौ । पदार्थज्ञानं हि उभयथैव सफलम् । प्रवृत्ति-दृष्टया, नानाविधि क्रियापवर्गसफलीभूतजन्मा मनुष्यः ऐहिक सुखभाक् भवति, अस्य निदर्शनभूताः इदानीन्तनाः बहवः विज्ञानशास्त्रपारङ्गताः विद्वांसः । ते हि जनता-विस्मापयित्रीभिः निजाभिर्महार्घाभिराविष्कृतिभिः सर्वाः सभ्यजातीः सर्वाणि च सभ्यराष्ट्राणि अनुग्रहीतवन्तः अनुगृह्णन्ति च । जनता च तान् सादरं प्रशस्य बहुविधपारितोषिकाणां पात्रीकरोति ॥

आयुष्मिकी विद्या तु वेदान्तोपनिषद्विषयका मोक्षपथ-प्रदायिनी, या सद्गुरु चरणसरोरुहसेवया पूर्वपुण्यकर्मफलप्रेरणया च विरलैरेवाऽधिगम्यते । अस्याः रसचर्वणसुखं वाचामगोचरं मनसाऽपि अचिन्त्यम् । "चतुर्विधाः भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ" ॥ इत्यादिभिः श्रीमद्भगवद्गीतादियोगशास्त्रोपनिबद्धैः वाक्यैः मुमुक्षूणां अधिकारिभेददर्शनेन तेषां मोक्षपथः अन्यैरुपायादिभिः च सरलीकृतो वर्तते भगवत्पादपद्मनिहितचित्तैः पूर्वैराचार्यैः । यत्संसेवनेन जनानामपवर्गप्राप्तिः निश्चितैव । सन्त्यत्र उदाहर-णानि —व्यास-पूरक-जनकादयः, पूर्वे, अवरे च सूरतुलसीदासादयः, यैः सार्वदिक-शान्ति सुखलाभाय स्वर्गसुखमपि तृणाय अमन्यत ।

'विद्योपार्जनप्रणाली प्रत्ना समीचीना, अथवा आधुनिकी' ? इत्यत्र मतभेदो दरीदृश्यते । परन्तु इदानीन्तनानां सभ्यंमन्यानां गुरुशिष्याणां च अनु-चितं व्यवहारं विलोक्य पुरातनीं गुरुशिष्यभक्तिं, तेषां श्लाघनीयं सम्बन्धं च अवधार्य, जनसमुदायसंमतिः पुरातनी शिक्षाशैलीमेव उपयोगितया स्वीकरोति । अद्यत्वे तु विद्यार्थिनः 'गुरुशुश्रूषा कीदृशी' इति नैव जानन्ति । विद्योपार्जन अधुना व्यवहाररूपतया स्वीक्रियते । अथवा स्वस्मिन् स्वस्मिन् समये स्वा स्वा एव शोभना इत्यलं पदाधिकारचर्चया ॥

विद्या तु उपेयदृष्ट्या अनुसरणीया न उपायदृष्ट्या । परन्तु बहवः उपाय-दृष्ट्यैव विद्यां स्वीचक्रुः स्वीकुर्वन्ति च।। अर्थकरी विद्या तु उपायदृष्ट्येव पठ्यते परन्तु पारलौकिकी विद्या उपेयदृष्ट्यैव अनुशीलनीया । मृत्युकाले ब्राह्मी विद्यैवं पुरुषं मोक्षदात्री न च उपायदृष्ट्या पठिता व्याकरणादिविद्या—"प्राप्ते काले संनिहितमरणे नहि नहि रक्षति डुकृञ् करणे" इति ।

विद्या स्वात्मोन्नत्यै परोन्नत्यै च सोपानभूता । 'विद्ययाऽमृतमश्नुते' —इत्युपनिषत् । उन्नतिरत्र कायिकी वाचिकी मानसिकी च, यामधिगम्य पुरुषः सकललोकचूडामणिभूतः अन्यान् विमार्गगान् नानादुःखक्लिष्टान् जनान् उद्धरति सद्विद्याप्रातौ स्वरपदभेदप्रथाध्वंसः, स एच मुख्यः पुमर्थः—इति अलं बहुना बहुज्ञेषु ॥

---

# संस्कृत-भाषाभ्युदयः

---

ले० गोविन्द राजानकः शास्त्री M.A., M.O.L , L.T., Prabhakar.

---

युज्यते ह्येतत्—यत्

"पृथिव्यां रत्नसूः श्लाघ्या तत्र धनपतेर्हरित् ।
तत्र गौरी गुरुः शैलो यतस्मिन्नपि मण्डलम् ॥'

तस्मिन्नेव रत्नाकर इव नानारत्नमये कश्मीरापरनाम्नि गिरिजागृहप्राङ्गणे मुनिवरकश्यप जन्मभूमौ भूललामे भूते मण्डलेऽस्मिन् न केवलं श्रीनगरमेवाप्युत नगराद्बहिर्विविधान् विविधान् ग्रामपत्तन-निचयान् मण्डयामासुः कैय्यट जय्यट मम्मटादयः साहित्यमर्मज्ञाः फणिभावितं विषमयमपि कालकूटमिव गोनर्दीय भगवत्पतञ्जलि-मुनिवरनमितं व्याकरणमहाभाष्यपारावारमवगाहयन्तः करामलकवच्च सर्वजनसमक्षं प्रकाशमानमादर्शमिव दर्शयन्तो व्याकरणाचार्या द्वैतभासांमनि जगत्यस्मिन् अवगाह्य निर्मथ्य च स्वतर्कपरिपाटी प्रणाल्यापास्य निःसारानुपाधियुतान् रथ्यप्रवाहानिव मतान्तरसमूहान् स्थापयामासुरद्वैतं शैव परम निर्वाणदं दिव्यं देवयानं भट्ट-श्रीकल्लटादयोऽन्येऽपि चाचार्यप्रवराः पूज्यपादा महामाहेश्वराचार्याः श्रीमदभिनवगुप्तपादास्तन्मार्गानुयायिनश्चान्ये उत्पलदेवादयः क्षेमेन्द्रादयश्च गहनार्थविवेचका हरविजय-विक्रमाङ्कदेवचरिताद्यपूर्व महाकाव्यरचनापटीयांसोऽभूवन्नत्र महान्तो महाकविप्रकाण्डाः । येषु च विदेशीय महाराज वितरितां महतीं विभूतिमपि विल्हणादयो वञ्चनामेव मेनिरे । ते महापण्डिता अन्ये च मुक्ताकणा शिवस्वामिप्रभृतयो निखिलाः कवितावारविलासिनीरसिका आनंदवर्धनादयश्च लोकप्रदायकाः कह्लणादयो हि ऐतिहासिक शिरोमणयः सर्वं एव सर्वत्र सर्वदा सवथा सर्वैरपि प्रतिपूज्यन्तेस्म येषां सुगृहीतनामधेयानां नामश्रवणेन सर्व एव स्वात्मानं पवित्रीभूतमाशशंसुः । तस्मिन्नेवास्मिन्

कश्मीर मण्डलेऽयशः सैव उत्तमं संस्कारमावहन्ती: सस्कृतभाषा या कदाचित् सर्वभाषा जननी भूता जननीतोऽप्यधिकं गौरवं लेभे या हि दोग्ध्री कामानां विपदनुत्सादयन्ती मङ्गलानां अतटान मनोरथानां प्रवाहानां प्रसवित्री भूयसे मङ्गलाय राजाधिराजै-र्धराधिपैर्भोजादिभिरपि सत्कृता प्रचारिता प्रशंसिता प्रमाणीकृता सेयमिदानी मस्मिन्नेव मण्डले नगरे च न्यक्कृता निर्वासितेति महदिदं खेदास्पदम् अहो किं वा वदामो वयं सुचिरं कठोरमतिदुःसहं मृतभाषेति दुर्व्यपदेशं भजन्त्या विष-विस्फोटेनेव दारुणेन मूर्च्छिताया स्तपस्विन्याः अचिरेण परां समुन्नतिं प्रतिष्ठां आपन्नाया देवभाषाया महीयसा समारोहेण विजृम्भमाणं अनल्पमाश्चर्यमुत्पादयन्तं भागधेय परिणामम् । येयं गृहलक्ष्मी नयनयोरमृतवर्तिः कर्णयोरमृतनिष्यन्दो ऽनादिनिधना स्वयम्भुवोत्सृष्टाऽमृतमयी आत्मनः कला सुदर्शनवदनविराजमाना सहृदहृदयंगमविलासमहनीया सहृदयजनमनोरथलक्ष्यभूता रसिकसमाज सम्मानिता गैर्वाणी वाणी कमपि निरतिशयं परि तं भागधेयं परां काष्ठामधि-रूढमभ्युदयं निवेदयन्ती समेषाममन्दमाह्लादमुत्पादयन्ती समग्रं सश्रद्धं सकुतूहलम न्वाचिता । तस्या एव इदंपूर्व निर्दिष्टमीदृशंदेव भाषाया अभ्युदयमधिकृत्य इदन्तया निर्णेतुमशक्यःसस्कलानां वचामविषयः प्रमोदःकोपि जनयति आत्मानं परवशी कुरुते विलोचने भूयसा आनन्दवाष्पेण निरर्गलं प्रसरता परिपूरिते, रोमाञ्च कण्टकिता स्तम्भमापन्ना तनूः,अनवरतनकम्पमन्थरा अंगुलयः, तूलिकाप्यानन्दवष्पधारा -मिव निरन्तरं मषीं वर्षति मध्येमध्यं प्रमोदविकासिमानमेव किंकर्तव्यतामूढेव उत्प्लुति नृत्यति गायति गाढं हृष्यति अथापि च मानसं सन्तोषं जनयति । काव्यनाटकालंकारान् तर्कव्याकरणमीमासादीनि शास्त्राणि क्रमेण गेहेष्वेव समयाकुर्वन्तः जीविकालाभेन महान्तं खेदमनुभवन्तो लब्धप्रशस्तिम्भा निर्निद्रैरन लसरनुत्सृष्टोचितव्याभारैर्दिग्विजयं स्वप्रतिभया प्रतिपादयद्भिरायुर्वेद प्रमुख प्रतिष्ठैर्वाग्भट्टादिभिःप्रसारितमहिमाना देववाणीरसिका राजसभासु पण्डितसमाजेषु गीर्वाणगोष्ठीषु अविनश्वरां कीर्तिमाप्नुवन्तो भूलोकातिरिक्तानन्तरिक्षध्रुवमङ्गलचन्द्रादिलोकान् गेहेष्वेव तिष्ठन्तोऽपि परिभ्रमन्तः सर्वजनसमक्षं दर्शयन्तश्च दर्शं दर्शं चादर्शयन्तो महान्तः पण्डित-प्रकाण्डा हि सर्वे ते सहैवानया देवगिरा नाममात्रावशेषा इत्यहो दुःखास्पदम् ॥

अधुना हि महत्या असूययाभिहन्यमाना बालभावहृदयंगमेषु विहारेषु विमुखैरनियतवेलमश्नद्भिः शयनासनाशनसुखमविचिन्तयद्भिरनवरतं विविक्तमेव स्थलमभ्यस्तानामनुचिन्तनयान्वेषयद्भिः "किमनया संस्कृत विद्यया प्रतिपन्नं भवति सेयं निष्फला जर्जरिता मृतप्राया सर्वथाऽनादरस्थान भूतैवेति' कलयद्भिरिदानीन्तनैः ... दूरदेशे वैधेयैः

दौवारिकापशब्दैः प्रदीयमानाँ गलहस्तिकामप्यविचिन्त्य प्रभुदर्शनं प्रतीक्षमाणैः प्रदर्शितटन्त-मुकुलैः प्रपठ्यमानविचित्रसमयोचितविविध श्लोकैः साङ्गमधीयमानप्रभुसुप्रभातैः राचय्यमानवन्दिजनचरितै र्नीचावृत्तिरति महतायासेन न लभ्यते किं वास्माकं पाण्डित्यस्याभिजात्यस्य उपर्याच्छादितस्याति मूल्यैक लभ्यस्य दर्शनीयकंबलविशेषस्य प्रभुत्वेन हन्त ! हन्त ! आंगलकलाशालायां पठन्तो माणवका अस्मान् तिरस्कुर्वन्ति दैवं शोचतोऽनार्जनांमूलां भूयसीं विडम्बनां अवज्ञामसहमानाः कान्दिशीका इव कं शरणं व्रजामः । आंग्लभाषाया एवाभ्यसनं वरं निदानमित्यादि नवनवान् मनोरथानाकलयद्भिः मेट्रिक्यूलेशन् अफ ए० बी० ए० प्रमुखायां तत्कक्षायां पठतः सुमेधसो माणवकान् प्राप्तविरुदान् दृष्ट्वा नूनं स्वकीयं भागधेयं न्यक्क्रियते । कस्य हेतोरकाण्डे इतरेषां विरुदप्रदाने महानायासोऽस्माभिः कार्यः, एवमभिज्ञ निन्दनमसूयामूलक केषांचन पण्डितंमन्यानां साधारणं कर्म परन्तु नेद माद्यत्विकं विजृम्भणं चिराय विलसतीति दूरदर्शिनां तर्कसरणिः, यतोहि महाकवि सार्वभौमानां सुधामयवचसामग्रसराणां काव्यामृतवर्षं वर्षतां श्रीकालिदास-भवभूतिप्रमुखानामाचन्द्रतारकं सर्वस्मिन् संसारे प्रख्याति रेतदिदं गीर्वाण भाषाया माहात्म्यम् संस्कृत भाषाभ्युदयः देवगिरः निखिलभाषाजननीत्वं स्वभावसिद्ध कर्म किं बहुना सर्वथा जितमनया दिशि दिशि लब्ध भूरिप्रचार संस्कृत भाषया । अतएव श्रवणसुभगं कमनीयं हितकरं कालत्रयप्रचारि तलातलात्तपोलोक निरोक्षकं वीतरागाणां विजितेन्द्रियाणां निदिध्यासनपरायणानां कन्दमूलकलितवृत्तीनां मुनीनां वाग्जालं सर्वत्र प्रसरति । अतएवाधीतकाव्यनाटकालंकाराःव्युत्पन्ना. सोल्लासं शास्त्रेषु कृतश्रमाः प्राच्यपराच्यदेशविशेषेषु समुपलभ्यन्ते । अतएव शर्मण्यादिदेशेषु हिटलरप्रभृतयो निखिलाः पण्डिततल्लजा नीतिनिपुणा देवगिरः स्वदेशविशयेषु प्रचारमावश्यकमंगीकुर्वन्ति । अतएव ग्रेयरसन मेकडानलादय उत्कृष्टतमं सम्मानं प्राप्नुवन्त स्वात्मानं कृतकृत्यं मन्यन्ते । अतएव मोक्षमूलरादयो विचक्षणा देवगिरोऽभ्यसनेन संस्कृतमात्मानं विद्यातपोबलेन ब्राह्मण्यतामात्मवगच्छन्ति अतएव अलक्षेन्द्रादयः कृतोत्साहा भारतभुवमाश्रित्य देवगिरश्चमत्कारं निरीक्ष्य शरणं तामेव भगवतीमात्मनः कलां अमृतां देवतां वाचं व्रजन्ति । चित्रं तर्कव्याकरणमीमांसावेदान्तादिषु शास्त्रेषु कृतश्रमाः सर्वत्र पूजार्हमासनं लभन्ते । यद्यप्यत्रामान्तसंन्तोषविशेषसूचका बहवो विषया विद्यन्ते तथाप्यस्या दिगन्तराल प्रसृतेन भास्वता विमलेन यशसा प्रभासमानाया निखिल भाषानिदानायः संस्कृतभाषाया एव अभ्युदयो योऽन्याभिर्दुहितृपदवीमापन्नाभिर्यौवनस्य परमामवस्थां गताभिर्नानादेशविसर्पिणीभिर्विविधनामधेयाभिर्भाषाभिरुपोढरागाभिरद्यशः प्रचारः प्रसारः संमा·

अग्रगण्यत्वमाप्यते—इति भीत्या इव परं विरम्यते लेखनी च परिश्रान्ता क्षणं विश्रान्तिसुखमनुभवतु काममिति सर्वं शिवम्।

---

## विद्याशक्तिः

१. अस्त्यस्मिन्नसारे संसारे मनुष्यजीवनस्य चरमलक्ष्यभूता विद्यैव विद्यामयत्वादेव च शिवस्यापि शिवत्वम्। 'पुराणोऽपि स्थाणुः फलति किल कैवल्यपदवीम्' इत्यपि विद्याया एव प्रभावः। विद्यासंयुक्ता जीवास्त्यक्तदेहा अपि सदा जीवितास्तिष्ठन्ति। अमृतमयत्वात् विद्यायाः। उक्तमपि च—विद्ययामृतमश्नुते इति। तथा च विद्यायुक्तः जीवन्मुक्तः, विद्यावियुक्तश्च—जीवन्मृत इति कथ्यते। श्रुतिस्मृतीतिहासपुराणैर्हि भगवती विद्या नित्यमेवैकस्वरेण स्तूयत इति नास्त्यत्र काचिद्विप्रतिपत्तिः। दृश्यते च सर्वेषु सिद्धान्तेषु मोक्षसाधनभूता विद्यैवेत्यतो विद्यासम्प्राप्तिरेव मनुष्यजीवनस्य चरमलाभ भूता। इति,

२. यदैवैतादृशी विद्या केनचित्प्राप्यते। तदैव हि दुःखात्यन्तनिवृत्तिः परमातत्प्राप्तिश्च तेनाधिक्रियते। अस्य शरीरस्य सत्वे विद्योपार्जनमेव महत्कर्तव्यं बुद्धिमताम्। उलङ्घयति च यः कश्चित् स्व जीवतं तुच्छकार्येषु मनुष्यजन्म प्राप्य। स हि—

सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधाम्

अर्कमूलस्य हेतोरित्येतां कविभणितिं सार्थकां करोति। तथा च शरीरावसानेऽन्धंतमः प्रविशतीति विद्यासम्प्राप्तिं च विना विद्यायाः स्वरूप त यथावत् ज्ञायत इत्यतोऽत्रविषये किंचिन्निवेदयितुं मया प्रयत्यते।—

३. साधारणतयाहि ज्ञायते सर्वैरेव विद्याशब्दस्यार्थः। परमत्र तादृशेन संकुचितेनार्थेन न कार्यसिद्धिरिति। 'सा विद्या या विमुक्तये' इति विद्याशब्देन नास्ति साधनरूपा विद्यैव श्रुत्याभिप्रेता। किंतु 'अनृतं तु विद्या' विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते' इति साध्यरूपापि (परमानन्दरूपापि) विद्या श्रुत्यभिप्रेता। विद्याशक्तिर्हि सर्वासां शक्तीनां मूलभूतेत्युपनिषद्-वाक्यैः सुष्ठु प्रतीयत इति।

४. (१) विद्यते देशकालानवच्छिन्नत्वेन वर्तते या सा विद्या, विद् सत्तायामित्स्माद्धातोः।

(२) अथवा—

विद् ज्ञाने, विद्यते ज्ञायत इति व्युत्पत्त्या विद्या।

(३) अथवा

श्रीः

विद्लृ लाभे, इत्यस्माद्धातोः परमानन्दत्वेन लभनीयेति व्युत्पत्त्या सच्चिदानन्दरूपा परमाशक्तिर्विद्येत्यर्थाः सम्भवन्ति विद्याशब्दस्येति।

(१) दिक्कालाद्यनवच्छिन्नत्वेन वर्तते या सा विद्या, अर्थात्—या सर्वत्र सर्वस्मिन् समये विद्यते सा विद्या कथ्यते। न ज्ञायत एषा सर्वव्यापिनी शक्ति र्योगानुभवैत विना। यैश्च बुद्धौ मनः, बुद्धिरात्मनि, अभ्यासेन लीयते। त एवैतादृशः योगिनः याथातथ्येनैतां ज्ञातुं शक्नुवन्तीत्येषैवाध्यात्मिकी विद्या विद् सत्तायामित्य माद्धातोर्व्युत्पन्ना इति।

(२) यावान् ज्ञानराशिरस्माकं विदितोऽथवा यत् विद्यते, तत्सर्वं विद्यायामेवान्तर्भूतं भवतीत्येषाधिभौतिकी विद्या, विद् ज्ञाने, इत्यस्माद्धातोर्जातसिद्धरूपा। इति।

(३) या विद्या सर्वैरेव ज्ञातुं शक्यते। या च नानाविधरूपधारिणी भक्तानां मुक्तिदात्री भवति। यस्याश्च वर्णनं पुराणेष्वागमेषु चानेकप्रकारेण प्रकीर्तितमस्ति। साधिदैविकी विद्या, विद्लृ लाभे इत्यस्माद्धातोः परमानन्दत्वेन लभनीयेति व्युत्पत्त्या च व्युत्पन्ना। इति त्रिविधैषा शक्तिः। यथा दाहकताग्निसम्बन्धिनी भवति। तथैवैषा शक्तिरपि ब्रह्मसम्बन्धिनी। अक्षमालिकोपनिषदि पि 'यत् सूत्रं तद्ब्रह्म' 'यत् सुषिरं सा विद्या' इति विद्यायाः ब्रह्मसम्बन्धित्वं दर्शितमस्ति।

'परम ब्रह्ममहिषी' इति कथयता भगवता शंकराचार्येणाप्येतदेव द्योतितम्।

'परमाह्लादशक्ति': इति कथयतां वैष्णवाचार्याणामप्ययमेव एवाभिप्रायः।

एतदेवोपनिषदाप्युक्तम्। तथाहि—

द्वे अक्षरे ब्रह्मपरेऽनन्ते विद्याविद्ये निहिते यत्र गूढे।
क्षरन्त्वविद्या अमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः॥१॥
एषैव च बन्धमोक्षयोः कारणभूता
सा विद्या परममुक्तेर्हेतुभूता सनातनी।
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी॥ २॥ इति।

विद्यैव च परमानन्दरूपतया परमाराध्या शक्तिः। किन्त्वेतां मूलभूतां शक्तिं केवलं नैर्गुण्यस्थाद्वैतासिद्धान्तपरिनिष्ठितयोगिन एव याथातथ्येन ज्ञातुं शक्नुवन्ति। अतः साधारणानां मनुष्याणामर्थेऽस्या गुणत्रयानुरूपाया विद्याया रूपत्रयमुक्तमस्ति। बृहज्जाबालोपनिषदि विद्यासम्बन्धे इत्थं वर्णितमस्ति—

विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते।
गुणत्रयाश्रयाविद्या सा विद्या च तदाश्रया॥३॥

शुक कृतसत शत्यामपि—
हेतुः समस्त जगतां त्रिगुणापि दोषै—
र्न ज्ञायसे हरिहरादिभिरप्यपारा।
सर्वाश्रयाखिलमिदं जगदंशभूतम्
अव्याकृता हि परमा प्रकृतिस्त्वमाद्या। ४॥ इति।

हे देवि! त्वं त्रिगुणापि—त्रयो गुणाः यस्यां सा। सत्वंरजस्तम त्रयो गुणाः। सत्वगुणा त्वं वैष्णवीशक्तिः सती जगन्ति रक्षसि। रजोगुणा ब्राह्मी शक्तिः सती जगन्ति सृजसि। तमोगुणा त्वं माहेश्वरी शक्तिः जगन्ति संहरसि। अत एव त्रिगुणाप्यसि। हे देवि! त्वमव्याकृतासि। पि न व्याकृतासि पदेन वा वाक्येन वा। 'यतो वाचो निवर्तन्तेऽप्राप्य मा सह' इति श्रुतेः त्वं च विद्यात्वेनपरब्रह्मतत्त्वमेव। यद्वा—

हे देवि! त्वमव्याकृतासि। न केनापि प्रकाशितासि परप्रकाशित्वान-गमाद् ब्रह्मस्वरूपस्य स्वयं प्रकाशत्वाभ्युपगमाच। तस्य त्वञ्च परब्रह्मतत्त्वमेव प्रकाशमानमततिशयानन्दविद्रूपमसीत्यर्थः।

इत्युपरि लिखितस्य श्लोकस्याचार्यशंतनुकृता टीकैषा।

या मुक्तिहेतुरविचिन्त्य महाव्रता त्व—
मभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः।
मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषै—
र्विद्यासि सा भगवती परमाहि देवी॥ ५॥

॥ इति शम्॥

लेखकः—निरञ्जन भुण्डु।

# संपादकीयम्

## दीर्घावलम्बः

सर्वस्याहंकारस्य वाधः पतनं भवति इति मानव समाजस्य साधारणो नियमः। श्रियः प्रियाः पाठकाः स्मरन्ति यत् पूर्वमस्माभिः कदाचित् श्रीः पृष्ठेषु बलेन लिखितमासीत् यत् श्रीः प्रत्रिका सदैव पाठकानामभ्यर्णे निश्चित समये प्राप्नोति। जन्मतः पूर्णं पञ्चवर्षं यावत् भगवतः प्रसादेनाभूत् कार्यं सर्वं निर्विघ्नम्। श्रीरपि पाठकानां हस्ते नियमेन विक्रमीय संवत्सरस्य चैत्राषाढ़ाश्विनपौषमासेष्व-प्राप्नोत्। परं रससंज्ञकस्य हायनस्य जन्मदिवसे महानसौ प्रत्यवाय आपन्नः। सर्वं लेखजातं त्वस्माभिः प्रायशो विक्रमीय चैत्रमास एव लवपुरीय नवयुग मुद्रणालये प्रेषितमासीत्। श्रीमतः पण्डित दीनानाथस्य दीर्घो लेखः मुद्रणालये सर्वेभ्यः प्रथममेव प्रहितः तदनन्तरमन्ये लेखाः। परं दैवात् मुद्रणालस्य स्वामी प० भीमसेन महाशयः कर्णपीड़ा रोगेन दीर्घं कालं यावत् दुःखितोऽभूत्। चिकित्सितोऽपि कतिपये मासेभ्यो नेदानीमपि मुक्तो भवति। असह्यामपि तां पीड़ां निराकृत्य श्रियः प्रकाशन कार्येऽत्यन्तमासक्तोऽभूत्। परं राज्यपीड़या युतस्य सहस्रद्वयसंख्याकं साचिरूपेण संग्रहीत-धनं पञ्चनदीय मन्त्रिणा स्वायत्ती कृतम्। दैवीयमापत्तिः श्रीयुक्तभीम सेनाय महतो दुःखस्य कारणमभूत्। तस्मादेव कालात् पिहिते मुद्रणालये स्वयं रोग ग्रस्ते च कार्यालयस्य स्वामिनि श्रियः प्रकाशनमप्यसम्भवं जातम्। लेखा अप्यस्माकं तेन मुद्रणालये अन्येषु प्रकाशनाय प्रेषितास्तेषु मध्ये केचन तु न जाने कुत्र गता, कुत्र वा विस्मृति सागरे मग्नाः। नवीन कार्यालयस्याध्यक्ष महाशयैः यद्यपि कृपया कार्यमस्माकं कृतं सर्वं, यदर्थं शतशो धन्यवादाः दीयन्ते तथापि तेषां प्रथमावसरे श्रियः कार्ये पत्रव्यवहारो प्रूफ़नामसकृत गमनागमने चातीतो बहुमूल्यः समयो नष्टश्च स्माकं पूर्व गौरवं च गतश्च तथापि भगवतोऽनुगृहेण षण्मासानन्तरमेव वयं पाठकानां सविधे श्रीः पत्रिकोपढौकनेऽर्हाः सञ्जाताः। चराचर जगतः सृष्टेः कर्तुः सर्वविघ्नानां हर्तुः सहस्रशः धन्यवादाः यदद्य गीर्वाणभाषाभिवर्धनी 'श्री' पत्रिका प्रकाशिता। मन्ये पुनर्जन्मैवास्याः। क्षमां कुर्वन्तु प्रियाः सभासदाः संस्कृत साहित्य परिषदः श्रीनगरस्य सर्वे च ग्राहकमहा-नुभावाश्च श्रोः पत्रस्य।

## संस्कृतभाषा राष्ट्रभाषा भवेत् किम्।

भवतु संस्कृत भाषैव नान्या काचिद् भारतवर्षीया भाषास्माकं राष्ट्रभाषेति संस्कृतानुरागिणामस्ति हार्दिकीच्छा। २-२-१९३७ तिथौ वर्ष ७ संख्या ७ इति मध्ये 'संस्कृतरत्नस्य' सम्पादकेन विदुषा पं० कालीप्रसाद शास्त्रिणा "श्रियः सम्पादक सविधे' शीर्षको लेखो लिखितः यस्मात् प्रतीयते यत् पत्रस्यास्य राष्ट्रभाषाङ्क कृते या टिप्पण्यस्माभिः कृता आसीत् तस्याभिप्रायो न सम्यग् ज्ञातो महानुभावेनानेन।

पं० वर्याणां सिद्धान्तो "यत् भारते वर्षे संस्कृतमेव राष्ट्रभाषा भविष्यति भवितुमर्हा च, न चान्या काचिद् भाषा। सिद्धान्तस्यास्य पूत्यर्थे सर्वैर्हिन्दुभिर्नितान्तं प्रयत्नः कार्यः। ये च हिन्दवः हिन्दी भाषार्थे प्रयतन्ते तेऽपि हिन्दुसमाजस्य शत्रवः। महाराष्ट्रसभाऽपि (कांग्रेस इति ख्याता) हिन्दुसमाजस्य विद्रोहिणी न च हिन्दुभिः कदाचित् सम्मान्या। महात्मा गान्धी इत्यादयो महाराष्ट्रसभायाः नेताश्च सनातनधर्मस्योच्छेदकाः!" भवतु पं० कालीप्रसादानुमत्या सर्वमिदं सत्यं साध्यञ्च परमत्र मतभेदोऽस्ति। स्वकीयं मतं स्पष्टं क्रियते विषयेऽस्मिन्। वयं संस्कृतभाषायाः दृढानुरागिणो हिन्दुसमाजस्य स्त्रीपुरुषबालानामार्थं संस्कृतभाषाज्ञानमत्यावश्यकं मन्यामहे। हिन्दूनां संस्कृत भाषैवासीत् कदाचित् मातृभाषा यस्या उत्पन्ना प्राकृतोद्भवा बंग गर्जुर मराठी पंजाबी हिन्दी इत्याद्या इदानीं भाषा वर्तन्ते। हिन्दू समाजस्य हिन्दु सभ्यतायाः संस्कृत भाषा प्राणा एव ऋते संस्कृतं प्राचीनार्यधर्मस्य ऋत आत्मानं शरीरमिव। न च केवलं इदमेव, परमार्यावर्तनिवासिभिः हिंदुमुसलिमखृष्ट पारसीकैः स्वाभ्युदयाय परमार्थ सिद्ध्यै संस्कृत भाषाध्येतव्या। न च केवलं भारत निवासिभिः परं सर्वस्मिन् जगतीतले भिन्नजातीयैः संस्कृत भाषाधिगन्तव्या। अध्यात्मिक ज्ञानं यत् निहितं कुञ्जेष्वस्या मानवैः च सर्वैः स्वीकर्तव्यं स्वात्मसन्तोषायाभ्युदयाय निःश्रेयसाय च।

परम कर्तव्यं भारतवर्षीयायानां हिन्दूनां संस्कृत भाषा प्रचार इत्यस्ति मतमस्माकम्। परं २० शताब्द्यां भारतवर्षस्य भारतराज्यस्य व्यावहारिकी राष्ट्रभाषा संस्कृत भाषा भवितुमर्हति न वात्रास्ति मत भेदः। १९३७ ईस्वीय वर्षे भारतवर्षस्य ११ प्रान्तेभ्यो सप्त प्रान्तेष्वस्ति कांग्रेस राज्य—भारतवर्षीयाणामहो स्वतन्त्रं राज्यम् सप्तेषु प्रान्तेषु

ग्रेषु मध्ये बहु संख्या (८०, ६० प्रति शतं यावदपि) हिन्दुधर्मानुयायि-नामेव किं तर्हि केनापि मन्त्रिवर्येण कृतं साहसं यदत्र व्यावहारिकी राष्ट्र भाषा संस्कृतं भवेत् ? न । कथं ? असंभवत्वात् ? एकस्मिन्नपि प्रान्ते यदीदृशः प्रस्तावो भवेत् युगान्तं यावदेवाकाग्निस्तत्र स्यात् । हिंदमुसलिम वैर्यस्य ज्वाला प्रचंडा भवेत् । कांग्रेस राज्यमपि समाप्तमपयात् । प्राङ्गलाध्यक्षस्य ( गवर्नम ) विशेषाधिकारा अपि शीघ्रमेव जाग्रति गच्छेयुः यदीदृश्यवस्था प्रायशः हिंदुप्रान्तेषु—मद्रास, संयुक्त, गोहमयी इत्यादिषु दरिदृश्यते तर्हि महमदीय प्रांतेषु—सिन्धु, सर्हद, बङ्ग, पंचनद इत्यादिषु किं भवेत् ? न चाङ्गल राज्यप्रधान प्रांतेष्वेव केवलमित्थं स्यात् परं भारतीय हिंदू राज्यदेशविशेषु—बीकानेर, दौर, माईसूर, काश्मीर इत्यादिष्वपि किं भवतुमर्हति ? किमत्र विद्यते साहसं कस्यचित् महाराजस्य यत् संस्कृत भाषा राष्ट्रभाषा कुर्यादसौ ? एकान्तेव का कथा किं केवलं हिंदीभाषामेव राष्ट्रभाषां कर्तुं योग्यः कश्चिद् हिंदू राजा ? यत्र यत्र हिंदी भाषा स्यात् राज्यभाषा तत्र दू अपहरात् । क्वचित् दूरे दक्षिणे भारते कस्मिंश्चित् प्रांते स्यात् संस्कृत भाषैव राष्ट्र भाषा परं तत्र व्यावहारिकी राष्ट्र भाषा तु आङ्गल भाषा न च प्राकृत भाषा यथा मद्र प्रदेशे । "संस्कृत" सम्पादकस्य हृदये यदि भारतवर्षे पुनः हिन्दूराज्यस्थापनेऽस्त्याकांक्षा साप्यसम्भवा। भारतवर्षीय हिंदुभिः समय अस्मौ स्वयमेव स्वहस्तात् च्यावितो शितएव केवलं स्वप्नमात्रमेव न द्रष्टव्यं परं क्रियात्मकरूपेण यद् अपि यद्योग्यं तदेव विचारणीयं करणीयच । स्वप्नमात्रस्य विचाराणां तादृशांवासिन गणना कुत्रचिदपीदानीं संसारेऽस्मिन् । भारतेऽस्मिन्नद्या-नां सर्वधर्म निवासिनां सम्मिलितमेव राज्यं भवितुमर्हति भविष्यति न च हिन्दूराज्यं न च मुसलिम राज्यं वा । यथा राज्यं तथैव राजभाषा । भारतीयानां राष्ट्रभाषा यदि हिन्दी भवेत् तर्हि भाग्यमस्माकम् । हिन्दी भाषया साकं संस्कृत भाषायाः मातृवत् सम्बंधः । यत्र यत्र स्यात् हिंदी भाषा तत्र तत्र प्रसरिता स्यात वाणी लिपिश्च प्रसार्य सर्वत्र भारते—प्रायशः सर्वेषु हिन्दू राजस्य स्त्रीपुरुष बालेषु—संस्कृत भाषाज्ञानं पाठनञ्च सुकरं स्यात् । अस्मदीयाः संस्कृतं वाप्यध्येरन् चेत् तथापि सर्वत्र हिंदूसमाजेऽस्याः प्रचारो भवेत् ।

कुलभूषणः

# विवाहवयो-विवेकः (३)

निबन्धा—श्री दीनानाथ शर्मा शास्त्री सारस्वतः
( स० ध० कालेजाऽध्यापकः, मुलतान )

'देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु' ऋ० ८।१००(८६)।११
'तस्य प्राशं त्वं जहि यो न इन्द्राऽभिदासति ।
अधि नो ब्रूहि शक्तिभिः प्राशि मामुत्तरं कृधि' अ० २।२७।७ ॥




पाठकैः स्नातकधर्म्मदेवमहाशयीय—४।४ संख्यास्थ-लेखस्य सर्व्वाङ्गीणं निराकरणं मल्लेखे ५।२-३ अङ्कयोर्दृष्टं स्यात् । तदीय—५।१ संख्यास्थनिबन्धस्याऽपि मया सर्व्वाङ्गीणं निराकरणं कृतं विद्यते । परं श्रीसम्पादकानुरोधादहमत्र सङ्क्षेपेण प्रतिवच्मि । स्ना० महाशयो यद्येतल्लेखालोचना विधित्सेत्;त र्हि कामं विदध्याद् । अहं श्री सम्पादकसङ्केतमनुरुध्य तदुत्तरं 'श्री' पत्रे न प्रहेष्यामि; यतः—सम्पादक महोदयोऽत्र विषये विस्तर विवादञ्च परिजिहीर्षति । एष लेखोऽपि तेन मम महाग्रहेणैव प्रकाशितः । अतो यद्यहं स्ना० महोदयीयालोचनाया उत्तरं दास्याम्यपि; तर्हि संस्कृतपत्रान्तरे, यदीयां सूचनामहं 'श्री' पत्र यथासमयं प्रदातास्मि निष्पक्ष पाठका एतदवश्य पश्यन्तु, यत्—स्ना० महाशयेन मम का का युक्तिः प्रमाणं वा न प्रत्यवाचि ।

अथ च विद्वत्पाठकैः स्ना० महाशयस्य ४।४, ५।१ संख्यास्थं लेखं पठित्वा सम्यग्ज्ञातं स्याद्, यत्—स्ना० महाशयेन वेदस्य वा स्मृते र्वा पुराणस्य वेतिहासस्य वा किमप्येकं प्रमाणं नार्पितं यत्र तत्प्रतिज्ञातः १७—२४ वर्षमात्रे कन्याविवाहो 'विधिवाक्यात्' सिद्धः स्यात् । यत्र क्वचित् क्लिष्टकल्पनया वेभ्यश्छन्देभ्यः प्रसह्य किञ्चिन्निष्कासितमपि, तथापि तत्र १७—२४ वर्षमात्रव्याप्त्यभावात् तत्प्रतिज्ञा साध्यकोटिकैव स्थिता । अस्माभिस्तु ऋतुकालात्प्राग् विवाहे द्वादशवर्षीयविवाहे वा स्वसिद्धान्तभूते स्पष्टप्रमाणानि गते निबन्धे दर्शितानि एतल्लेखान्ते दर्शयिष्यमाणानि च, तेन ऽस्मत्पक्षः सिद्धः ।

स्ना० महाशयेन 'पुत्रकामा' दिपदेन १७—२४ वर्षावस्थासाधने महान् संरम्भः प्रदर्शितः; तदिदमुपहासास्पदम् । इमास्तु भविष्यद्वार्ताः । यदि 'पुत्रकामा'दिपदैः १७—२४ वर्षाऽवस्था साध्येत; तर्हि जातकर्म्म समये 'वेदोऽसी' ति, तेरा गुप्तनाम वेद है, सं० वि० पृ० ५६, नामकरणे 'कोसि कतमोसि' मं०

  श्रीः

आ० १।५।१४ सं० वि० पृ० ६४ इत्यादिकथनाद् बालकाऽवस्था तज्ज्ञानयोग्या न्यूनान्न्यूनं १५—१६ वर्षाणां मन्तव्या भवेत्। पुत्रस्त एषः, अ० १४।२।२४ इति वधूप्रवेशकाले कथनाद् वध्वास्तदात्वे पुत्रोऽपि मन्तव्यः स्यात्; पर नैत-मेतद्। एतदादिका भविष्यद्वार्त्ताः सन्ति, नाऽवस्थाप्रतिपादकाः। 'पुत्रकामा' इत्यादयो मन्त्रा विवाहस्य सन्त्येव न; इमे भविष्यतो गर्भाधानस्य सन्ति। स्नातकमहाशय एतदादिकाऽस्पष्टवार्त्तास्त्यजतु; वेदमन्त्रं स्पष्टं १७—२४ वर्षायुर्दर्शयतु विवाहस्य। वस्तुतः स्पष्टार्थः प्रतिपादने स्मृतय एव प्रमाणीभूताः स्युः; यतो लोकव्यवहार व्यवस्थापनं मुख्यतया धर्म्मशास्त्राणां (स्मृतीनां) विषयो, न वेदस्य; सर्व्वाणि शास्त्राणि च स्वनियत विषयेऽधिकप्रमाणभूतानि भवन्ति; अत एव भवत्स्वामिनोऽपि सम्मते न्यायदर्शने धर्म्मशास्त्रप्रामाण्यविषये स्पष्टमुक्तम्—"अप्रामाण्ये च धर्म्मशास्त्रस्य ('धर्म्मशास्त्र तु वै स्मृतिः मनु० २।१०,) प्राणभृतां व्यवहार लोपाल्लोकोच्छेदप्रसङ्गः। द्रष्टृप्रवक्तृसामान्याच्च अप्रामाण्यानुपपत्तिः—य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्म्मशास्त्रस्य चेति। विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम्—अन्यो मंत्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराण-धर्म्मशास्त्राणामिति। यज्ञो मन्त्रब्राह्मणस्य लोकवृत्तम् इतिहासपुराणस्य, लोकव्यवहारव्यवस्थापनं धर्म्मशास्त्रस्य विषयः। तत्रैकेन न सर्व्वं व्यवस्थाप्यते—इति यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति" न्या० ४।१।६२ को न जानीते यद्—उपनयनविवाहादिसंस्काराणामवस्थादिनिर्द्धारविषयो धर्म्मशास्त्रस्य; अन्यथा वेदे उपनयनविवाहादिसंस्काराणां विवाहस्य च स्पष्टतयाऽवस्थातारतम्यनिर्द्धारका मन्त्रा उपस्थाप्याः स्युः। एवं सति 'युवा सुवासाः परिवीत आगात्' इत्यादौ उपनयनवेदारम्भसंस्कारयोरधिकृते मन्त्र युवशब्ददर्शनाद् उपनेयबालकस्याऽवस्था २१—३० मन्येत। तदा ५—८, ६—११, ८—१२ वर्षेषु यज्ञोपवीत मन्वाना मनु० २।३६—३७ पारस्कर० २।२।१—२—३, आपस्तम्ब० ४।१०।२—३ गोभिल०२।१०।१—२—३वसिष्ठ० ११४४प्रभृतयो, भवदाचार्यः स्वा०दयानन्दश्च (संस्का० पृ० ७८—७९) इमे सर्व्वे वेदविरुद्धवक्तारः स्युः। परं नैवमस्ति। तथा 'पुत्रकामा' दिपदेन १७—२४ वर्षावस्थासाधनमपि शशशृङ्गायितम्; अन्यथा पुत्रकामो वृद्धदशरथस्तस्त्रियश्चाऽपि १७—२४। वर्षावस्थाका मन्येरन्। महाभारते आनुशासनिकेऽष्टावक्रोपाख्याने पतिकामा वृद्धास्त्र्यपि १७—२४ वर्षीया मन्येत। परं नैवमेतत्। तस्मात् पाठकैर्ज्ञातं स्याद् यत्—स्ना० महाशयस्य प्रमाणानि प्रयासमात्रफलकान्येव; नैतैरस्मत्पक्षखण्डनं भवितुं शक्यम् इति प्राङ् निवेद्य ततः प्रस्तुतं प्रस्तूयते।

'दशवर्षा भवेत् कन्या' इति कन्यालक्षणं निराकर्त्तुं—'कन्या शब्दार्थ विमर्शो व्यधायि'' इत्यारम्भे स्ना० महाशयस्याऽभिप्रेतम्, परं तत्राऽमुनासफलता नाधिगता यौवन एव कन्याविवाहो वेदानुमतः, इति प्रतिज्ञाय, यौवनञ्च १७-२४ वर्षेष्वभिमत्य, कन्याशब्दस्य वेदे यौवनार्थं साधने बद्धपरिकरेण तेन सायणव चनमुद्धृतम्, कदाचित् सायणवचनमेव वेदो भवेत्। यस्मिन्सायणे तदीयाऽश्रद्धा, अद्य स्वपक्षसाधने स तमेव आधारस्तम्भममंस्त। परं तत्र विवाहप्रतिपादकः कोऽपि मन्त्रो नासीद्, यत्र सायणेन कन्याशब्दस्य यौवने विवाहार्थं कृतो भवेत्। यश्च तत्र विवाहप्रदर्शको मन्त्र आसीत्, तत्र सायणेन 'कन्या' शब्दस्य यौवनार्थो न कृतः—इत्यस्माभिः ४।२ संख्यायां साधितम्, यच्चस्ना० महाशयेन निराकर्तुं नाऽशाकि। ततश्च कन्याशब्दस्य यौवनार्थसंरम्भं प्रदर्शयन्नसौ 'अविवाहितमात्रा भवति कन्या' इत्यत्रैव विशश्राम 'विनायकं प्रकुर्वाणो रचयामास वानरम्'। इत्थं स्वकीयं पूर्वं पक्षं निराकार्षीत्। एवं प्रयतनेऽपि 'दशवर्षा भवेत्कन्या' इतिपरिभाषाऽक्षतैवाऽभूद्—इति ४।३ संख्यास्थ-१७ पृष्ठोल्लखत द्युक्तौ मौनमुपाश्रित्य तेन स्वयं पिशुनितम्।

'दशवर्षीय मार्यव नाम कन्या न भवतीति केनाऽपि नोदीर्यते' इत्यस्मिँल्लेखे स्वयमुक्त्वा च स्वखण्डन प्रयासं निष्फलं पिशुनितवान् श्रीमान्। शिष्टमवशिष्टः कन्याशब्दस्याऽविवाहितत्वाऽर्थः, परं स किं तां परिभाषां बाधितुं समर्थः ?। दशवर्षपरिभाषायामप्यविवाहितत्वं स्पष्टम्। सा परिभाषा च वैवाहिकमन्त्रस्थकन्यापदे प्रवर्त्तते—इति पराशरसंवर्त्त-बृहद्यमकाशीनाथप्रभृतीनामाशयः। अर्थात्—पूर्णदशवर्षीययां जातायां तस्याः कन्याया विशिष्टा संज्ञा 'कन्या' इति भवति। तस्यामेकवर्षपर्यन्तं 'कन्या अग्निमयक्षत' पार० १।६।२ 'जारः कनीनाम्' ऋ० १।६६।४ इत्याद्यनुसारमग्नेराधिपत्यं तिष्ठति, यच्च ५।१ संख्यायां ३६ पृष्ठे—'स च गन्धर्वो विवाहसमये अग्नये प्रददौ, अग्निश्च मनुजाय भर्त्रे इमां प्रायच्छद्-इत्यादिसायणीयभाष्यमुद्धृत्य श्रीमताऽपि स्वीकृतम्। यः सायणस्य एतन्मन्त्रस्थः पाठो न लिखतः श्रीमता; तत्र तु एतत्स्पष्टता, तथा चाऽयं स पाठः—'कनीनां-कन्यकानां जारो जरयिताऽग्निः; यतो विवाहसमयेऽग्नौ लाजादिद्रव्यहोमे सति तासां कन्यात्वं निवर्त्तते'। तत्र सायणस्य स्वकीय-वचनादधिकप्रामाण्यं पराशरसंवर्त्त-बृहद्यम-मनुप्रभृतीनां स्मृतिप्रवर्त्तकानाम्, साऽवस्था ११ वर्षसमाप्तौ १२ वर्षे फलति। अतएव मनुना 'वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्' ६।६४ इति १२ वर्षीयकन्याविवाहे 'देव-दत्तां' पति-र्भार्यां विन्दते' ६।६५ इति देव-दत्तत्वं कारणत्वेनाऽलेखि। 'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्' ८।२२७ इति मनुं विवाहलक्षण-

माचष्टे। पाणिग्रहणिकमन्त्रेषु च 'गृभ्णामि ते' १०।८५।३६ इति मन्त्रे 'भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः, इति देवदत्तत्वसङ्केतो विहितः। ते च देवाः 'सोमोददद् गन्धर्वाय' ऋ० १०।८५।४०-४१ अ० १४।२।२-३ इत्यादौ निरूपिताः।

वेदादके विवाहकाले यः कन्याशब्दो निदर्शितः, ऋषिमुनिभिस्तस्य उक्तपरिभाषा पठिता, न साऽस्मया कल्पिता। तां पराशरः, सवर्त्तः, वृद्धयमः, एवमन्येऽपि समामनन्ति, यैरियं परिभाषा साक्षान्न पठिता; तेऽप्येतदीयं भावम् ऋतुकालतः प्राग् विवाहमभ्युपेयुरेव। यथा—'उपवीतिने' यजुः १६।१७ 'उपनयमानः, अ० ११।५।३ इति वेदे बीजमात्रं दृश्यते; तस्योपनयनस्य परिभाषा, अवस्थासंख्या च स्मृत्युक्ता कथं कल्पिता मन्येत ?। यज्ञोपवीतपरिभाषा मनुना नोक्ता; तर्हि कात्यायनप्रभृतिस्मृत्यन्तरे कथिता परिभाषा किं कल्पिता भवेत् ?। एवं मनुना साक्षात् कन्यादिपरिभाषाऽप्रवचनेऽपि 'देवदत्तां पतिर्भार्यां' ९।९५ इति निदर्श्य तदा ९।९४ द्वादशवर्षावस्थाञ्च निरूप्योक्तपरिभाषायां स्वसम्मतिः प्रदर्शिता।

कन्याशब्दार्थविमर्शे च श्रीमता 'कन्येव तन्वा' ऋ० १।१२३।१० 'कन्या कमनीया भवतीति यास्का' इति लिखित्वा 'क्वेयं नेतव्या' इति सायणभाष्ये उद्धृतं यास्कार्थं त्यक्त्वा स्वपारम्परिकप्रकृतिपरिचयो वितीर्णः। 'क्वेयं नेतव्या' इति कन्यापितृ चिन्तया कन्यायाः पित्रधीनत्वं तेन च द्वादशवर्षविवाहो ध्वन्यते। अतः पारस्करगृह्यसूत्रे—'पित्रा प्रत्तामादाय' १।४।१५ इत्युक्तम्। पित्रा प्रत्तत्वं तु ऋतुकालागमात्पूर्वं भवति। ऋतुकालागमे तु 'पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन्। स हि स्वाम्यादतिक्रामेद् ऋतूनां प्रतिरोधनात्' मनु० ९।९३ ( ऋतुयुक्तां कन्यां वरः परिणयन् पित्रे शुल्कं न दद्याद्, यस्मात् स पिता ऋतुकार्याऽपत्योत्पत्तिनिरोधात् कन्यायाः स्वामित्वाद्धीयते—इति कुल्लूकः) इति ऋतुप्रतिरोधे तत्स्वामित्वं ततो नश्यति। स्वामित्वनाशे स कन्यां दातुं नाऽर्हति; कन्यादानाऽभावे च कुतो वैधो विवाहः। अत्राऽधिकस्पष्टता मया ५।३ अङ्के विहिता। पितृकर्तृककन्यादाने च मन्त्राणां साद्यम्—'सविता मनसाऽददात्' ऋ० १०।८५।९ 'जायां या मंस्या आवाचुः' अ० ६।७८।१ 'त्वष्टा जायामजनयत् त्वष्टाऽस्यै त्वां पतिम्' अ० ६।७८।३ 'एषा ते कुलपा राजन्! तामु ते परिदद्मसि' अ० १।१४।३ विवाहे वरो राजरूपः, पत्नीनियामकत्वाच्च यमः। 'पिता भ्राता वा दद्यात्' मानवगृ० सू० १।८।६। किं गृह्यसूत्रस्य मनोश्च वेदानुकूलत्वं विरुद्धत्वं वा ? यदि विरुद्धत्वं; तर्हि सर्वः संस्कारविधिरेव व्यर्थो भवति, यत्राऽनयोरधिक आश्रयः, भवतश्चतुर्थीकर्म चाऽपि खण्ड्येत।

अग्रे स्नातकमहाशयेन 'मृते भर्तरि' इति श्लोको विधवाविवाहसिद्ध्यर्थं लघुशातातपनाम्ना दत्तः; परं स तत्र न लभ्यते। एवं प्रमाणान्तराणां कथा। तथाऽप्येतदादिकां व्यवस्थां प्रकाशयामः—सप्तपदीपर्यन्तं विवाहः समाप्तिमेति 'तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' म० ८। २२७ तत्पूर्णता च भवति चतुर्थीकर्म्मणि 'विवाहे चैव निवृत्ते चतुर्थेऽहनि रात्रिषु। एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके' लिखितस्मृ० २५ यमस्मृ ८६। तदनन्तरं मृते पत्यौ सा विधवाऽऽख्यायते, न कन्या काऽपि। 'न च सप्राप्तमैथुना' इति शातातपश्लोको भवन्मतेऽपि चतुर्थीकर्मतः प्राक्तनः; यतो भवद्भिश्चतुर्थी कर्म्मणि मैथुनं मन्यते; अस्माभिस्तु चतुर्थीकर्म्मतः प्राक् पूर्णविवाहो न मन्यते। यदि सप्तपद्यादितः प्राक् कन्यायाः पतिव्यपदेश्यो म्रियते; तदा तद्विवाहश्शास्त्रीयः। परं भवद्भिन्तवस्तु तदुपेक्ष्य, ततोऽप्यनन्तरं मैथुनयुक्तानामपि प्रत्युत सन्ततिमतीनामपि विधवानां विवाहं कन्याशब्दयुक्तैर्मन्त्रै रेव कारयन्ति; तदिदं किं भवतोऽनुमतम्? यच्च मू—तर्हि कन्याशब्दस्याऽविवाहितत्वार्थसाधनं कथं कालाऽपव्यय कृतः श्रीमता कन्याशब्दार्थविमर्शे ?। यदि तदा विवाहोत्तरं विवाहो नाऽनुमतो भवतः स्त्रियाः; तर्हि सौभाग्यं नाम। तादृशाणाञ्चाऽवैदिकतां साधयित्वा निन्दा विधेया।

तेन सिद्धं यद्—विधवासु कन्याशब्दो न कदापि प्रयुज्यते; अत एव महाभाष्ये—'कन्याशब्दोऽयं पुंसाऽभिसम्बन्ध (विवाह) पूर्वकं संप्रयोगं निवर्तते' ४। १। ११६। अत्र भवता 'कन्या अकृतविवाहा स्त्री' ११।७।१८ 'कन्यानाम्—अनवद्य (निर्दोष) सम्पूर्णाऽवयवानां' 'कन्याशब्दो विवाहरहित स्त्रीमात्रमाचष्टे' इत्यादिसायण पराशरमाधवादि प्रभृतीनाम्, 'अकृत विवाहस्य स्त्रीमात्रस्य कृते वेदे कन्यापदं प्रयुज्यते' पृ० २१ 'अविवाहितायाः कन्यात्वं स्फुटं द्योतयन्ति' पृ० २१ 'लौकिकेऽपि कन्याशब्दोऽविवाहितस्त्रीमात्रमाचष्टे' पृ० २२ इत्यादि ४। ?. सख्योल्लिखितस्वोक्तीनां पुनर्निध्यानं कर्तव्यम्। तेन सिद्धं यत्—पूर्णविवाहानन्तरं मृते सा कदाऽपि कन्या नाख्यास्यते; यदि कदाचिदाख्याताऽपि; तर्हि तस्यां गौणरूपेण तच्छब्दप्रयोगो न तु मुख्यतया। वेदमन्त्रेषु तु वास्तविक एव कन्याशब्दो; नाऽऽरोपितः। तेन सकृद् विवाहितानां भवन्मतेऽपि कन्यात्वात् 'कन्या विन्दते पतिम्' अ० १४। २। २२, ११।७।१८ बुद्धिमते कन्यां प्रयच्छेत्' आश्व० १। ५। २ 'यदि य कुमार्यभिजाता' आश्व० १। ५। ५ 'असमानर्षिगोत्रां हि कन्यां' हारीत० ४। १ इत्यादिषु कन्याशब्ददर्शनाद् विधवाविवाहस्य स्पष्टं खण्डनं सिद्धम्। अत एव स्मृतिष्वनन्यपूर्विकाया विवाह उक्तः, पराशरमाधवीये च 'दाननोपभोगे वा पुरुष नाराऽगृही-

तायाः इत्यर्थः कृतः। तेन विवाहितायाः पुनर्विवाहोऽवैदिकः सिद्ध्यति। एतदेवाऽभिप्रेत्य मनुर्वक्ति—'न विवाहविधावुक्तं विधवावेदनं पुनः' ९। ६५ 'पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः। नाऽकन्यासु' मनु० ८। २२६ कन्यात्वञ्च सप्तपदीतः पूर्वं तिष्ठति, अधिकाऽधिकं चतुर्थीकर्मतः पूर्वम्; न ततोऽनन्तरम्। तर्हि तदनन्तरं विवाहोऽवैदिक एव। अतः स्पष्टमुल्लिखितं स्मृतिषु—'कामं तु क्षपयेद्देहं...नतु नामाऽपि गृह्णीयात् पत्यौ प्रेते परस्य तु' म० ५। १५७ एवं विधवाविवाहस्य सर्वथा निषेधो निरूपितः। 'मनुस्मृतिविरुद्धा तु या स्मृतिः सा न शस्यते' इति प्राचीनव्यवस्था।

'बलाच्चेत्प्रहृता कन्या मन्त्रैर्यदि न संस्कृता। अन्यस्मै विधिवद्देया' अयं श्लोको न जाने श्रीमता कथमुद्धृतः? अनेन न किमप्यभीष्टं सिद्ध्यति भवतः; यतो नाऽयं विधवायां, विवाहितायां वा दृष्टः। 'उद्वाहिताऽपि चेत् कन्या' अयमपि श्लोकः सप्तपदीपूर्वताबोधकः; अत्र 'आदिकर्मणि निष्ठा' विवाहयितुमारब्धाया इत्यर्थः; अन्यथाऽत्र कन्याशब्दो न स्यात्; अत एव भवदुद्धृते १। ६६। ४ सायणभाष्ये लिखितम्—'विवाहसमयेऽग्नौ लाजादिद्रव्यहोमे सति तासां कन्यात्वं निवर्तते'। भवन्मतेऽपि विवाहिताया अकन्यात्वादितः प्रागुक्तम्। 'न चेत् सम्प्राप्तमैथुना' इति नारदस्मृतिस्थः शब्दो भवन्मतेऽपि विवाहपूर्णतानिष्पादकचतुर्थीकर्मतः प्राक्तनः; ततो नात्र दोषः। आश्चर्यं श्रीमान् मनुस्मृतिव्यतिरिक्तं स्वस्वाम्यनभिमतस्मृतीनां कथं प्रमाणानि स्वपक्षपुष्ट्यर्थं 'श्रियाः' २। २ संख्यायाः २६ पृष्ठादुद्धृतवान्? अस्माभिः तु तद्व्यवस्था दर्शितैव। 'पौनर्भवेन विधिना' इत्यादीनि न विधिशास्त्राणि; अन्यथा—'स्वैरिणी—चाण्डाल—कुण्ड—गोलकप्रभृतीनामपि स्मृतिषु वर्णनात् तदादिकमपि कर्तव्यतयाऽऽयतेत्, स्मृतिभिः पौनर्भवस्य निन्दा कृता।—'पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे। मनु० ३। १५५ 'एतान् विगर्हिताचारान् अपाङ्क्तेयान्नराधमान्। द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत्, मनु० ३।१६७ 'भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे, मनु० ३।१८१ 'परपूर्वा 'पुनर्भू' पतिः तथा। वर्जनीयाः प्रयत्नतः' म० ३।१६६ 'पौनर्भवः तथा षड् अदायाद बान्धवाः' म० ९।१६०—१६१। आवश्यकतायां वृद्धपराशर० ५।३६५–३६६–३६७–३६८ नारद (व्यवहारपाद) प्रभृतिस्मृत्यन्तर प्रमाणान्यथत्रोपस्थाप्येरन्।

यद्येवं श्रुतिस्मृतिषु कन्यानां विवाहः सिद्धो न तु विधवानाम्, तर्हि श्रीमता 'उदीर्ष्व नारि' 'इयं नारी' इति मन्त्रद्वयं कथमुद्धृतम्, किं वेदे परस्परं व्याघातप्रदर्शनाय? यद्येवम्, तर्हि 'तदप्रमाण्यमनृतव्याघातपुनरुक्तेभ्यः' न्या० २।१।

५६ इति जितं पूर्वपक्षणा । स्ना० महाशयेनाऽप्रासङ्गिकताऽऽदेशं प्रदर्श्य तद्विवरणं न निर्दिष्टम्, ( कदाचित् स्वस्वार्थविरुद्धार्थताऽनुमिता भवेत्), तर्हि तु मन्त्रदानस्याऽपि न काऽप्यावश्यकताऽविद्यत । अधुनैतद्विषये श्रूयतां यद्-वेदो विधवायाः कां दशां स्वीकरोतीति—

'प्रतिघ्नानाः सधावन्तु-उरः पटूरा घ्नानाः । अघारिणीर्विकेश्यो रुदत्यः पुरुषे हते—अ० ११।६।१४ प्रतिघ्नानाऽश्रुमुखी कृधुकर्णी च क्रोशतु । विकेशी पुरुषे हते, अ० ११।६।७ इत्येव पुरुषे मृते स्त्रिया ईदृशी अवस्था दर्शिता, परं भवन्तः पुरुषमृत्युकाले स्त्रियाः पत्यन्तरग्रहणं प्रसन्नमुखत्वं शृङ्गारितकेशित्वञ्च कृत्वा वेदविरुद्धतां चिकीर्षन्ति, हा हन्त !!! अधुना स्वमन्त्रद्वयस्याऽर्थः श्रोतव्यः—

'इयंनारी पतिलोकं वृणाना निपद्यत उपत्वा मर्त्य ! प्रेतम् । धर्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणञ्चेह धेहि अ० १८।३।१ योऽत्र विधवाविवाह मन्यते, सोऽवैदिकश्शब्दशास्त्रज्ञानशून्यश्च । अन्यथा 'कन्या विन्दते पतिम्' अ० १४।२।२२।११।७।१८ इत्यादिभिरुक्तवेदवचनैः सहाऽस्य वेदमन्त्रस्य विरोधः सिद्ध्येत् । अयं मन्त्र प्रेतं (मृतं) मर्त्यं प्रयुच्यते । कौशिक सूत्रे ८०।४४ अस्य विनियोगो मृतकपार्श्वे पत्न्याः संवेशनस्य ❀ तर्हि कथमत्र विधवाविवाहस्य गन्धः ? । ४।४ संख्यायां यदेव कौशिकसूत्रं स्ना० महाशयस्तेन वेदवत् प्रमाणभूत जातम्, तदेवाऽधुना कदाचित् प्रमाणकोटितोऽपि बहिर्भावं गच्छेत्, स्नातकमहोदयविरुद्धत्वादिति सम्भाव्यते । सायणभाष्ये द्रष्टव्यं तदुद्धरणम्— 'भार्या प्रेतेन सह संवेशयेत्' अ० १८।३।१ । एवं 'प्रेतं संवेशयन्त्युत्तरेण' आश्व० ४।२।१५ 'उत्तरतः पत्नीं संवेशयन्ति' आश्व० ४।२।१६ इत्याश्वलायनस्याऽप्यत्र सम्प्रतिपत्तिः । अधुना प्रकृतमन्त्रस्याऽर्थः श्रोतव्यः—

अयंमन्त्रो मृतकं प्रतिप्रोच्यते—'पुराणं धर्मं' सनातनधर्मम् 'अनुपालयन्ती' 'पतिलोकं'—मृतपतिनाऽनुगन्तव्यं ['पाणिग्राहस्य साध्वी स्त्री......पतिलोकमभीप्सन्ती' म० ५।१५६ 'सा भर्तृलोकमाप्नोति' म० ५।१६५ 'पतिलोकात्' म० ५।१६१ 'इहत्यांकीर्तिं प्रोत पतिलोकपरत्र च' म० ५।१६६ 'या

---

❀ संवेशनस्य मैथुनऽर्थो न भवति, किन्तु 'लेटना' इत्यर्थः, तथाच— 'प्रेतेन सह संविष्टा तामभिमन्त्र्य उत्थापयेत्' अ० १८।३।२ भाष्ये । 'प्राक्शिरा वधूः संविशति' गोभि० २।६।१०।१२ पुंसवने वध्वाः संवेशनं निर्दिष्टम् । आपस्तम्बगृह्यसूत्र ७ पटले १६ खण्डे ६।१०।११।१२ सूत्रेषु संवेशनशब्दः समेति, तत्राऽपिशयन मात्रमभीष्ट नतु मैथुनम् । 'अथाऽस्य ब्रह्मचारिणमुपस्थे आवेशयति, मानव गृ० १।१४।८ अत्रापितथा । उपस्थे उत्सङ्गे । तेन मैथुनार्थोऽपास्त. ।

ब्राह्मणी सुरापी भवति, नैनां देवाः पतिलोकं नयन्ति' महाभाष्य० ३।२।८ इत्यादिप्रोक्तमामुष्मिकं] पतिलोकं 'वृणाना'—इच्छन्ती अनुमुमूर्षन्तीत्यर्थः, 'इयं नारी'—त्वत्पार्श्वे संविष्टैषा स्त्री 'हे मर्त्य !'—(मर्त्येतिसम्बोधनं साभिप्रायं मृतकस्य कृते ) मरणधर्मन् ! 'प्रेतंत्वाम्'—मृतकं त्वाम् ( स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते, तस्मादु हैतत् प्रेतमाहुः' शत० १०।५।२।१३ ) 'उपनिपद्यते' संविष्ट ऽस्ति; मृतकस्य तत्र पार्श्वेशेते चितायमत्ति भावः ।

'तस्यै'—तयाः (षष्ठ्यर्थे चतुर्थीति वाच्यम्) वा० २।३।६२ इति छन्दसि षष्ठ्यर्थे चतुर्थी भवति 'या खर्वेण पिबति तस्यै खर्वः' इत्युदाहरणवत्' तस्या अस्या अस्या नार्याः 'इह'—अस्मिल्लोके विद्यमानां त्वत्सकाशादुद्भूतां 'प्रजां'—सन्ततिं त्वत्पार्श्वः प्राप्तं 'द्रविणंञ्च'—धनञ्च 'धेहि'—पालय 'डुधाञ धारणपोषयोः' धु० उ० अनु०) अर्थात्—अस्या वर्तमानस्य सन्तानस्य धनस्य च नाशो माभूत् तद्रक्षणं कुरु–इति मृतकः प्रार्थ्यते। मृतत्वे जाते 'जीवानामायुः प्रतिर त्वमग्ने ! पितॄणां लोकमपि गच्छन्तु ये मृताः' अ० १२।२।४५ इति—पितृलोकगमनवशात् तस्मिन् महती शक्तिर्जायते । अतएवाऽथर्ववेदे १८।३। १०।४४ प्रभृति मन्त्रेषु मृतपितरो बहुशो रक्षार्थं प्रार्थिताः । घटे स्थितस्य प्रदीपस्येव स्थूलशरीरराच्छान्नस्याऽऽत्मनोऽपि शक्तिप्रकाशस्यगनं जायते । घटाद् बहिष्कृतदीपस्येव स्थूलमानुषशरीरमुक्तस्याऽऽत्मनोऽपि भूयसी शक्तिः प्रादुर्भवति । तेनाऽस्मदर्थः समूलः । इति सतीधर्मप्रतिपादको मन्त्रः । सती-धर्म्म एव पुराणो धर्म्मः । विधवाविवाहो न पुराणो धर्म्मः क्वचिच्छ्रुतः । भवन्मतेऽप्येष आपत्कालिकः, तेन नैष धर्म्मो जातः । 'नैव द्विजेषु द्वितीयवारं विवाहो विधीयते, पुनर्विवाहस्तु खलु शूद्रवर्णे एव विधीयते, पृ० २२२ इति ऋग्वेदादिभाष्यभूमिकायां संस्कारविधिसत्यार्थप्रकाशयोश्च विधवाविवाहम-धर्म्मं मेनेभवत्स्वाम्यपि ।

या पतिमनुमजुमशक्ता, स्वविद्यमानपुत्रादि पालनाथमेव जीवनयात्रां निर्वोढुमिच्छति, तत्कृतेऽयोऽयं मृतकसमीपादुत्थापनमन्त्रः कौशिकसूत्राऽनुसारम् ८०।४५—'उदीर्ष्व नार्यभिजीवलोकं गतासुमेतमुपशेष एहि । हस्तग्राभस्य दधिषोस्तवेदं पत्युर्जनित्वमभिसम्बभूथ' अ० १८।३।२ ।

अस्यार्थः—'हस्तग्राभस्य दधिषोः तव' ( अस्य मृतस्य ) पत्युः ( यतोऽयं मन्त्रो मृतपतिमुद्दिश्यैव कौशिकसूत्राऽनुसारमुक्तः ) 'हस्तग्राभस्य'—पाणि-ग्रहीतुः 'दधिषोः' धारयितुस्तवाऽस्य पत्युः ( अत्र तस्य पूर्वावस्था दर्शिता ) 'इदं जनित्वं'—जायात्वं त्वम् 'अभिसम्बभूथ—प्राप्तवती ( भूते लिट् 'बभूथा ऽऽततन्थ' ७।२।६४ इति इण्निषेधः ) । 'गतासुम् एतम् उपशेषे'—मृतस्याऽस्य

पार्श्वे यत् त्वं स्वपिषि ( अनुमरणार्थमिति भावः ) 'जीवलोकमभि'—स्वस्वामिनः पुत्रपौत्रादिकसंसारमभिलक्ष्य ( तत्पालनार्थमित्यर्थः ) इत उदीर्ष्व'—इत उत्तिष्ठ 'एहि'—आगच्छ। इति मृतकपत्नी प्रोच्यते तदनुमर्त्तुमनाः। अत्राऽपि नास्ति काऽपि विधवाविवाहस्य गन्धोऽपि। धन्या भवन्तो यत्तस्याः पत्युश्शवे समक्षे तस्याञ्च अ० ११। ६। ७, १४ इत्यनुसारं शोकमग्नायां, तदर्थं पत्यन्तरमादिशन्त्यनेन मंत्रेण, वत !!! एतदादिकमंत्रेषु विधवाविवाहगन्धस्यैवाऽसत्त्वाद् 'यः कश्चित् कस्यचिद्धर्मो मनुना संप्रकीर्त्तितः। स सर्वोऽभिहितो वेदे, म० २। ७ वेदार्थोपनिबद्धत्वात् प्राधान्यं हि मनोः स्मृतम्। मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते' इति मिताक्षरोद्धृतबृहस्पतिवचनादितश्च वेदमूलकमनुस्मृतौ—'नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्। न विवाहविधावुक्त विधवावेदनं पुनः' ६। ६५ 'न द्वितीयश्च साध्वीनां क्वचिद् भर्तोपदिश्यते' म० ५। १६२ 'संस्थितञ्च ( मृतकं ) न लङ्घयेत्' मनु० ५। १५१ इति प्रकीर्त्तितम्। एवं भवत्प्रमाणित बृहत्पराशरस्मृतावपि—'जीवन् वाऽपि मृतो वाऽपि पतिरेव प्रभुः स्त्रियाम्' ४। ४८ तर्हि तन्मृत्यौ अन्यः प्रभुः कथं भवेत्।

अथर्ववेदस्थ 'दधिषोः' इति पदस्येव 'दिधिषोः' इति ऋग्वेदस्थपदेऽपि रक्षणपोषकादिरूपेण धारकस्येत्येवाऽर्थः। वादिनोऽस्याऽर्थान्तरं न कर्त्तुं शक्ताः, यतस्ते वेदे यौगिकानेव मन्यन्ते शब्दान्, न रूढ़ान्। निर्णयसागरमुद्रितर्ग्वेदेऽपि 'दधिषोः' इत्येव पाठः 'यश्चाऽग्रे दिधिषूपतिः' ३। १६० एतान् विगर्हिताचारान् अपाङ्क्तेयान् द्विजाऽधमान्।......उभयत्र विवर्जयेत्। म० ३। १६७ 'भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः। धर्मेणाऽपि नियुक्तायां स ज्ञेयो दिधिषूपतिः' म० ३। १७३ इति दिधिषूपतिरङ्क्तेयो मतः। 'अपाङ्क्त्यैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते' ३। १७० 'अपाङ्क्तदाने यो दातुः......तत्प्रवक्ष्याम्यशेषतः' ३। १६६ इत्यादि द्रष्टव्यम्। परं वेदमन्त्रेषु तु ह्रस्वान्तो न दीर्घान्तः, तेन यौगिक एव। अथ च दधिषोस्तव पत्युः—इत्यादिविशेषणं मृतक पतेरेव नान्यस्य; तमेवोद्दिश्याऽस्य मन्त्रस्य पाठाद्विनियोगाच्च। तस्य मृतकस्यैव जीवलोक ( पुत्रपौत्रादि ) पालनार्थं तस्याः पत्यनुमरणमत्र निषिद्धम्। तदैव मनोः पञ्चमाध्यायस्थानाम् १५६, १५७, १५८, १५९, १६०, १६१, १६२ श्लोकानां वेदेन सह समन्वयः।

'आ नो अग्ने! सुमतिं संभलो गमेदिमां कुमारीं सह नो भगेन' अ० २। ३६। १ 'मा हिंसिष्टं कुमार्यम्' अ० १४। १। ६३ अत्र कुमारीशब्दस्य कोऽर्थः? यदि अविवाहितत्वाऽर्थो यथा महाभाष्ये—'कुमारी अपूर्वपतिः पति-

मुपपन्ना' ४ । २ । १३ इति, तर्हि विधवाविवाहो निषिद्धः । यदि प्रथमवयो वाचकोऽत्र कुमारीशब्दः; तर्हि १७-२४ वर्षविवाहपक्षो भवतः खण्डितः सेयमुभयतःस्पाशा रज्जुः । अस्तु-अधिकविचारेऽपेक्षितेऽत्र पुनरपि विशकलय्य विविच्येत । तेन कन्याशब्दविषयका मम सर्वेऽप्याक्षेपास्तदवस्थाः स्थिताः । एतयोर्मन्त्रयोस्तु कन्याशब्द एव न दृश्यते, तर्हि कथं श्री स्नातकेनेदं मन्त्रद्वय-मुपन्यस्तं निजपक्षविघातकमिति चित्रम् ।

## प्रमाणपरीक्षणम् ।

अधुना स्नातक महाशयो मम ४। २ संख्यास्थलेखस्य १०, ११, १२, १३, १४, १५, १६, ( ४। ३ ) १७ पृष्ठानि चा ऽस्पृष्ट्वा कृतकृत्यम्मन्यः सन् 'उत्तरस्याऽप्रतिपत्तिरप्रतिभा' ५ । २ । १८ न्या० इत्यप्रतिभानिग्रहस्थाने निगृहीतोऽभूत्—इति पाठकाः स्वयं पश्यन्तु 'निग्रहस्थानं खलु पराजयप्राप्तिः' न्याय० १ । २ । १६ । अग्रे ( ४ । ३ ) १८ पृष्ठे उल्लिखितायाम् 'अत्र नास्ति श्रुतस्मृत्योर्विरोधः, किन्तु श्रुत्या यः कन्याशब्दो निर्दिष्टः, तस्य स्मृत्या स्पष्टतयाऽवस्थासंख्या नियमिता, किमेष विरोधो नाम ? 'इति मत्पङ्क्तौ किञ्चिल्लिखति; वयमपि तदुत्तरमालोचयामः ।—तत्र श्रीमान् 'पुत्रकामा' 'उशती' 'पतिकामा' 'पत्ये शंसन्ती' इति शब्दैः कन्यायाः १७-२४ वर्षाऽवस्थां साधयति, चित्रम् !!! पुँत्वत्रकामो वार्द्धक्ये दशरथस्तत्स्त्रियश्चाऽप्यासन्; तर्हि पुत्रकामत्वात् ते किं १७-२४ वर्षीया मंस्यन्ते ? 'पुत्रकामा' स्तु विवाहिताः १२, १३, १४,१५ वर्षाः स्त्रियोऽपि भवन्ति ; तर्हि किं भवाँस्ताः १७-२४ वर्षा मंस्यते ? पुत्रकामास्तु पुत्तलिकाक्रीडापरा लघ्व्यो बालिका अपि भवन्ति ; ता 'गुडिया' विवाहं कुर्वन्ति ; ता एव पुत्रपुत्रीर्मन्यन्ते ; तर्हि किं ताः १७ २४ वर्षीयाः स्युः ? । 'उशती' तु वृद्धाऽपि भवतीति ४ । १ संख्यायामानुशासनिकं स्वयमेवोद्धृतमष्टावक्रोपाख्यानमेव गृह्यताम् , यत्र वृद्धा स्त्री अष्टावक्रमुशितवती ; तर्हि कि सा १७-२४ वर्षा सिद्धा ? 'उशत्यस्तु १२-१३ १४-१५ वर्षीया अपि भवन्ति ; तर्हि किं ताः १७-२४ वर्षीया मंस्यन्ते ? 'जनिकामाः' वृद्धपुरुषा अपि भवन्ति ; किं ते १७-२४-३० वर्षीयाः सिद्धाः ? धन्यः स्नातकमूर्धन्यः !!! पाठकाः ! किं नेयमाग्रहग्रहिलता नाम ? । ऋ० १० । १८३ । २ मन्त्रे तु विवाहितायै भविष्यत्कृते 'युवति'—स्वस्याऽऽशीर्वादमात्रम् ; न तु तस्याः १७-२४ वर्षीयत्वं प्रदर्शितम् । अस्य, 'पत्ये शंसन्तीं' इत्यस्य च; स्पष्टमुत्तरमस्माभिः ५ । ३ संख्यायां दत्तम् । अथ च 'पतिकामा' त्वस्य व्याप्तिः१ ७-२ वर्षेषु न भवति, एकादश-द्वादशवर्षीया अपि पतिकामाः—पतीच्छुकाः

( कामोऽत्रेच्छामात्रम् ) भवन्तीति लोकप्रत्यक्षम्; अत एव तन्निषेधाऽर्थं स्वामी वक्ति—'कभी भूल के भी बाल्यावस्था में पुरुष का मन से भी ध्यान न करें ( स्त्रियें सत्यार्थ० पृ० ५० । अनेन प्रतीयते, यद्-बाल्येऽपि स्त्रियः पुंस्कामा पतिकामा वा भवन्ति 'प्राप्तौ सत्यां निषेधः' इति हि न्यायः। वेदश्च तद्दशामेव सङ्केतयति, न स १२ वर्षे विवाहं निषेधति। ११-१२ वर्षा विवाहिता ऋतुमतीत्वे जाते स्वयं पुत्रकामा भवन्ति; तर्हि यद्येतेनाऽपि तासां यौवनं साध्यते, तर्हि साध्यतां नाम १२ वर्षीयाणाम् नाऽस्मन्मत-हानिः। तेन न कोऽपि श्रुति-स्मृत्योर्विरोधः।

'ब्रह्मचर्येण कन्या, इति भवत्प्रमाणे उच्यते—तस्या ब्रह्मचर्य्यम् ऋतुकालप्राप्तिपर्यन्तं तिष्ठति; ततः प्रकृतिः स्वयमेव तासां ब्रह्मचर्योद्यापनं कारयति। तेन प्रकृतिकृतब्रह्मचर्योद्यापनात् प्रागेव (१२ वर्षे) ब्रह्मचर्यसमये सा युवानं पतिं विन्दते; अतो ऽत्रापि नास्मन्मतहानिः। अत्र 'ब्रह्मचर्यं' वीर्यनिग्रहपर्यायभूतम्, नतु वेदपाठद्योतकम्। अन्यथा ऽस्य 'अनड्वान् ब्रह्मचर्येणाऽश्वो घासं जिगीर्षति' अ० ११।५।१८ इत्युत्तरार्धेन विरोधः स्यात्; अन्यथा श्रीमाननडुहोऽश्वाँश्चाऽपि घासनिगरणकर्मणि वेदमध्यापयेत्? येनोपक्रम्यते येन चोपसंह्रियते, स एव वाक्यार्थः'।

अग्रे श्रीमान् बाल्ययुवावस्थयोः प्रदर्शने स्वस्वाम्यनभिमतयोर्भावप्रकाश-हारीतसंहितयोः प्रमाणं प्रदर्शयति। भवदुद्धृतभावप्रकाशवचनानुसारं १६ वर्षपर्यन्तं नारी बालेति गीयते; तदुत्तरं १७ वर्षादारभ्य ३२ पर्यन्तं तरुणी भवति। तत्र पृच्छयते—किं श्रीमान् भावप्रकाशं मन्यते? यद्येवम्, तत्र भवदुपस्थापितश्लोकस्या ऽग्रिमेष्वेव श्लोकेषु लिखितम्—'निदाघशरदो बाला हिता विषयिणी मता। तरुणी शीतसमये प्रौढा वर्षावसन्तयोः' पूर्वखण्डे ऋतुप्रकरणे २७८ पद्यम्। अत्र बालायाः प्रौढायाश्च ('तदूर्ध्वमधिरूढा (प्रौढा) स्यात् पञ्चाशद्वत्सराऽवधि' पूर्वखण्ड ऋतु० २७७ इति भावप्रकाशलक्षितायाः) ववाहस्याऽपि भावप्रकाशसम्मतत्वाद् भवता स मन्तव्यो भवेत्। प्रत्युत तत्र 'तरुणीप्रौढयोर्विवाहे हानयो बालाविवाहे च लाभाः प्रदर्शिताः। श्रूयताम्—'नित्यं बाला सेव्यमाना नित्यं वर्धयते बलम्। तरुणी ह्रासयेच्छक्ति प्रौढोद्भावयते जराम्' २७९ इति तरुणी प्रौढयोः स्त्रियोः सेवने हानिः प्रदर्शिता, बाला च बलवर्द्धिका मता। अग्रे पुनः स बालाविवाहं प्रशंसति—बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदके स्नानं सद्यः प्राणकराणि षट्' २८० इति बाला स्त्री प्रशंसिता। एवमन्यत्राऽपि—बालार्को यज्ञधूम्रश्च बाला स्त्री निर्झरोदकम्। आयुष्यवर्द्धकं नित्यं रात्रौ क्षीरान्नभोजनम्, अत्राऽपि सैव

वार्त्ता। तेन भावप्रकाशोऽप्यस्मत्पक्षोपोद्वलकः सिद्धः। भवत्स्वाम्यप्याचष्टे—'शरीर की उन्नति वा अवनति की विधि जैसी वैद्यकशास्त्र में है—वैसी अन्यत्र नहीं' संस्का० वि० पृ० ३२। शिष्टमत्र 'बाल्यं जन्मत आरभ्य १६ वर्षपर्यन्तं मतम्, अस्माभिस्तु धर्मशास्त्राऽनुसारं १२ वर्षाया ऋतुकालात्पूर्वं वा विवाहसिद्धान्त ऋतुकाले च गर्भो मन्तव्यो भवेत्; तदाऽपि तस्या बालात्वात्। 'आर्त्तवस्रावादिवसाद् ऋतुः षोडशरात्रयः। गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः।' इति भावप्रकाशे पूर्वख० गर्भप्र० २ श्लोकः; ऋत वृतौ स्त्रियं गच्छेत् स्त्री च्छया वा वरं स्मरन्' बृहत्पराश० ४।३६ अत्र ऋतुरेव गर्भयोग्यसमय उक्तो नतु १७-२४ वर्षावस्था। 'सर्वासामेव चतुरवर्णस्त्रीणां सर्व्ववादिसम्मतः पूर्वोक्तः समयः' इति भावप्रकाशे तत्र स्पष्टमुक्तम्। अधुना वाच्यं यत्—किं भवानेतदादिकान् भा० प्र० श्लोकान् मन्यते, न वा? यदि मन्यते; तर्ह्यस्मत्पक्षः सिद्धः। यदि न; तर्हि कथम्?। तर्हि स्वोपस्थापित एव श्लोकः कथं मन्यते?। यदि स वेदानुकूलस्तर्हि १७।३२ अवस्था भवता भवदाचार्येण च कथं न सिद्धान्तिता विवाहे? एवञ्च भवत्पक्षोऽसिद्धो जातः। अधुना भवता ऽन्यदेव प्रमाणमुद्ध्रियतम्, यत्र १७।२४ वर्षे विवाहावस्था निरूपिता स्याद्, अन्यथा भवत्प्रतिज्ञैवाऽसिद्धा जाता। अस्माभिस्तु द्वादशवर्षे ऋतुकालात्पूर्वे वा विवाहे बहूनि प्रमाणानि प्रदर्शितानि प्रदर्शयिष्यमाणानि चैतल्लेखान्ते। भवतैकमपि किमपीदृक् प्रमाणं नोपन्यस्तम्, यत्र १७-२४ अवस्थाया गन्धमात्रमपि स्याद्, अतएव भवत्पक्षो निराधार एव। हारीतसंहितास्थं तु भवद्वचनं व्यर्थम्, तत्पुरुषावस्थानिर्द्धारपरम् स्त्री पुंसयोरवस्थाभेदो भवति: अन्यथा स्त्रीपुंसयोस्समानावस्थाकं यौवनं स्यात्' परं नैवम्भवतीति श्रीमानपि मंस्येते।

'षोडशी स्तोमः, इत्यादियाजुषवचनन्तु विना विवरणं श्रीमता व्यर्थं स्थापितम्। यद्यनेन भवान् षोडश्याः स्त्रिया यौवनं साधयति, तत्तु भवत्पक्षविघातकम्, यतो भवता भावप्रकाशवचनेन षोडशाऽवस्थाऽपि बाल्ये परिगणिता,

÷ स्त्री पुंसयोः। अत्र 'अचतुरे' ति अच्प्रत्ययान्तो निपातितः।

भवान् स्वयमपि १७-२४ वर्षे स्त्रीविवाह पक्षपाती। भवत्स्वामी तु स्वभाष्ये—'षोडशी' तिशब्दं पुल्लिङ्गं मन्यते, तस्य 'प्रशस्ताः षोडश कलाः सन्ति यस्मिन् सः' इति पदार्थं 'षोडशकलात्मके जगति विद्याबलं विस्तार्य्य' इति भावार्थञ्च निदर्श्य भवत्पक्षं सर्व्वथा विहन्ति, यतो नाऽत्र किमपि यौवनादिप्रकरणम्। आश्चर्य-भवता शब्दमात्रमेव दृष्टैवतदुद्धृतं वेदाऽनभिज्ञजनतायां स्वप्रभावमारोपयितुम्। अत्र शतपथब्राह्मणमपि द्रष्टव्यं यद् भवदभिप्राय-

खण्डनम्—'षोडशी स्तोम ओजो द्रविणम्–असावेव आदित्यः षोडशी' शत० ८।५।१।१० हन्त ! एतेन किं भवतो निष्पन्नं पुलँ लिङ्गान्तषोडशशब्देन, प्रयासमात्र फलकं भवदुद्धरणं जातम्।

अग्रे भवान् निन्दितमेकं पापमाचरति यद्—'अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत्' १०।५३ सुश्रु० अत्रत्य–'द्वादशवर्षां' इति सर्व्वसंस्करणेषु प्रकाशितस्य पदस्य स्थाने 'षोडशवर्षाम्' इति पठति। हन्त ! स्वार्थो महदभद्रवस्तु भवति। स आर्षग्रन्थेषु पाठपरिवर्त्तनमपि कारयति। यद्यत्र 'षोडशवर्षाम्' इति पाठोऽभविष्यत्, तर्हि 'ऊनषोडशवर्षायाम्' इत्यादिकं तत्सध्रीचीनं १०।५४। ५५ इति गर्भाधानविषयकश्लोकद्वयमुपस्थापयन् स्वामी सत्यार्थ प्र० सं० का० विध्योः 'षोडशवर्षां पत्नीमावहेत्' इतिस्वपक्षपोषकविवाहवचनमप्यवश्यमुदधरिष्यत्। परं तस्योक्तवचनं न मिलितम्, तदैव तु तेन गर्भाधानविषयकताहक्श्लोकोपस्थापनेन सन्तोषः कृतः, 'द्वादशवर्षाम्' इति विद्यमानपाठश्च तेन स्वपक्षखण्डकत्वाद् दृष्ट्वाऽप्युपेक्षितः। तेन स्पष्टं सिद्ध्यति यत्-तत्र 'द्वादशवर्षाम्' इत्येव प्राचीनपाठो युक्तश्च। युक्तः कथं न स्यात् ? यतो मनुवचने पराशर वचने वृहद्यमवचने एवमन्यत्र च यदा विवाहे १२ वर्षाया विवाहनियमो दृश्यते,तर्ह्यायुर्वेदेऽपि स कथं न भवेत् ? आयुर्वेदे सर्वत्र स्मृतिपुराणानुकूलता दृश्यते, क्रियतां सुश्रुतचरकयोः पाठः। अथ च 'षोडशवर्षाम्' इति पाठे धूर्त्ततया मेलितेऽपि न भवत्पक्षसिद्धिः—'भक्षितेऽपि लशुने न शान्तो व्याधिः, यतो भवाँस्तु कन्याविवाहं १७।२४ वर्षे मन्यते, षोडशवर्षाञ्च भावप्रकाशरीत्या बालावस्थायामन्तर्भावयति, भवत्स्वामी च १६।१७ वर्षयोः कन्याविवाहमधममाचष्टे स० प्र० पृ० ४८, तर्हि कथमिमं पाठं प्राचीक्लृपत् ? तेन न भवदिष्टसिद्धिः। अथ च स्वकल्पितस्य डट्प्रत्ययान्त षोडश- लुप्तठक्प्रत्ययान्तषोडशवर्षाशब्दस्य १६ वर्षान्तरं १७।२४ वर्षे विवाहावस्थासाधनपरः श्रीमान् नूनं सुवर्णपदकमर्हति। सत्यजिघृक्षवो विवेचकाः स्ना० महाशयस्याऽस्मिन् कौतुके दत्तदृष्टयः स्युः, पश्यन्तु विद्यावाचस्पतेर्वाचस्पत्यम्। कस्मिन्नपि सुश्रुतसंस्करणे 'षोडशवर्षाम्' इति न पाठः, किन्तु 'द्वादशवर्षाम्' इति। हन्त ! प्रत्यक्षापलापं कुर्व्वाणः स्नातकमहाशयो धन्यः ! स पराशरसंवर्त्तादिवचनानि असमत्कल्पितानि पश्यति, परं स्वकल्पितं वचनं सुश्रुतस्य पश्यति। अधुना स एव जानीयात् यत्कस्य शल्यचिकित्सार्हे नयने+इति, योऽन्यल्लिखितमन्यदेव पठति 'द्वादशवर्षाम्' इति विद्यमानं पाठं 'षोडशवर्षान्' इति पठति। इति पाठकमहाभागा एव भवन्तु प्रतिभुवः।

मनुपराशरादिवचनं १२ वर्षे कन्या विवाहं साधयति वेदोऽपि च इति मया 'विवाहवयोविचारे' ४।३ साधितम्। स्वकीये गते 'विवाहवयोविमर्शे'ऽपि ५।२ ३

साधितम् । अस्मिन् 'विवाहवयोविवेके' ऽपि च अन्ते साधयिष्यमाणम् । 'पतिकामा' इतिविशेषणानि 'मक्खी को मल मल कर भैंसा बनाना' इति जन श्रुतिं चरितार्थयित्वा १७।२४ वर्षावस्थामात्रे विपरिणमय्य, युवत्याशीर्व्वादाऽर्थकञ्च मन्त्रमपि प्रसह्यकारितया मध्ये निवेशयन् स्नातक महाशयो नूनं विद्यावाचस्पतिः । मया प्रागसंकृदत्र समाहितम्, अतः पिष्टपेषणमुपेक्ष्यते, तेन न कोऽपि सिद्धः श्रुतिस्मृत्योर्विरोधः ।

## कन्यायां देवाधिपत्यविवेकः

'सोमः प्रथमो विविदे' सोमो ददद्' इतिमन्त्राभ्यां यन्मया कन्याविवाहवयोनिर्धारणं कृतमासीत्, तत् स्ना० महोदय उपहासाऽपदेशेन विना प्रमाणञ्चोपेक्षितवान् । स सोमगन्धर्वाग्न्यादिदेवता दानविषयमीमांसां स्वस्वामिविरुद्धामपि स्वयमप्यूरीकृतवानिति प्रमोदाऽवसरः । अग्निभोगसमाप्त्यनन्तरं कन्याविवाहं वेदाऽभिमतं वयं मन्महे । अग्निभोगश्च ११ वर्षे समाप्नोति इत्यस्माभिः ४।३ अङ्के स मानं साधितम्, यत् स्ना० महाशयेन स्पृष्टमेव न । अधुना स कन्याशरीरे सोमाद्याधिपत्ये कानिचित्स्मृतिप्रमाणान्युपन्यस्यति तद्विषयेऽस्माभिरपि विचार्यते— ।

तत्र 'व्यञ्जनेषु च जातेषु' इत्यादिश्लोकोऽस्मत्पार्श्वे विद्यमानयोरत्रिस्मृत्योः (बम्बई-इटावामुद्रितयोः) नास्ति । तत्र तु 'सोमस्तासां ददौशौचं गन्धर्वः शिक्षितां गिरम् । पावकःसर्वमेध्यत्वं' १३७ इति श्लोको विद्यते, एवं याज्ञवल्क्यस्मृतावपि १।७१ वशिष्ठस्मृतावपि २८।६ भवत्प्रमाणितबृहत्पराशरस्मृतावपि ४।६० तथापि पृच्छयते यत्-किं श्रीमानेतदादि वचनानि प्रमाणानि न मन्यते ? यद्येवम्,तर्हि सोमो-गौरी अधिश्रितः' ६।१२।३ इति वेदानुसारं सोमो गौर्य्यामधिश्रितो भवति, तत्परिभाषा च 'अष्टवर्षा भवेद् गौरी, इति तेन स्मृत्या अपि वचनं तदनुकूलम् । तथाचाऽयमर्थः—व्यञ्जनेषु जातेषु शरीराऽभ्यन्तरे जनितुमारब्धेषु (अत्र आदिकर्मणि निष्ठा,

---

+ नयने इति । 'ईदूदेद्' इति प्रगृह्यता ।

तदेवऋग्वेदभाष्ये१०।८५।२१ सायणस्य 'विगताञ्जनाम्'इति पदस्य सार्थक्यम्) सोमः कन्यां भुङ्क्ते, यतः—सोमगन्धर्वाऽग्नयः शरीराभ्यन्तर एव निवसन्ति, यद् यदङ्गं वहिरुद्गच्छति, तत्तत् प्राक् शरीराऽभ्यन्तरे प्ररोहति तदुद्गमकशक्तिर्वा प्रोद्भवति ततः क्रमशो बहिरेति । तर्हि तत् शरीराऽभ्यन्तरे यावत् तिष्ठति, तावत्तस्य तस्य देवस्य भोगो भवति यदा तदभ्यन्तरतो वहिरेतुं भवति तदाऽभ्यन्तरे तत्तद्देव याऽधिकारोऽपि समाप्नोति, द्वितीयश्च प्रारभ्यते । सा चाऽवस्था पूर्णाष्टवर्षसमाप्तावेकवर्षपर्य्यन्तं तिष्ठति । ततः पूर्णनववर्षान्ते एकवर्षपर्य्यन्तं शरीराभ्यन्तरे गन्धर्वाऽधिकारः । एतस्मिन् समये शरीराऽभ्यन्तरे स्तनोद्गमकशक्तिः

क्रमशः प्रोद्भवति। यदा सा शक्तिर्बाह्यशरीरेण सहाऽभ्यन्तरतः सम्पर्कं शनैश्शनैः कर्तुं प्रारभते तदा गन्धर्व्वाधिकारः समाप्नोति, अतएवसायणाचार्य्य ऋ० १० ८५ २१ मन्त्रभाष्ये बाह्यस्तनोद्गमादिर हतायामेव, गन्धर्वाधिकारं ब्रूते। एतस्मिन् समये वहिःकुचाऽदर्शनेऽपि बाला स्ववक्षो वस्त्रेण पिधातुं प्रवर्त्तते, ततो बहिः स्तनोद्गमः क्रमक्रमतो मंथरगत्या भवति। अन्यथाऽत्र बाह्यकुचानामर्थे मते तेषां ३५।४० वर्षेष्वपि सत्वात् तदाऽपि गन्धर्व्वाधिकारस्तिष्ठेत्, तदनतरमेव च (कुच-पतनानंतरं, गन्धर्व्वभोग समाप्तौ विवाहः प्रवर्त्तेत परं नैवमस्ति।

ततः पूर्णदशवर्षान्ते एकादशपर्य्यन्तमभ्यन्तरे रजःसञ्चयोऽग्निदेवताधिपत्ये प्रारभ्यते। यदाभ्यंतरे रजःसञ्चयः पूर्णोभवत्येकवर्षान्तरे, तस्य सम्बंधश्च बाह्यदेशेन भवितुमेवाऽऽशङ्क्यते, तदाऽग्निदेवस्याऽऽधिपत्यं पूर्णैकादशे वर्षे समाप्नोति। ततो द्वादशवर्षारम्भ एव—'अग्निर्मह्यमथो इमाम्' ऋ० १० ८५ ४१ 'तुरीयस्ते मनुष्यजाः' अ० १४।२।३ 'पुनः पत्नीमग्निरदादायुषा' अ० १४।२।२ इत्यग्निर्मनुष्यवराय समर्प्पयति,एतदेव देव-दत्तत्वम्। एषाऽवस्था द्वादशारम्भस्य। एतदेवाऽभिप्रेत्य—'वहेत्कन्यां द्वादशवार्षिकीम्' ६।६४ इति मनुना प्रकथय्य तदग्रिमे श्लोके 'देवदत्तां पतिर्भार्यां विन्दते' ६।६५ इत्युक्तं हेतुरूपेण। तेन 'वेदार्थोपनिवद्धत्वात् प्राधान्यं हि मनोः स्मृतम्। मनुस्मृतिविरुद्धा तु या स्मृतिः सा न शस्यते' इत्यपरस्मृतीनामपि वेदानुकूलमनुस्मृत्यनुसारिणी व्यवस्था भवतीत्यस्मत्पक्षः स्पष्टं सिद्ध्यति। 'रयिञ्च पुत्राँश्चादादग्निर्मह्यमथो इमाम्' ऋ० १०।८५ ४१ अस्मिन मन्त्रे उक्तं यद्-अग्निना मनुष्यवराय पुत्रधनसहिता बाला प्रदत्ता, तर्हि किमग्निदेवः साक्षाद्भूत्वा पुत्रान् साक्षादेवोपादाय मनुष्यवरायाऽर्प्पयति? नहि—एतेन सिद्धं यदभ्यन्तर एव स तदारजःसञ्चये पुत्रोत्पादकशक्तिं प्रवर्त्तयन् भवति। यदा तच्छक्त्या बाह्यशरीरेण सम्बन्धो भवितुमेवेहते, ततः पूर्व्वमभ्यन्तरस्थदेवाऽधिकारः समाप्नोति इत्यत्यन्तस्फुटा वार्त्ता। दुराग्रहे सति तु ब्रह्माऽपि नरं न रञ्जयितुमीष्टे।

अधुना श्रीमान् पृच्छयते यद्—'रजस्यग्निः प्रतिष्ठितः, इत्यस्य कोऽर्थः? यद्यस्मदनुसारी रजसोऽन्तस्सञ्चयसमये, तर्ह्यस्मत्पक्षः सिद्धः। यदि कश्चिदन्यः, अर्थाद्—भवद्भावानुसारं रजः-प्रकटतायां कन्याविवाहो यद्यनेन स्मार्त्तपद्येन सिद्-ध्यति, तर्ह्यपि भवत्पक्षखण्डनम् यतो रजसः प्राकट्यम् 'तद्वर्षाद् द्वादशात् काले' सुश्रुत० शारीर० ३।११ 'द्वादशाद् वत्सरादूर्ध्वमापञ्चाशत्समाः स्त्रियाः' वाग्भट० एवं भावप्रकाशेऽपि, सत्यार्थ प्र० ४६ पृष्ठे 'त्रीणिवर्षाणि' इति श्लोकव्याख्याने १२ वर्षान्ते रजस्वलात्वं मन्यते। एवं यदि १२ वर्षान्ते ऋतुप्राकट्यसिद्धिः तर्हि ऋतुसमयेऽग्निदेवाधिपत्यमन्तुः स्ना० महोदयस्याऽपि मते कन्याया १२ वर्ष-

विवाहः सिद्धः—'जादू वह जो सिर पर चढ़कर बोले' इति तदुक्तिस्तच्छिरसि प्राप।

एवं तदुपस्थापितसंवर्त्त—गोभिलपुत्रगृह्यसूत्रसंग्रह काशीखण्ड प्रभृतीनामपि पूर्वोक्तएवाशयः। अन्यदपि पृच्छ्यते-किं श्रीमान् संवर्त्तस्मृतिं मनुते यत्-तत्प्रमाणमुद्धृतवान्? यदि आम् इति, तर्हि श्रीमता यः संवर्त्तस्मृतेः ६५ श्लोक उद्धृतस्तस्यैव त्वग्रिमो व्यवस्थापकः ६६ श्लोकः—'अष्टवर्षा भवेद् गौरी' त्यादि वर्त्तते, ततः ६८ श्लोकः—'तस्माद् विवाहयेत् कन्यां यावन्नर्तुमती भवेत्' इति। तर्हि यदि संवर्त्तस्मृतिरृतुमतीत्वात् पूर्वमेव विवाहमिच्छति, तर्हि १२ वर्षीयोऽस्मत्पक्ष सिद्धः, भवत्पक्षश्च भवत्प्रमाणितस्मृतिद्वाराऽखण्ड्यतः। अतएव तत्राऽग्रिमसंवादाद् रजःकाले इत्यस्याऽन्तः सञ्चीयमानरजसि तात्पर्य्यम्, नतु बाह्यदर्शने, अन्यथा संवर्त्तस्मृतिकारः ६७ श्लोके बाह्यरजस्वलात्वे मातापितृभ्रातॄणां नरकपातविभीषिकां न प्रादास्यत्। संवर्त्तस्मृतिप्रमाणपक्षपातित्वाच्च भवतोऽपि मते ऋतुकालात् पूर्वं कन्याविवाहः सिद्धः। श्रीमते धन्यवादः समर्प्यते यदुपांशु श्रीमान् ममपक्षमपि समर्थयमान आस्ते। 'कामकाले' इति भवताप्रदर्शितं पाठान्तरं तु भवताऽग्रे समुपस्थापिताद् 'अनुपजातसंभोगेच्छावस्थां स्त्रियं सोमोलेभे' इति सायणभाष्याद् वचनान्तरेभ्यो विरुद्धत्वाच्चाऽसङ्गतम्।

'एतानि सर्वाण्यपि वचनानि नहि द्वादशे वर्षे विवाहं किन्तु रजोदर्शनानन्तरमेव युवत्या विवाहं पोषयन्तीति स्पष्टमेव' इति भवत × कृत्रिमकल्पना। नाऽमीषु प्रमाणेषु रजोदर्शनानन्तरं युवत्या विवाह ः काऽपि लभ्यते। किं रजोदर्शनानन्तरं भवान् कन्यां युवतिं मन्यते? यद्येवम्; तर्हि रजोदर्शनस्याऽऽयुर्वेदानुसारं द्वादशवर्षान्तभावित्वाद्भवन्मतेऽपि तस्मिन्नेव वयसि (१२—१३) वर्षे यौवनं तद्विवाहश्च सिद्धः; अन्यथा १७ त आरभ्यैव २४ वर्षपर्य्यन्तमेव रजोदर्शनं भवतीत्यत्र किमपि प्राचीन प्रमाणं कथं न दर्श्यते श्रीमता?। रजोदर्शनन्तु ३०—४० वर्षेऽपि भवति; तर्हि विवाहस्य भवन्मते रजोदर्शनमूलकत्वे तदाऽपि कन्या विवाह ः कथं न मन्यते भवता? अथ च यदि भवान् रजोदर्शनेऽग्निदेवस्याऽऽधिपत्यं मन्यतेतदाधिपत्यानन्तरमेव च कन्या विवाहं मन्यते; तर्हि रजोदर्शनन्तु ५० वर्ष पर्यन्तं जायमानं भवति; तत्पर्य्यन्तं भवन्मतेऽग्नेर्भोगः स्थितः; ततः ५० वर्षानन्तरमेव अग्निभोगसमाप्तौ स्त्रीविवाहो मन्तव्यो भवेत्। कुचयोर्दर्शनं दशमवर्षे यदि श्रीमता कर्त्तुमशक्यम; तर्हि नैतेन काऽपि हानिः। कुचदर्शनं शास्त्रदृष्ट्या गन्धर्व्वेण कर्त्तव्यं भवति, न स्नातकेन। गन्धर्व्वश्च शरीराऽभ्यन्तरे भवति; शरीराऽभ्यन्तरे च तदा कुचोद्गमकशक्तिं प्रवर्त्तयन् भवतीति स्पष्टीकृतचरम्। अनृतुमत्या एवैभिः स्मृतिवचनैर्विवाहः साधित इति विशदीकृतमेव, पिष्टपेषणं

व्ययम् । आश्चर्य्यमेतत्—अधुना स्वस्वाम्यनभीष्टा अपि स्मृतयो मता अत्र स्नातकमहाशयेन । तर्हि तेन यथाऽत्रिसंवर्त्तस्मृती मते तथा पराशरस्मृतिरन्यस्मृतयश्चाऽपि मन्तव्याः स्युः; तत्र च सनातनधर्म्मव्यवस्था मन्तव्या स्यात् । यदि भवन्मते रजोदर्शन एवाऽग्नेराधिपत्यम्, ततः कन्याविवाहः; तर्हि भवान् १२ वर्षावस्थां कन्याविवाहस्य स्वसिद्धान्तीकरोतु; कथं १७—२४ वर्षमात्राग्रहः क्रियते ।

अग्रे श्रीमान् सायणभाष्यमुद्धरति—'जारः कनीनाम्' ऋ० १ । ६६ । ४ इति मन्त्रस्य । अनुपजातसंभोगेच्छावस्थां स्त्रियं सोमो लेभे, अत्रास्मदानुकूल्यमेव सोमस्य नववर्षान्तं गौर्यामधिकारः स्पष्टीकृतः प्राक् । अत्रोभयोः साम्यम् । 'स च सोम ईषदुपजातसंभोगेच्छावस्थां तांविश्वावसवे गन्धर्वायप्रादात्' इति भवदुद्धृतसायणवचनम् । 'उदीर्ष्वातः पतिवती ह्येषा' ऋ० १० । ८५ । २१ इति मन्त्रे सायणः कीदृश्यां कन्यायां गन्धर्वाधिपत्यं मेने-इत्यपि श्रूयताम्—'तर्हि एनां विहाय कां स्वीकरोमीति यदि ब्रूषे ( गन्धर्व ! ), तर्हि अन्यां पितृकुले स्थितामनूढेति परिस्फुटां विगताञ्जनां वा स्तनोद्गमादराहत्येनाऽप्रौढामित्यर्थः-इच्छ' अत्र मन्त्रे सायणेन बाह्यस्तनोद्गमरहितायां गन्धर्वाधिपत्यं स्वीकृतम् । अस्यामवस्थायां बालासु, काश्चिच्चञ्चलता दृश्यन्ते, ताः पतिविषयकं वार्त्तालापमपि कुर्वन्ति मिथः । एतदभिप्रेत्यैव सायण ईषदुपजातसंभोगेच्छावस्थामिति लिलेख [ प्रत्युत सायणेन त्वस्माकंपक्षपुष्टिः कृता- कनीनां-कन्यकानां जारो जरयिताऽग्निः; यतो विवाह समयेऽग्नौ लाजादि द्रव्यहोमे सति तासां कन्यात्वं निवर्त्तते' ( अत्र कन्यासंज्ञायामग्नेः स्वाम्यं स्पष्टम् ) स च गन्धर्वो विवाहसमयेऽग्नये प्रददौ । अग्निश्च मनुजाय भर्त्रे प्रायच्छदिति अवशिष्टसायणवचनेन ४ : ३ अङ्के उक्ता ऽस्मद्-व्यवस्था समूला सिद्धा, या श्रीमता उपहास्या मता, अत्र चागत्य स्वीकृता । गौरी रोहिणी कन्या-इति तिस्रः संज्ञाः क्रमशः कुमारीणाम् । तासामन्तः क्रमशः सोमः-गन्धर्व -अग्निरिति त्रयाणां देवानामाधिपत्यम् तिसृणां संज्ञानां परिभाषा पूर्णाष्टवर्षा-पूर्णनववर्षा-पूर्णदशवर्षा चेति तिस्रः । इत्थमेषु वर्षेषु एकैकवर्षस्यान्तरम् । अत एव देवानां स्वाम्येऽप्येकवर्षस्याऽन्तरम् त्रयाणां क्रमशो नवदशैकादशवर्षेषु स्वाम्यसमाप्त्याऽग्निकर्तृककन्याकर्मक वरसम्प्रदानकदानस्यैव विवाहत्वात् तस्याश्चाऽवस्थाया द्वादशवर्षभावित्वादस्मत्पक्षः समूलः सिद्धः ।

लघुबृहत्पराशरस्मृतिविवेचना अग्रे श्रीस्नातको लिखति यत्पराशरस्मृतेः १२।८१ श्लोके ५९२श्लो० संख्या उक्ता, गणनायां तु ६१५ श्लोकसंख्या-

इत्याश्चर्यचकितोह्ममभवमिति । श्रीमत आश्चर्यसदा भवति ।— किञ्चिद्विचारस्तु क्रियताम् । उक्तपंत्रे पराशरीय-धर्मशास्त्रप्रतिपादक-वचनान्येव ५६२ निर्दिष्टानि। शिष्टाः २३ श्लोकास्तच्छिष्यपुत्रादिना भूमिकारूपेण योजिता इति स्पष्टोपि विषयः श्रीमद्-बुद्धौ न प्रविष्टः, चित्रम् ! दृश्यताम्—'अथातो हिमशैलाग्रे' इति १ श्लोकादारभ्य व्यासवाक्यावसानेषु इति १८ श्लोकपर्यन्तं पराशरपार्श्वे गमनविषयकवृत्तमुक्तम् । ते १८ श्लोकाः कथं धर्मशास्त्रवचनसंग्रहे गण्येरन् ?। ततो भवन्निर्दिष्टः—'एतत्पाराशरं शास्त्रं श्लोकानां शतपञ्चकम् । द्विर्नवत्या समायुक्तं' १२।८१ इति पराशरीयधर्मशास्त्रप्रतिपादकवचनसंख्यानिर्देष्टा श्लोकः । तत्सध्रीचीनः फल प्रतिपादकश्च २।८२ श्लोकोऽपि न पराशरवचः । इत्थं २० श्लोका भूमिकादिकस्य । शिष्टाः सन्ति त्रयः । ते १ माध्याये ३४-३५-३६ संख्याका न धर्मशास्त्रवचनेष्वन्तर्भावयितुं शक्याः । इत्थं ५६२ श्लोकास्तदीयपूर्वोत्तरप्रसंगादिरूपाः ; तेन तेपि न प्रक्षिप्ताः परन्तु धर्मशास्त्र-संग्रहाद्भिन्ना एव ।

यत्तु—'अष्टवर्षा भवेद्गौरी' त्यस्याऽप्रासङ्गिकत्वमुपक्षिप्तं दुनिया पुरीय-स्नातकेन; तदप्यापाततोदर्शनमूलकम् । भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ७।३ पर्यन्तं स्नातकेन स्वयमुल्लिखितम् । परं प्रसङ्गप्रतिपादकः—'**रजसा शुध्यते नारी**' ७।४ इति 'यः करोत्येकरात्रेण **वृषली** सेवनं द्विजः' ७।१० इति श्लोकश्च तेन ज्ञात्वैव त्यक्तः । अत्र नार्या रजसो **वृषल्याश्च** वर्णनात् तत्र 'अष्टवर्षा भवेद्गौरी......अत ऊर्ध्वं **रजस्वला**' ७।६ 'प्राप्ते तु द्वादशे वर्षे ७।७ 'माता चैव पिता चैव...दृष्ट्वा कन्यां रजस्वलाम्' ७।८ यस्तां समुद्वहेत्कन्यां...स विप्रो **वृषलीपतिः**' ७।९ इति रजस्वलात्वस्य वृषल्याः पत्युश्च वर्णनं प्रासङ्गिकमेव सिद्धम् । स्ना० महाशयेनाद्यपत्रे दर्शितम् ; यदस्मिन्नध्याये द्रव्यशुद्धिः कीर्त्तिता । तत्प्रमाणरूपे २-३-४-५ श्लोकेषु 'शुध्यति' इत्यादि दृश्यते । तथैव 'यः करोत्येकरात्रेण **वृषली**-सेवनं द्विजः । स भैक्ष्यभुग् जपन्नित्यं त्रिभिर्वर्षैर्**विशुध्यति**' इति ७।१० श्लोके वृषलीपतिशुद्धिः कीर्तिता । वृषलीपतिर्द्रव्यम् । स्वा० दयानन्देनापि मतं द्रव्यलक्षणं श्रूयताम्—जिसमें क्रिया, गुण और केवल गुण रहें उसको द्रव्य कहते हैं' सत्यार्थ० पृ० ३४ वृषलीपतिरपि गुण-क्रियायुक्तः; तेनेहाऽध्याये द्रव्यशुद्धावन्तर्भवति । अधुना प्रश्नो यत्-का वृषली, यत्पतेः शुद्धिरुच्यते ? तदुत्तरे द्वादशवर्षा-नन्तरमविवाहिता रजस्वला कन्या वृषली, तत्पतिश्च वृषलीपतिः । इत्युपोद्बलयितुं ७।६-७-८-९ श्लोकानामवश्यलेखनीयताऽऽसीत् । तर्हि कथमत्राऽप्रासङ्गिकता ? । ततः ११-१२ श्लोकादारभ्य २३ पर्यन्तं स एव 'शुध्यति' शुध्यतीत्यादिक्रमः ततोऽग्रेऽपि

ये श्लोकाः श्रीस्नातकेनाङ्किता स्तत्रापि तथात्वम् । इत्थमप्रासङ्गिकतापि श्रीस्नातकस्याऽनुत्तीर्णा विशिष्टविचाराऽकरणादित्यवधेयम् । अत एव स्वा० दयानन्देनापि 'अष्टवर्षा' इत्यादि-श्लोकाः पाराशर्या मताः पृ० ४८ ।

तृतीया युक्तिः स्नातकस्य 'अयं धर्मशास्त्रसंग्रहो नतु मूलधर्मशास्त्रम् इति, सापि तुच्छा समयनाशमात्रफलिका च । १२।८१ श्लोके पराशरीय-धर्मशास्त्रविषयकवचनानां सङ्ग्रहः प्रतिपादितः । अर्थात्-तदीयमूल-धर्मशास्त्र-प्रतिपादकवचनानां संग्रहस्य शुद्धसंख्या ५६२ दर्शिता । तर्हि भवान् कथं प्रसह्याऽस्याऽमूलपुस्तकतां दर्शयति ? अत्र तु मूल संख्यैव दर्शिता । किं मूल पुस्तके वचनानां संग्रहो न भवति ? । व्याडिप्रणीतं 'संग्रह नाम पुस्तकं महा-भाष्यकृता स्मृतम् तर्हि किं भवाँस्तत्पुस्तकमन्यस्य संग्रहं मस्यते, न मूल पुस्तकम्' वस्तुतस्तु भवतां यस्मिन् पुस्तके कृपादृष्टिः पतेत्. तदेव मूल पुस्तकं वैदिकमप्रक्षिप्तञ्च भवति । तस्मिन्नेव ग्रन्थे यदा भवद्भिरुद्धता दर्श्येत तदा तदपि प्रमाणकोटितो बहिर्गच्छति । यदि विधवाविवाहसिद्धिर्भवद्भिश्चिकीर्ष्येत प्रसह्य, तदा लघुपराशरस्मृतिः प्रमाणभूता भवति । यद्यस्माभिर्बृहत्पराशरस्मृतिद्वारा मध्याह्नसन्ध्या २।१६-२४-२६ ग्रहगणपत्यादिशान्तिर्नवमाद्यध्याये प्रोक्ता-इत्येवमन्ये विषयाः साध्येरन्; तर्हि सा बृहत्स्मृतिः श्रीमन्मतेऽमूलपुस्तकं भवेदिति भवतामिच्छैव सर्वत्र स्वतः प्रमाणं भवति । यथा लघुपराशरस्मृतिः पराशरवचनानां संग्रहस्तथा बृहत्पराशरस्मृतिरपि तद्वचनानां **'सुव्रत'** कृत-संग्रहः तथा च 'पराशरो व्यासवचोऽवगम्य यदाह शास्त्रं चतुराश्रमार्थम् । ...वक्ष्यत्यथ **सुव्रतस्तत्**, १।६३ एवं 'शक्तिसूनो.....**सुव्रत** स्त्विदम् ... शास्त्रमथाब्रवीत्, १।६४, 'पराशरोदितं शास्त्रं **सुव्रतः** प्रोक्तवानिदम्, १२।१३६ इति बृहत्पराशरस्मृतेः 'सुव्रत' प्रोक्तत्वेन भवांस्तस्या अपि मूल पुस्तकत्वं कथं मन्येत ? पराशरमाधवीयं पराशरस्मृतौ भाष्यम्; तत्र च लघु-वयसि कन्याविवाहस्वीकारः । तर्हि तदेव कथं प्रामाणिकं भवेद्भवन्मते ? । वस्तुतस्तु लघुबृहदिति नामभिरुभयमेव पुस्तकमेककर्तृकं भवति । यदि भवाँल्लघुस्मृतीनां मूलभूता बृहत्स्मृतीर्मन्येत, ता एव च प्रमाणं मन्येत; तर्हि 'लघुयमस्मृतौ, 'अष्टवर्षा भवेद् गौरी, तिन दृश्यते, पर बृहद्यमस्मृतौ 'पितुर्गेहे तु या कन्या... भ्रूणहत्या पितुस्तस्याः ३।१८ 'यस्तां विवाहयेत् कन्यां' ३।१९ प्राप्ते तु द्वादशे वर्षे ३।२० अष्ट वर्षा भवेद्गौरी ३।२१ 'माता चैव पिता चैव ३।२२ इत्यादिश्लोकाः प्राप्यन्ते; किं भवांस्तान् प्रमाणभूतान् मत्वाऽस्मत्सिद्धान्त-मन्ता स्यात् ? । परं भवद्भ्य आग्रहिलता पक्षपातश्च कुतो व्यपगच्छेत् ? । यदि बृहत्पराशरस्मृतावुक्तश्लोका न लभ्यन्ते; तर्हि यमस्मृति-बृहद्यमस्मृतिवज्ज्ञेयम् ।

भवता ये बृहत्पराशरश्लोका उल्लिखिताः; तत्र नास्मत्पक्षखण्डनम् । रक्तरेखाणां भावः श्रोतव्यः।-सुशीलत्वस्य १७-२४ वर्षमात्रे न भवति व्याप्तिः, किन्तु स्वाभाविकतया सर्व्वावस्थासु । स्वभावलक्षणं स्वसम्मताऽऽर्योद्देश्यरत्नमालायां द्रष्टव्यम् । अत एतेन कन्याऽऽयुर्न निर्धारयितुं शक्यम् । प्रत्युत तस्मिन्नेव ४।३१ श्लोके 'कन्याम्' इति शब्दः पराशरेण लिखितः । कन्याशब्दस्य परिभाषा 'लघुपराशरस्मृतौ पराशरेणोक्तैव दशवर्षा भवेत्कन्या ७।६। तत्र चैकवर्षपर्य्यन्तमग्नेः स्वाम्यम् । सा परिभाषा लघुस्वस्मृतौ कथनकारणादत्र नोक्ता । अतो बृहत्स्मृतावपि अस्मत्पक्ष एव सिद्धो न भावत्कः । 'सर्वावयवसम्पूर्णाम्' अत्रापि भवतो रेखा व्यर्था । अत्रायं भावः, यत्-छिन्नाऽवयवत्वमूलकाऽवयवाऽभावो न भवेद् । यतो मनुः-'अव्यङ्गाङ्गीम्' ३।१० इति श्लोके निषेधति । अत्रापि स एव भावः अत्रापि न भवत्पक्षगन्धः । 'हंसमातङ्ग गमना' इत्यनेन १७।२४ वर्षार्थग्रहणमुपहासजनकम् । अन्यथा श्रीमताऽत्रकिमपि प्रमाणं दातव्यं स्याद्, यत् २४ वर्षानन्तरं १७ वर्षाच्च प्राग् 'हंसमातङ्गगमनं' न भवति । यद्यत्र प्रमाणाऽभावस्तर्हि भवत्पक्षस्य न सिद्धिः । यदि शनैर्गमनमेव भवन्मते हंसमातङ्गगतिः; तर्हि सा तु त्रिचतुरवर्षेष्वपि मिलेत् । तदा किं भवांस्तदैव विवाहवयो मन्वीत ? तेनैतेन विवाहायुर्निष्कासनमुपहासास्पदम् । 'पतिप्रीतिकरीम्' इत्यस्याऽयंभावो यत्-कठोरवाङ् न स्यात् । द्वादशवर्षापि गुर्वादिशुश्रूषयित्री भवति । प्रत्युत भवत्सम्मत युवतयस्तु श्वशुरादि शुश्रूषणं निजलाघवकरं मत्वा तदुपेक्षन्ते । तेन नैतेभ्यः प्रसह्याकृष्टेभ्यः पदेभ्यो भवदिष्टलाभः । 'मक्खी को मलमल कर भैंसा बनाना' अस्य न्यायस्य भवत्प्रयास उदाहरणम् । पाठका इदं कौतुकं पश्यन्तु । तत्र 'कन्या' इति पराशरसम्मतः पारिभाषिकशब्दो भवत्पक्षस्य सर्वथोज्ञासकः । प्रत्युत ४।३२श्लोके 'सुमृद्वङ्गी शब्दोऽस्मदिष्टपोषकः । १७-२४ वर्षेषु कठोराङ्गता जायते, १२ वर्षनिकटे मृद्वङ्गिता तिष्ठति । तथा कन्यां वरो धीमान् वरयेद्वंशशुद्धये' ४।२३ अत्रापि सैव पारिभाषिकी कन्या । उभयोर्वृतौ १२ वर्षं तिबन्धकं न ( १६।५ ३७ हिन्दी मिलाप पत्रे एकयाऽमेरिकन महिलया १२-१३ वर्षे कन्याविवाहः शोभनो मतः । एवं १७।६।३७ 'शक्ति' पत्रे कुमारी कौशल्यादेवी कपूर नामिकयाऽपि बालाविवाहः सफलो मतः इति स्त्रीणां सम्मतिरत्र द्रष्टव्या ) भवति । एतद्वरणं पित्रनुमतिमूलकम् । 'यौवनस्थां पतिस्तथा' अत्र रक्षेदित्यस्ति, न तु विवहेदिति ।—

भवानत्र पारिभाषिकं यौवनं गृह्णीते, कान्त्यादिना दृश्यमानं वा ? । यदि पारिभाषिकं तर्हि भवता २५-३२ कन्याविवाहमपि स्वीकृत्य १७-२४

मात्रस्वसिद्धान्ते विपरिणमनं कर्त्तव्यं स्यात्। ततश्च भवत्प्रतिज्ञाविपरिणामाद् प्रतिज्ञाहानिनामकं निग्रहस्थानमापतेद् 'निग्रहस्थानञ्च पराजय' इति' न्याय० १।२।१९ यदि कान्त्या प्रतीयमानं यौवनं भवानत्र स्वीकरोति, तद् १२ वर्षेपि भवति इति वयमग्रेप्रस्फोटयितास्मः 'सुश्रुत प्रमाणेन। वेदे पत्यु कृते 'युव' शब्दः समेति। इदं युवत्वमपि भवान् पारिभाषिकं मन्यते किम् ? यदि न; तर्हि कन्याकृतेपि तथात्वम् यदि पतियौवनेऽपि पारिभाषिकत मनुते भवान्; तर्हि सुश्रुतानुसार पुंसो यौवनं ३० वर्षपर्य्यन्तं मंस्यते। ततो भवत्स्वाम्यभिमतं ३५-४० वर्षस्य मध्यमब्रह्मचर्य्यं, ४८ वर्षस्य (स्वप्नदोषादियुक्तम्) उत्तमोत्तम (?) ब्रह्मचर्य—च खण्डितं स्यात्। अत्र यदुत्तरम्, अस्मन्मतेपि तादृशमवसेयम्। यथा भवता ४।१ अंके 'प्रौढाविवाहोऽमानि, तदा प्रौढात्वस्य पारिभाषिकतोरीकारे तदूर्ध्वमधिरूढा (प्रौढा) स्यात्पञ्चाशद्वत्सरावधि' पूर्वखं० ऋतु प्र० २७७ इति भवत्सम्मतभावप्रकाशानुसारं ३३-५० वर्षं कन्याया विवाहकालः सिध्येत्। परं भवता तत्र 'प्रौढा' शब्दः पारिभाषिकत्वे न प्रयुक्तः, किन्तु यौवने। तथैव यत्र क्वचिच्छ्रुतिस्मृतिषु कन्याकृते युवतित्वं समुपात्तं तत्रापि न तत्पारिभाषिकं किन्तु ऋतुकालनैकट्ये प्रतीयमानमेव। इत्यग्रेऽस्माभिर्द्वादशवर्षतः कन्यायौवनं 'सुश्रुत' मतेन साधयिष्यते। 'प्राप्ते द्वादशवर्षेऽत्र या रजो न बिभर्त्ति हि। धारितं यन्नया रेतो रेतोधाः सा प्रकीर्त्तिता' ५।३५८ अत्र बृहत्पराशरेण द्वादशवर्षे रजस्वलात्वाभावे वीर्य्याधानं निन्दितं मतम्। तेन तन्मते द्वादशवर्षारम्भे विवाहः सिद्धोऽभूत्। एवं 'यौवने बन्धुकारणाद्' अत्र न भवत्सम्मता १७-२४ वर्षावस्था, प्रमाणाऽभावात्। किन्तु द्वादशवर्षावस्थेति 'विवाहवयोविवेचनायां' वक्ष्यते। प्रत्युत राजप्रकरणेऽस्मिन् 'उद्वाह उदितः स्त्रीणां यौनसम्बन्धकारणात्' १०।१४ इति **'यौन'** पाठो दृश्यते बृहत्स्मृतौ, न भवत्सम्मतः। द्रष्टव्या वेङ्कटेश्वर प्रेस मुद्रिता बृहत्पराशरस्मृतिः। न चाऽप्ययं श्लोकस्तत्र सामान्यधर्मेषु पठितः। सामान्यशास्त्रमेवानुसृत्य व्यवहारा भवन्ति। न केवलं पराशरस्मृतावेव ७।६ प्रत्युत संवर्त्तस्मृतौ ६५।६६।६७ बृहद्यमस्मृतौ ३।१८-१९-२०-२१-२२, शीघ्रबोधे १।५२-५३-५४ चापि 'अष्टवर्षा भवेद्गौरी' त्यादयः श्लोकाः प्राप्यन्ते। 'पूना' मुद्रिताऽङ्गिरः स्मृतावपि १२६-१२७-१२८ श्लोका ईदृशाः। तेन प्रक्षिप्तताऽपदेशो दूरापास्तः; असत्पक्षश्च तेन सिद्धः।

**कन्योपनयनविमर्शः**—'या तत्तद्वर्णस्योपनयनावस्था, सैव तत्तद्वर्णस्त्रीणां विवाहावस्था' इति मम मूलभूतः सिद्धान्तो नास्ति। ४।३ संख्यायाः १९ से २० पंक्तित आरभ्य २५ पर्यन्तमेतदीयालोचना द्रष्टव्या। श्रीमता जनता

 



ऽङ्गीक्रियते। एतत्पक्षं स्वीकृत्यापि, न भवत्यस्मत्पक्षे दोषः; यतो यज्ञोपवीतस्य ८-११-१२ वर्षेषु मूलसिद्धान्तत्वात्।' अतो भवत्प्रमाणित बृहत्पराशरस्मृतौ लिखितम्—'अष्टैकद्वादशाब्दानि सगर्भाणि द्विजन्मनाम्। मुख्यः कालो व्रतस्यैष. ह्यन्य उक्तो विपर्यये' ४।१६२। षोडशादिस्त्वन्तिमो गौणश्चाऽवधिः, न च विधिवाक्यम्। अन्यथा वेदारम्भसंस्कारोपि षोडशवर्षादनन्तरमेवोपतिष्ठेत, तस्योपनयनपूर्वकत्वादिति वक्ष्यते।

अधुना भवदुपक्षिप्तेऽप्रासंगिकेपि * स्त्रीणामुपनयनवेदादिविषये विविच्यते। तत्र ब्रह्मवादिन्य आरूढपतितत्वेनाऽपवादभूताः। अतस्ताः सामान्यशास्त्रे गणयितुं न शक्याः। नियमाः सामान्यशास्त्रानुसारं भवन्ति, विशेषशास्त्रमेकदेशि भवति। तत् ('विशिष्टशास्त्रं') सामान्यशास्त्रं स्वविषयतोऽन्यत्र बाधितुं नाऽलम्। अत एव योगदर्शनेऽप्युक्तम्—'नचोत्सर्गस्याऽपवादान्निवृत्तिरिति' साध० १३। महाभाष्येऽपि 'मिदचोऽन्त्यात्' सूत्रे—'नैव ईश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति अपवादैरुत्सर्गा बाध्यन्तामिति।' अथ च ब्रह्मवादिनीत्यस्याऽर्थः परमात्मविषयकसवादिनी। तत्र तु पुराणैर्दर्शनैश्चापि कार्यनिर्वाहः सुशकः; तत्र वेदस्य नावश्यकता, किन्तु ज्ञानापरपर्य्यायवेदस्य। 'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' महाभाष्य ३।२।१२४। अत एव 'अस्य वामीय' सूक्ते आत्मानन्दभाष्ये इदं शंख वचनमुद्धृतम्—'नोपनीतो नैव ब्रह्मविद्यां व्याहरते शिशुः। योषितोऽपि न तद् ब्रूयुर्विना तु ब्रह्मवादिनीः।' तत्रैव चन्द्रिकाकारस्य आह्निके एवमुक्तिः—'तद् ब्रह्मवादिनीव्यतिरिक्तविषयम्।' 'स्त्रीणां यत्र स्मृतौ ब्रह्मविद्यायाः प्रतिषेधनम्। दुष्टं तत्स्मरणम्, यतः मन्त्रादि विषयो भवेत्' इति आत्मानन्दभाष्योद्धृतवचसा सिध्यति यत्-स्त्रीणां मन्त्रभाग विषये निषेध एव। 'एषापि निषेधस्मृतिसदृशी नेपेया अथवा मन्त्रादिविषया चेति न ब्रह्मविद्याविषया' इति पाठेनात्मानन्देन मन्त्रभागः स्पष्टं पृथङ्मतः। 'शूद्रसमैव ब्राह्मणादीनामपि स्त्र्युपनयनरहिता' इत्यात्मानन्दः। अप शूद्रारम्भभाष्यस्य मा भूच्छ्रौतोऽधिकारः; इतिहासव्यासपुराणादिमूलस्तु भविष्यति। अस्ति च पुराणादिष्वप्युपदेष्टव्यं तत्त्वमस्यादिवाक्यम्, तच्च वेदस्वरूपं न वेदः। आहुश्च भट्टाचार्याः तानेव वैदिकाञ्छब्दान् भारतादिनिवेशितान्। स्वाध्याय नियम हित्वा लोकबुद्ध्या प्रयु-

---

* श्रीसम्पादकमहानुभावो वेदेतिहासविषयोल्लेखे स्नातकखण्डनस्योद्धारे) मामप्रस्तुतदोषेण दूषयति। परं स स्नातकमहाशयं कन्योपनयनोल्लेखेऽप्रस्तुतता दोषेण दूषितं न मन्यते। बत! परं वस्तुतस्तु प्रासंगिका गौणविषया अपि शास्त्रार्थे प्रचलन्त्येव।

श्रुते' इत्यात्मानन्दः।

तत्र भवता यत् **स्वस्वाम्यनभीष्ट** हारीतस्मृतिवचनं यमवचनञ्चोल्लिखितम्, न तत् तत्र तत्र प्राप्यते। यत्र चोद्धृत पराशरमाधवीये निर्णयसिन्धौ (३ परिच्छेदे) च; तत्र **पुराकल्प--युगान्तरवर्षिता** च निर्दिष्टा। तत्र यमवचने तु 'पुराकल्पे कुमारीणाम् अत्र पुराकल्पे' इति स्पष्टमेव। भवदुद्धृतहारीत वचने सद्योवधूनां (सर्वसाधारणस्त्रीणां) वेदाध्ययनादिकं **न निर्दिष्टम्**। अतस्तत्र उप-नयनं कृत्वाऽर्थात् पतिसमीपनयनं कृत्वेत्यर्थः। यथा ऽऽचार्यस्य **समीपे वैधं** नयनमेवोपनयनं तथा सद्योवधूनां "पतिरेव गुरुः स्त्रीणां" चाणक्य० ५।१ 'पतिसेवा-गुरौ वासो' मनु० २।६७ इति वचनाद् गुरुभूतस्य पत्युर्**निकटे वैधं** नयनमेवोपनयनम्। अत एव सर्वमान्या मनुस्मृतिः -'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः २।६७ इत्याचष्टे। वैदिकः संस्कार उपनयनतन्मूलकवेदारम्भनामक इत्यर्थः; स वैवाहिको विधिरेव अत एव तासामुपनयनं पृथङ् निषिद्धम्। 'आचार्य उपनयमानो **ब्रह्मचारिणं**' अ० ११।५।३ 'उपवीतिने' यजुः १६।१७ 'कार्ष्णं वसानो दीक्षितो **दीर्घश्मश्रुः**' अ० ११।५।६ इति वेदे पुंल्लिंगदर्शनात् पुरुषस्यैवोपनयनं तन्मूलक ब्रह्मचर्यञ्च। नहि स्त्री 'दीर्घश्मश्रुः' भवति। 'वर्जयेद-जिनं चीरं' इति कार्ष्णमृगचर्मरहितापि भवति पराशरमाधवोद्धृत (अ०-आ० का० पृ० ४८५) यमवचनानुसारम्। अत एव भवत्प्रमाणितसायणाचार्येणापि— "स्त्रीशूद्रयोस्तु सत्यामपिज्ञानाऽपेक्षायाम**उपनयनाऽभावेना**ध्ययनराहित्याद् **वेदेऽधिकारः प्रतिबद्धः**। धर्मब्रह्मज्ञानं तु पुराणादिमुखेनोत्पद्यते। तस्मात् **त्रैवर्णिक पुरुषाणां** वेदमुखेनार्थ ज्ञानाधिकारः इति स्वऋग्वेदभाष्यभूमिकायामुक्तम्। एवं श्रीमद्भागवतेऽप्युक्तम् —।'**स्त्री-**शूद्र-द्विजबन्धूनां **त्रयी न श्रुतिगोचरा**। इति भारतमाख्यानं कृपया मुनिना कृतम्' १।४।२५। महाभारतेऽपि—'न च स्त्रीणां क्रियाः काश्चिदिति धर्मो व्यवस्थितः। निरिन्द्रिया **ह्यशास्त्राश्च** स्त्रियोऽनृतमिति स्थितिः' अनुशा० ४०।११ 'नास्ति यज्ञक्रिया काचित्' अनु० ४६।१३ अश्मारोहणमारभ्य स्त्रीणां गौर्यर्चनं परम्। पुराणपठनं श्रेयो न वेदाध्ययनादिकम्, इति स्मृत्यन्तरे आ० न० भाष्ये।

अथ च— सद्योवधूनां यथाकथञ्चिद**उपनयनं कृत्वा** विवाहः कार्यः, इतिहारीत वचनं किं मनुते भवान्? यद्येवं तर्हि कस्मिन्नब्दे तासामुपनयनं केन च प्रमाणेन मंस्यते?। यदि ८-११-१२ वर्षेषु द्विजत्वात्; तर्हि विवाहमपि कन्यानां किं ८-११-१२ अब्देषु मंस्यते श्रीमान् हारीतानुसारम्? अमनने सति तद्वचसः किं मूल्यम्? उद्धरणस्य वा किं फलम्? यत एतेन तु भवत्पक्षखण्डनं जायते। ८-११-१२ वर्षतो भिन्नावस्था उपनयनस्य न कुत्रचित् वैधी मान्यता, किं भवद-

गुरुकुलेषु १७-२४.वर्षोत्तरं भवन्ति ब्रह्मचारिणामुपवीतानि ? यद्येवं तर्हि किं ते वेदमपि २४ वर्षोत्तरमेव प्रारभन्ते ? यतो वेदारम्भस्योपनयनमूलकत्वम् । आशामे श्रीस्नातकस्योत्तरणावसरे गते कासविकासो न स्यात् ।

अग्रे—'प्रावृतां यज्ञोपवीतिनीमभ्युदानयन जपेत् सोमो ददद्' इति गोभिलवचस्तु श्रीमता व्यर्थमद्धृतम् । इदं विवाह. प्रकरणम् । तत्र 'यज्ञोपवीतिनीम्' इति पारिभाषिकः शब्दो ननु स्त्रीणामुपनयनसाधकः । सा परिभाषा चेयम् 'दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंसे प्रतिष्ठापयति दक्षिणकक्षमन्ववलम्बं—भवत्येवं यज्ञोपवीती भवति" गोभिल० १ २।२ कौशं वा ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमुद्धृत्य यज्ञोपवीती भवति' द्राह्या० गृ० सू० १।१।६।७ इति यज्ञोपवीतित्वपरिभाषा; तेन 'प्रावृतां यज्ञोपवीतिनी' मित्यस्यायमर्थो निष्पन्नो यद् यज्ञोपवीतवत् कृतोत्तरीयाम् इति चन्द्रकान्ततर्कालङ्कारकृतभाष्ये द्रष्टव्यम्। केवलं यज्ञोपवीतसूत्रस्यैव सव्येंऽसेप्रतिष्ठापनं यज्ञोपवीतित्व न भवति, किन्तु, उत्तरीयादिकवस्त्रस्याऽपि । तथा चात्र गोभिल प्रमाणं स्मर्त्तव्यम्—'यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वाऽपि कुशरज्जुमेव' गो० १।२।१ इति । स्त्रिया यज्ञोपवीतसूत्रं काऽपि न निर्दिष्टम्, तत्र वस्त्रमेव यज्ञोपवीतवत् स्थाप्यते । अत एव सायणभाष्यीयेऽथर्ववेदे विवाहसंस्कारे १४ काण्डारम्भे कौशिकसूत्राधारेण लिखितम् "यज्ञोपवीतवद् वाधूयं वस्त्रं बध्नाति" । एतदेवाभिलक्ष्य भवदृषिणा ( स्वा० द० ) ऽपि विवाहसंस्कारविधौ १३५ पृ० लिखितम्—'इस मन्त्र को बोल के वधू को वर उपवस्त्र देवे । वह उपवस्त्र को यज्ञोपवीतवत् धारण करे' । अन्यान्यपि स्वा० दयानन्दस्योद्धरणानि सन्ति, यैः स्पष्टं प्रतीयते यत्-सोपि स्त्रीणामुपवीताधिकारं न मेने, आवश्यकतानुसारमुपस्थाप्येरन् ।

सर्वमान्यो मनुः स्त्रीणां कृते किं वक्तीति द्रष्टव्यम्—**नास्ति स्त्रीणां क्रिया मन्त्रैरिति** धर्म्मो व्यवस्थितः । निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थिति ९।१८ 'नास्ति स्त्रीणां पृथग् यज्ञो ५।१५५ 'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः' २।६६। 'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ( औपनायनिको मत इति पाठान्तरम् । ) पतिसेवा गुरौ वासो, गृहार्थोऽग्निपरिक्रिया' २।६७ पत्न्यमन्त्र बलिं हरेत्' ३।१२१। 'न ब्रह्म व्याहरेद् योषिद् बालः शूद्रोऽपजातिकः, इति आत्मानन्दभाष्यधृतं स्मृत्यन्तरवचः । 'नासां द्विजातसंस्कारो न निवासो गुरावपि' भागवत० १०।२३।४२ इति मनोरनुवादः, द्विजाति संस्कारः—उपनयनमिति श्रीधरस्वामी । 'स्त्री-शूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' श्रीमद्भाग० १।४।२५ स्त्रीणां-शूद्रान्धपंगूनां बधिराः पतिताश्च

ये।" क्लीवानां नैव काणानां वेदविद्याऽधिकारिता' इति वृद्धमनुवचनमात्मानन्दभाष्ये ऽस्यवामीयसूक्ते। 'तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः' ...ज्ञय० स्मृ० १ १३। 'नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः' व्यास स्मृ० १।१५। 'अथाऽस्य (पुत्रस्य) मूर्धानमवजिघ्रति 'प्रजापतेष्ट्वा' इत्यर्द्धमन्त्रैः स्त्रियै मूर्धानमेवाऽवजिघ्रति तूष्णीम् पारस्क० १।१८।३-६ तूष्णीमित्यस्य हरिहरभाष्ये—विनामन्त्रेणेत्यर्थः। 'एतयैवावृता स्त्रियास्तूष्णीम्' गोभि० २।६।२३ आवृतैव कुमार्यै आश्वला० गृ० १।१५।१२ कुमार्यास्त्वमंत्रकं कुर्यादिति तत्र गार्ग्यनारायणवृत्तिः। 'आवृतश्च आस्त्रीभ्यः' आपस्त० गृ० १।२।१५ अत्रापि स्त्रीणां क्रिया आवृता-मन्त्ररहिता कथिता। तूष्णीं स्त्रियाः' द्राह्यायणगृ ३।१।१३ अत्र रुद्रस्कन्दवृत्ति - मन्त्रवर्जं स्त्रियाः कुर्यात्...उपनयनं तु नास्ति तच्छ्रुतिवचनात्-इत्यादि। 'सर्वं स्त्रिया विमन्त्रं तु कार्यं कायविशुद्धये, ४।१४७ इति भवत्प्रमाणित-वृहत्पराशरस्मृतौ। तेन 'मनुस्मृतिविरुद्धा तु या स्मृतिः सा न शस्यते' इति बृहस्पतिप्रमाणाद् मनुभिन्नस्मृतौ भवत ऋषे (?) रपि विप्रतिपत्ति वाद् हारीतवचनस्यैकस्य न किमपि मूल्यम्। अथ च तद् युगान्तरविषयमुक्तमेव तथैव पराशरमाधवादिभिर्व्यवस्थापितम्। प्रतिकल्पमन्वन्तरं सृष्ट्या भिन्न-भिन्नपरिवर्तनानि भवन्ति। भवत्स्वामी ऋग्वेदादि भाष्यभूमिकायाः २२ पृष्ठे लिलेख —'मन्वन्तरपर्यावृत्तौ सृष्टेर्नैमित्तकगुणानामपि पर्यावर्त्तनं किञ्चित् किञ्चिद् भवति' सृष्टि का स्वभाव नया पुराना प्रति मन्वन्तर में बदल जाता है पृ० २४। एतदीयपोषको यमवचने 'पुराकल्पे' इति शब्दः। 'नहि शूद्रसमाः स्त्रियः' इति प्रमाणमुपस्थापयता श्रीमता शूद्रस्य यज्ञोपवीतवेदयोरनधिकार. स्वस्वामिविरुद्धोपि स्वीकृतः इति श्रीमते धन्यवादाः। नहि शूद्रासु ब्राह्मणक्षत्रियवैश्या जायन्ते' इति भवद्दत्तं प्रमाणं भवदभिमतवर्णव्यवस्थाखण्डकम्। 'तस्मात् स्त्रियो मन्त्रतः संस्कार्याः इति वचनं स्मृत्याद्यनुरोधात् विवाह संस्कारविषयकम्। एतदेवाऽभिप्रेत्य व्यासः— विवाहोमन्त्रतस्तस्याः शूद्रस्याऽमन्त्रतो दश १ १६ सचाऽपवाद ऐकदेशिको न किल सार्वदेशिकः। यथा-नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते मनु २।१७२ इति प्रमाणेन अनुपनीतस्य वेद मन्त्रपाठाधिकाराभावेऽपि मृतपितृश्राद्धादौ अनुपनीतस्यापि बालकस्य वेदमन्त्रपठनं काचित्कं दर्शितम् तथैव स्त्रीणामपि विवाहे क्वचिद् विशिष्ट मन्त्र...पाठमात्रं दर्शितमनुपनीतत्वेऽपि, तथापि तत्र बाहुल्यं वेदेतर (गृह्यसूत्र)

मन्त्राणाम् । तेन न तासां यज्ञोपवीताधिकारो वेदपाठाधिकारो वौत्सर्गिकः । वे नियमा उत्सर्गमेव मत्वा निर्मीयन्ते । अपवाद एकदेशे स्वांशे चरितार्थो भवति । स उत्सर्गं बाधितुं न क्षमः, अत एव महाभाष्यकृतोक्तम्—'नैश्वरं आज्ञापयति' नापि धर्मसूत्रकाराः पठन्ति—अपवादैरुत्सर्गा बाध्यन्तामिति, १।१।४७ सूत्रे । कियती स्पष्टता ।

—अथ च 'यज्ञोपवीतिनीं' गो २।१।१६ इति विवाहप्रकरणस्थम् । तस्य तत्त्वं विशदीकृतचरम् । यदि तत्रोपवीतमिष्टं स्यात्, तर्हीदं मंस्यते यद्विवाहात्प्राक् परत्र च तासां यज्ञोपवीतयुक्तता न भवति, विवाहे चैकदेशिता । अन्यथा यथा 'यज्ञोपवीतिनीम्' इति स्त्रीविशेषणं दत्तं तथा 'यज्ञोपवीतिनम्' इति पुरुषविशेषणं तत्र कुतो न दत्तम्? कुतः स्त्रिया वैशिष्ट्यं दर्शितं विवाहे—? किं पुरुषस्य तत्र न यज्ञोपवीताधिकारः? आशासे श्रीस्नातकस्यैतन्मुख्यप्रमाणसमाधिना सर्व्वा भ्रान्तयो निरस्ता स्युः ।

अग्रे व्योमसंहितावचसा उर्वशी-यमी-शचीप्रभृतिदेवयोनिस्त्रीणां वैदिककर्मण्यधिकारो ज्ञाप्यते भवता । परं मनुष्य-देव-योन्योर्मिथो भेदादुभयोः सर्व समानाधिकारा न भवन्ति । उक्तं शतपथे-'देवयोनिरन्यो मनुष्ययोनिरन्यः' ७.४।२।४० तेनाऽत्रापि तुच्छता ।

अग्रे श्रीस्नातको म० म० श्रीशिवदत्तान् मानयति । तैस्तु—'बौधायनकात्यायनापस्तम्बादिसकलकल्पसूत्रोपज्ञातृसर्वज्ञातृमहर्षिवाक्यानुरोधेन ब्राह्मणभागेपि वेदस्य निर्णीतत्वेन ब्राह्मणभागे वेदत्वममन्यमाना रूढ़िसामाजिका आविकृतबुद्धय एव' इति निरुक्तभूमिकायां मन्त्रवद् ब्राह्मणभागस्यापि वेदता मता । २।११।१ निरुक्तटिप्पण्यां जन्मना वर्णव्यवस्था २।१६ २ नि० टिप्पण्यां वेदे इतिहासः, सिद्धान्तकौमुद्या उत्तरार्धे स्वा० दयानन्दस्य वेदाङ्गप्रकाशे त्रुटय इत्यादिकमन्यत्रापि यत्किमपि स्वमतं दर्शितं किं तद्भवान्मन्यते ? यदि न तर्हि तेषां नामोल्लेखो व्यर्थः । अधुना भवदुद्धृतप्रमाणानि परीक्ष्यन्ते 'प्रावृतां' इति गोभिलीयसूत्रस्याशयोस्माभिर्दर्शितचरः । वसिष्ठस्तु पञ्चमाध्यायारम्भे 'अस्वतन्त्रा स्त्री पुरुषप्रधाना **अनग्निरनुदक्या** चानृतमिति विज्ञायते; तस्या भर्तुरभिचार उक्तः प्रायश्चित्तरहस्येषु; इत्यादिना स्त्रिया अग्निहोत्रादिक निषेधति । एवम् 'अस्वतन्त्रा धर्मे स्त्री' ति १६ अध्याये गौतम आचष्टे । एवं 'प्रव्रज्या मन्त्रसाधनम् ......स्त्री शूद्रपतनानि षट्' १३३ इत्यत्रिराचष्टे । तेन तस्याः पतिरेव सर्वं करोति, सा च फलभाग्भवति । तेनैव वसिष्ठस्य पत्नीत्यत्र भाष्यानुसारं वसिष्ठकर्तृकयज्ञस्य फलभोक्त्रीत्यर्थः स्वीकृतः । तेन 'सान्निध्य-

पुरातनः इत्यस्य 'साबित्र्यैनमः स्वाहा वा' इत्यादि मन्त्रे तात्पर्यम्। वेदभिन्ना अपि मन्त्रा आख्यायन्ते–इति वक्ष्यते। वस्तुतस्तत्र सावित्रीनामक पतिव्रता स्त्रीस्मरणम् . येन पातिव्रतदार्ढ्यं स्यात् अथ च हवनादिकं ब्राह्मणादिद्वारापि कार्यते; तदापि फल प्राप्यते क्रियायाः परगामिफलमपि भवति तेनैव विप्र आत्मोद्देशेन यजने 'यजे' इति परोद्देशेन च 'यजामी' ति वक्ति वेदाङ्गव्याकरणानुशासनात् अथ चात्र 'सावित्र्याः शिरोभिः,' २१ ७ इति पाठः; शिरोमन्त्रश्च 'आपो ज्योतिरसोऽमृतं' इति, स भवदभीष्टवेदे नास्ति अथ च मन्त्रात् पृथक् कृतस्तदशो वेदो न भवति मीमांसानुसारम्; ऊहितत्वात्। तेनात्र न काप्यनुपपत्तिः दुहिता मे पण्डिता जायेत' शत० १४।६।४।१६ अत्र पण्डिता इत्यस्य बुद्धिमतीत्यर्थः पण्डा बुद्धिः। अपठता अपि बुद्धिमत्यो भवन्ति। शतपथे १४।६ ४ १३ पुत्रो मे वेदमनुब्रुवीत, १४ कण्डिकायां 'पुत्रो मे द्वौ वेदावनुब्रुवीत' १५ कण्डिकायां 'पुत्रो मे त्रीन् वेदाननुब्रुवीत' १७ कण्डिकायां 'पुत्रो मे सर्वान् वेदाननुब्रुवीत, इत्यङ्कितम्। परं दुहितुः कृते तु १६ कण्डिकायां पण्डितत्वमात्रमुक्तं न वेदानुवचनम् , तेन तस्या वेदाधिकारेनिषेधः सिद्धः। 'अथ य इच्छेत् पुत्रो मे पण्डितो......जायेत, सर्वान् वेदाननुब्रुवीत' शत० १४ ६ ४ १७ अत्र पुत्रे पण्डितत्वाद्वेदानुवचनं पृथङ् निर्दिष्टं दुहितरि च न। तेन दुहितुर्वेदानुवचने निषेधः सिद्धो यतस्तत्र दुहितुः कृते पुत्रवद्वेदानुवचनं न दर्शितं वेदेन।

ऋत्विगादयः स्वयं विधिमाचक्षते यदेवमेवं कार्यम् स्त्रीभ्य एव किमु, ते तु पठितपुम्भ्योपि कथयन्ति यदेवमित्थं विधेयम्, अन्यथा पठितारः स्वयं विधीन् कर्त्तुं शक्नुयुः, कथमृत्विगादय आकार्येरन्? अथ च ऋत्विगादिप्रोक्तबिधिर्लौकिकसस्कृतज्ञानेपि कर्तुं पार्यते। न खलु सनातनधर्मः स्त्रीणां लौकिकशास्त्रपठनं निषेधति, किन्तु वैधवेदपठनमात्रम् अथवाऽपठनेपि यदि तास्तांस्तान् विधीन्नाप्यवबुध्येरन्; तथापि न्यकथनादेव तथा विधेयं भवत्येव। जातकर्मादिसंस्कारेषु मन्त्राणां भावान् किं बालो बोद्धुमलम्?। अतो भवदृषिः संस्कारविधेर्भूमिकायां लिखति यहां सब मन्त्रों का अर्थ नहीं लिखा है क्योंकि इसमें कर्मकाण्ड का विधान है...यहां तो केवल क्रिया करनी ही मुख्य है' पृ० २।

'सन्ध्याकालमनाः...नदीञ्चेमां शुभजलां सन्ध्यार्थे' सुन्दर० १४ ४६ अत्र प्राचीनटीकाकारैः 'सन्ध्याकालिकस्नानार्थे' इत्यर्थः स्वीकृतो यो रामायणशैलीदर्शनाच्छुद्धः प्रतीयते। "सन्ध्यार्थे सन्ध्याकालक्रियमाणस्नानाद्यर्थे, रात्रि-

ऽपि हनुमतोऽस्य वचस: प्रवृत्ते: सन्ध्याशब्देनात्र प्रात:कालो विवक्षित:, तत्र वै यस्नानादौ चास्त्येव स्त्रीणामप्यधिकार: । किञ्च—सम्यग् भगवद्-ध्यानस्यैव सन्ध्या पदार्थत्वेनाऽस्त्येव तत्र स्त्रिया अधिकार:, गायत्रीमन्त्रेण तदर्थस्मरण-पूर्वकध्याने तु द्विजस्यैवाधिकार इति त्वन्यत्'' इति टीकाकारो रामाभिराम: सुन्दर० १४।४६ । अत्र नदीं चेमां शुभजलां' इति विशेषण स्थाने ता... ग्राहकम् । तेनैवाग्रेप्युक्तम्—'आगमिष्यति सावश्यमिमां शीतजलां नदीम्' १५.५.१ शीतजलामिति विशेषणमपि स्नानसूचकम् । अथवा सन्ध्यार्थेपि का नो हानि: । परमात्मनो ध्यानं सन्ध्या । सा वेदेतरश्लोकानामपि भवति । सन्ध्यायां वेदमन्त्राणामनिवार्यता न भवति, तद्भिन्ना अपि मन्त्रा भवन्ति । आर्यसामाजिकसन्ध्यायाम् ,'ॐ भू: पुनातु शिरसि' 'ॐ वाक् वाक्' 'ॐ भू: ॐ भुव: ॐ स्व:, ॐ मह:, जन:' इत्यादिका:, हवने च 'वाङ् म आस्येस्तु' इत्यादयश्चार्यसमाजाभीष्टवेद तो भिन्ना अपि मन्त्रा दृश्यन्ते । जब तक आप जनेऊ धारण न कर सकें तब तक यह प्रार्थना किया करो, स्वामी जी ने यह जप भी सिखाया 'ॐ नम: परमेश्वराय सच्चिदानन्दाय सर्वगुरवेनम:' इति श्रीमद्दयानन्द प्रकाशे सत्यानन्दसङ्कलिते, १२० पृष्ठे द्रष्टव्यं यत्र स्वामिनाऽनुपनीतानां कृते वेदभिन्ना सन्ध्यादर्शिता । तथाऽनुपनीताया: सीताया विषयेप्य वधेयम् अथ च सीताऽमैथुनोत्पन्नासीदित्यस्माभिर्वक्ष्यते सीताविवाह वयो निर्धारसमये, *महाश्वेता चामानुषयोनिरासीत् । मैथुनामैथुनयोन्यो: सर्वे समानाधिकारा न भवन्ति । अन्यथा एकस्मात्परमेश्वरादुत्पन्नयोरादिमस्त्रीपुंसयोर्भगिनी-भ्रातृभूतयो: परस्परं मैथुनम 'असंयदेतन्मनसो हृदो ये भ्राता स्वसु: शयने यच्छयीय' अ० १८।१।१४ पापमा य: स्वसारं निगच्छात् ऋ० १०।१०।१२ अ० १८।१।१४ न ते भ्राता सुभगे ! वष्ट्येतत्' ऋ० १०।१०।१२ अ० १८।१।१३ 'आ घा ता गच्छानुत्तरा युगानि यत्र जामय: कृणवन्नजामि' ऋ० १०।१०।१० इति वैदिकसिद्धान्त विरुद्ध स्यात् अथ च महाश्वेता स्वपक्षस्य जन्मत्रयग्रहणेपि न क्वापि जाता इति मानुषनियमरहितत्वं तस्यां स्पष्टम् । अथ च—त्र्यम्बकस्य दक्षिणां मूर्त्तिमाश्रित्यामुखीं...शङ्कराभ्यर्चनायै स्वयमुद्यतां...स्नपनार्द्रालिङ्गसङ्क्रान्तप्रतिबिम्बतया हृदयमिव प्रविष्टां हरस्य' इत्यादि कादम्बरीदर्शनान्महाश्वेताया मूर्त्तिपूजनमेव सन्ध्योपासनमासीद्ब्रह्मन्मतखण्डकमिति द्रष्टव्यम् । तन मैथुनामैथुनयोन्यो: समानाधिकाराभावात् सीतायां यदि साधारणस्त्रीवैलक्षण्यं दृष्टं स्यात् ; तर्हि न तेन व्यवस्था भवितुमर्हति

*शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति, वेदा० शाङ्क० ...

'कौशल्या मन्त्रवत् कृतमङ्गला' वेदाभज्ञा अपि मन्त्राः कथ्यन्ते। यथा 'यज्ञोपवीतं परमं पवित्र' मित्यादयो वेदव्यतिरिक्ता अपि मन्त्रा भवत्स्वामिना मताः संस्कारविध्यादौ। तेन नास्मत्पक्षे दोषः। 'तारा मन्त्रविद् विजयैषिणी' किष्कि० १६।१२ अत्र विजयमूलको मन्त्रो विचार पर्यायः, स्तद्विद्। नात्र वेदमन्त्रार्थः। अथ च वेदेतरेपि मन्त्रा भवन्ति, यथाभवत्स्वामिना—'स नुगायेन्द्राय नमः... भद्रकाल्यै नमः' इन मन्त्रों से यथोक्त दिशाओं में भाग धरना सं० वि० २ २ पृ०, सत्यार्थ० ६२ पृ० इमेपि मन्त्रा मताः, नचेमे वेदस्य। एवं ताराविषयेपि तादृशा मन्त्रा ज्ञेयाः। हठाद् वेदमन्त्राणां वचनमेव तत्काले मन्येत तर्हितदृष्फलं तया प्राप्तम्, यत्तत्पतिर्मृतः।

'ब्रह्मचर्येण कन्या' अत्रोत्तरं प्रागुक्तम्। नात्र कन्याया वेदाध्ययनमुक्तं किन्तु मैथुनास्पृष्टतैवेह ब्रह्मचर्यार्थः। अन्यथोक्तमन्त्रोत्तरार्धेन 'अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीर्षति' इत्यनेन विरोधः स्यात्। 'उपक्रमोपसंहाराभ्यां हि वाक्यैक्यत्वमवगम्यते' वेदान्त० शाङ्कर० १।१।३१। योगदर्शनेप्युक्तम्—'ब्रह्मचर्यं गुप्तेन्द्रियोपस्थस्य संयमः' २।३०। सायणो ब्रह्मचर्यस्यान्वयं यूना पत्या सह मन्यते। कन्या, तेन ब्रह्मचर्येण युवत्वगुणोपेतं पतिं विन्दते। तत्र पत्युर्युवत्वे ब्रह्मचर्यं हेतुरूपेण दत्तम्। अथचास्मिन् मन्त्रे तेन ब्रह्मचर्यस्य व्याख्यानमूर्ध्वरेतस्कत्वं मतम् अन्यथा किं बहुनापशुजातिरपि ब्रह्मचर्येण स्वाभिलषितं फलं लभते इत्याह' इति सायणवाक्यं व्याकुप्येत। तेनैवाग्रे तेन 'ब्रह्मचर्यस्य' ऊर्ध्वरेतस्कत्वार्थोक्तः, यतः स स्त्रीणां यज्ञोपवीतं वेदाध्ययनं च न मेने इत्यस्माभिस्तस्य प्रमाणं प्रागुपन्यस्तमेव।

भीमा जाया ब्राह्मणस्योपनीता' ऋ० १०।१०६।४ इत्यत्र तु श्रीस्नातकेन जनताचक्षुषि धूलिप्रक्षेपणं व्यधायि। अत्र उपनीतेत्यस्य उपस्थापितेत्यर्थः; नात्र किमपि यज्ञोपवीतप्रकरणम्। न च भवत्प्रमाणितेन सायणेन सोर्थः स्वीकृतः, श्रूयतां सायणार्थः— ततः भीमा शत्रुरूपाणां पापानां भयकरी पतिवत्नी एषा जाया ब्राह्मणस्य—बृहस्पतेः ( अयमर्थः ऋ० १०।१०६। २—४-५ इतिमन्त्रान् 'ब्रह्म वै बृहस्पतिः' ऐत०२।३५ इति शत० ५।१।१।११ ब्राह्मणञ्चानुसृत्य कृतः) उपनीता—समीपं देवैः स्थापिता। तपः प्रभावः दुर्धानामपि परमे व्योमन्—व्योमनि उत्तमे स्थाने दधाति-विदधातु खलु। तस्मादेनामपि देवतापरिग्रहरूपस्तपोमहिमा बृहस्पतेरन्तिके स्थापयति"। एतदादिकमन्त्रे चन्द्रापहृतबृहस्पतिपत्न्यांस्तारकाया बृहस्पतिपार्श्वे प्रापणेतिहासः पुराणवज्ज्ञेयः; अतएवोक्तं—'सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः' ऋ० १०।१०६।२ यामीदुस्तारकैषा...' अ० ५।१७।४ तेन जायामन्वविन्दद् बृहस्पतिः सोमेन

नीताम्' ऋ० ।१०६।५ इत्यादि । अथ च भवन्मते वेदे रूढयोगरूढ्यभावात् 'उपनीता' इत्यस्य यज्ञोपवीतार्थे न शक्तिः । तेन भवत्पक्षोऽसिद्धः ।

पुनरग्रे श्रीमान् 'यत्परः शब्दः स शब्दार्थः' इति न्यायमुपन्यस्य जीवज्जगत्सु मम उत्तरपक्ष स्वपारम्परिकप्रकृत्यनुसारं मुक्त्वा मत्पूर्वपक्षस्य वाक्यं मन्मतं वक्ति । एतदेव जनता-प्रलम्भनं नाम । अस्माभिस्तु लेखे स्त्रीणां विवाह एवोपनयनमित्यनेन मनुवचसा स्त्रीणामुपवीतनिषेधमात्रता साधिता न विवाहावस्थासमता इति ४।३ अङ्कस्य १६ पृ० २१-२२-२३-२४-२५ पङ्क्तिषु मम शब्दा द्रष्टव्याः । श्रीमतैतन्ममोत्तरवाक्यं निह्नुत्य छलं क्रियते । एतत्पूर्वपक्षे स्वीकृतेपि नास्मन्मतहानिः, किन्तु भवतः । यत्तु-श्रीमता ब्राह्मणादीनां षोडशादिपर्यन्तं यज्ञोपवीतानतिक्रमणस्य प्रमाणान्युपन्यस्तानि, तानि व्यर्थानि; यतो न तानि मूलविधिवाक्यानि । अत एव न तैर्व्यवस्था । अन्यथोपनयनं भवद्भिः सदा १६–२२–२४ वर्षेष्वेव कार्यं स्याद् द्विजानाम् । वेदारंभोपि च १६–२२–२४ वर्षतः कार्येत उपनयनपूर्वकत्वात्तस्य । परं नैवमस्ति । मूलसिद्धान्तस्तु उपनयनस्य ८–११–१२ वर्षाणां श्रीमतापि—'अष्टैकद्वादशाब्दानि सगर्भाणि' द्विजन्मनाम् । **मुख्यः कालो** व्रतस्यैष ह्यन्य उक्तो विपर्यये' ४।१६२ इति स्वप्रमाणित बृ० परा० स्मृत्यनुसार मस्यते । तर्हि तदनुसारं विवाहस्य **मूलावस्था ८–११–१२ एव श्रीमतापि स्वीकर्तव्या स्याद्, आपद्येव च षोडशादिः** । चित्रम् श्रीमतात्र लेखने स्वसिद्धान्तखण्डनमपि न दृष्टम् । मन्मते तु न कापि हानिरिति दर्शितचरम् । अथ चोक्तसिद्धान्तेपि स्त्रीणां रजस्वलात्वं विशिष्टम् । पुरुषाः खलु न रजस्वला भवन्ति । अत एव दृष्टान्ते उपमायामपि वा सर्वदेशता न ग्राह्या भवति । अतो न्यायदर्शने उक्तम्—सिद्धञ्च किञ्चित्साधर्म्यादुपमानम्' ५।१।५ तेनोपमायां सर्वसाधर्म्यानुपादानात्प्रागुक्तसिद्धान्तेपि न कोपि दोषः, स्त्रीणां रजस्वलात्वविशिष्टत्वात् । रजस्वलात्वे च विवाहनिन्दायाः शास्त्रेषु स्पष्टशब्दैरुक्तत्वात् । मयाऽऽर्तुमतीविवाहे बहूनि प्रमाणानि दत्तानि । सम्पादकमहोदयानुकूल्ये जाते प्राप्तलेखोपसंहृतावपि प्रदर्शयिष्यमाणानि; यत्र वेदप्रमाणमपि दीयेत । अत एव मम न स्वयमभ्युपगतः पक्षपातः, किन्तु शास्त्रवचनेषु पक्षपातः । श्रीमता तु १७–२४ वर्षे विवाहस्य विधिवाक्यमेकमपि न दर्शितमिति शास्त्रज्ञा जनता स्वयं पश्यति । 'पतिकामा' दिपदेन १७।२४ इति नियतवर्षाणां प्रसह्य निष्कासनमुपहासास्पदमिति साधित चरम् । अन्यथा जातकर्मणि पृ० ६० पुत्रं प्रति 'अश्माभव परशुर्भव' इतिकथनात्तदवस्थापि तद्योग्या यौवनस्य मन्येत । परं नैवमेतत् ।

अग्रे श्रीमता वैवाहिको विधिः स्त्रीणां २।६७ इत्यत्र विवाहविधिरे स्त्रीणां वैदिकः संस्कार उपनयनाख्यो मन्वादिभिः स्मृतः...तस्माद् विवाहा रुपनयस्थाने विधानादुपनयनादेर्निवृत्तिरिति' स्पष्टमपि कुल्लूकव्याख्यानम् प्रमाणं मतम्, ४८ पृष्ठे च तस्यैव कुल्लूकस्य प्रामाण्यं मतम् । धन्याः श्रीमन्तः ! 'सर्वं वाक्यं सावधारणं' मिति नयेन तत्र व्याख्याने एवकारः कुल्लूकेन शुद्ध एवोक्तः। पस्पशाह्निके महाभाष्ये—'अब्भक्षो वायुभक्षः' इत्यत्र 'अप एव भक्षयति वायुमेव भक्षयति' इत्यर्थः कृतः, परन्तु मूले तत्र एवकारो न दृश्यते। परं पक्षपातग्रस्तः श्रीस्नातकः कथमिदं विवेक्तुं प्रभवेत्। एवं 'पतिसेवा गुरौ वासः' इत्यादावपि पूर्वपूर्वस्योत्तरोत्तरस्थानापन्नता स्पष्टा । अत्र टीकाकृदन्तराणामपि संवादः। तेन तस्माद् विवाहादेरुपनयस्थाने विधानादुपनयनादेर्निवृत्तिरिति कुल्लूकभट्ट व्याख्यानं युक्तम्। अन्यत्रैवमेव मनुसर्वस्यदर्शनात् । अत एव भागवतमहाभारतयोर्मनुश्लोकानां भावनिर्देष्टा श्रीमान् व्यासो वक्ति— 'नासां द्विजाति संस्कारो न निवासो गुरावपि' भाग० १०।२३।४२ 'स्त्रीणामुद्वाह एको वै वेदोक्तः पावनो विधिः' ४।१७२ इति भवत्प्रमाणित बृहत्पराशरस्मृतौ ।

अवशिष्टविषयोऽस्माभिः 'विवाहवयोविवेचना (४), इति नाम्ना 'श्री' पत्रस्याग्रिमाङ्के प्रकाश्येतेतिशम् ॥ अत्र च लेखे काश्चिन्मात्रा वर्णाश्च केचित् त्रुटिताः; ते पाठकैः स्वयं ज्ञेयाः ॥

॥ इति (अपूर्ण) ॥



# सं० १९९४ परिषदधिवेशनकार्यम्

—:०:—

वर्षेऽस्मिन् कार्तिकमासपर्यन्तमधिवेशनयमेव न कार्याडम्बरव्यग्रत्वात्संपन्नम्। तेनैव कारणेन श्रियः पत्रस्य चाषाढाङ्क प्राकटयं समजनि।

...वैशस्य पञ्चदशे प्रविष्ठे परिषदधिवेशने पूर्वमन्तरङ्गसभा... "परिषदुपमन्त्रिणा मण्डित श्रीवरविरचित 'कथाकौतुक" काव्यस्य पुनः ...धनविषये" आसीत् अनन्तरं पं॰ शिवनाथ शास्त्री. साहित्यभूषणेन पुरा ...नविषय मधिकृत्य काश्मीरिक सिद्ध श्री श्री ऋषिपवीर ( ऋषिपीर ) पादानां जीवन-चरित्रं सुललितभाषयोर्वर्णितम्। तदनु सभा मन्त्रिणा विसर्जिता॥

आषाढ़मासे परिषदधिवेशनं एस. पी. क्वालेजे Mr. A. S. P. Ayyar M. A., (oxon) I. C. S., मद्रास; इत्येषां मुख्यत्वे महता समारोहेण संपन्नम्। यत्र Mr. K. M. Munshi B. A., LL. B. Advocate. Syndic. Bombay University इदानीं Law and Home Minister ( Bombay ) इत्येभिर्महोदये भारतीय साहित्य इत्यस्मिन् विषये गूढसार चमत्कारगर्भितं अनधीताङ्गलभाषाणं पण्डितानामपि सुज्ञं विस्तरेणोपवर्णितम। समाप्तिकाले अय्यर महोदयेन कथितविषयं स्वमाधुर्यभरितभाषया समञ्जलीकृतम आषाढ़मासस्य व्याख्यानं महाशयै के एम मुंशीभिर्येऽत्यतंन् मोहमर्ह राज्यस्य मन्त्रिणः सन्ति (हिंदि संस्कृत साहित्य विषय) आंगलभाषामधिकृता वर्णितम्। यद्यपि मुन्शी महोदयाः संस्कृतज्ञास्तथापि राज्यकीय महाविद्याले श्री नगरस्य ४. ५ शतं यावत् उपस्थितेषु विद्यार्थिवर्गस्य राज्याधिकारिगणस्य न संस्कृतवतासम्भवैव यत् श्रोतार अनधीत्य संस्कृत विद्या प्रायश आसन् न मुंशी महाशयै आयरमहानुभवैश्च द्विहोराम्। सारगर्भितऽत्यन्तललित सुन्दर भाषयाच प्राचीन भारतवर्षस्य संस्कृत साहित्ये च गौरवं प्रकटी कृतम्। एतादृशानि मनोरञ्जिक व्याख्यानानि महाविद्याले-विरतान्येव बहुमूल्यानि च। साधुवाददानपुरःसरं सभा विसृष्टा॥

श्रावण भाद्रपद अश्विन मासेषु न किमपि सभाकार्यं समजनि ...मती-स्याष्टमे परिषदधिवेशने प्रथमं साहित्यभूषणेन तन्त्रागमविषये व्या...लेखो-तदनु परिषन्मन्त्रिणा गतमासेषु अधिवेशनस्थगत श्रीपत्र प्रकाशन विलम्ब...न सभासदेषूपवर्णितम्। ततः जाड्ड महाशयेन गोविन्द राजानक व... व्याख्यान दत्तम्। यन्तु श्री पत्रे समये प्रकटी भविष्यति। तत... विषये प्रेमनाथ लंगू इत्यनेन प्रस्ताव रूपं पठितम्। अन्ते प्र... समागत-धन्यवाद दानपुरः सदं सभा विसर्जितेति।

शिवनाथ शर्मा

सभा उप...

## सम्पादक समितिः

१. पं० कुलभूषणः डी. पी. एच. ( लण्डन )
२. पं० गोविन्द राजदानः शास्त्री, एम. ए., एम. ओ. एल., एल. टी.
३. पं० जगद्धर जाडू, शास्त्री, एम. ए., एम. ओ. एल.
४. पं० शिवनाथः साहित्य-भूषणः, साहित्य-मणि ।

---

मुद्रक पं० मायाराम लखनपाल, भारती प्रिंटिंग प्रेस, लाहौर

# संस्कृत साहित्य-परिषदः श्रीनगरस्य श्रियश्च नियमाः

**उद्देश्यः—**

परिषदोऽस्याः केवलमेक एवउद्देश्य ... समभा... संस्कृत्य रक्षार्थं प्रचारः।
एतत् प्राप्त्यर्थं (१) नि... श्रीनगर स्थेभ्यश्च शुल्करूपेण ... प्राप्तेन सभासत्त्वमपि च भवेत्।
श्रीःपत्रं सभासदैः सर्वैः रूप्य... ... प्र०
संस्कृतानुरागिभिरस्याः परिषदः सभास... ... पत्र लिखनेन।

**सहायताः—**

परिषदो व्यय पत्रिकाया अस्याः कृते शुल्कादत्यधिकं भवति, परन्तु धनाभावात् वहवः संस्कृतज्ञाः छात्राः ब्राह्मणाश्च विनामूल्येनैव लभन्ते पत्रम्। अतः सहातारूपेण किञ्चिद् धनमस्यै अवश्यमेव संस्कृतोद्धारप्रणयिभिर्दातव्यम्।

**पत्रप्रकाशनसमयः—**

त्रैमासिकं पत्रमिदं सौरवर्षस्य **आसाढ़, आश्विन, पौष, चैत्र** मासेषु निर्गच्छति। पत्र प्रकाशनमासानन्तरमपि पत्रस्यानुपलब्धौ सूचनया पुनरपि प्रेषयिष्यते पत्रम्। मासादनन्तरं तु पत्रं न प्राप्यते।

**पत्रव्यवहाराः**

लेखप्रेषणाय पत्रप्रबंधाय च निम्नाङ्कितेन प्रत्ययेन पत्र... ...तुमती- ...लेखो- विधेयः। ...मू...न

आषाढ़ाश्विन १९९४
जौलाई, अक्तूबर १९३७

कुलभूषणः
परिषन्मन्त्री
श्रियः सञ्चालकः
सम्पादकश्च

सुन्वारबाग, श्रीनगर, (कश्मीर)

